तपसोऽन्ते सुमहतो जातो वृद्धस्य धीमतः ।
पुनर्धन्वंतरिर्देवो मानुषेष्विह जज्ञिवान् ॥
जनमेजय उवाच ।
कथं धन्वंतरिर्देवो मानुषेष्वेव जज्ञिवान् ।
एतद्वेदितुमिच्छामि तन्मे ब्रूहि यथातथम् ॥
वैशंपायन उवाच ।
धन्वंतरेः संभवोऽयं श्रूयतां भरतर्षभ ।
स संभूतः समुद्रात्तु मथ्यमानेऽमृते पुरा ॥
उत्पन्नः कलशात्पूर्वं सर्वतश्च श्रिया वृतः ।
सद्यः संसिद्धकार्यं हि विष्णुर्दृष्ट्वा हि तस्थिवान् ॥
अब्जस्त्वमिति होवाच तस्मादब्जस्तु स स्मृतः ।
अब्जः प्रोवाच विष्णुं वै तव पुत्रोऽस्मि वै प्रभो ।
विधत्स्व भागं स्थानं च मम लोके सुरेश्वर ॥
एवमुक्तः स दृष्ट्वा वै तथ्य प्रोवाच त प्रभुः ।
कृतो यज्ञविभागो हि यज्ञियैर्हि सुरैः सह ॥
देवेषु विनियुक्तं हि विद्धि होत्रं महर्षिभिः ।
न शक्यमुपहोमो वै तुभ्यं कर्तुं कथंचन ।
अर्वाग्भूतोऽसि देवानां पुत्र त्वं तु न हीश्वरः ॥
द्वितीयायां तु संभूत्या लोके ख्यातिं गमिष्यसि ।
अणिमादिश्च ते सिद्धिर्गर्भस्थस्य भविष्यति ॥
तेनैव त्वं शरीरेण देवत्वं प्राप्स्यसे प्रभो ।
चरुमन्त्रैर्व्रतैर्जाप्यैर्यक्ष्यन्ति त्वां द्विजातयः ॥
अष्टधा त्वं पुनश्चैव आयुर्वेदं विधास्यसि ।
अवश्यंभावी ह्यर्थोऽयं प्रागदृष्टस्त्वब्जयोनिना ॥
द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः ।
इम तस्मै वर दत्त्वा विष्णुरन्तर्दधे पुनः ॥

---

20, K3 ins जनमेजय उवाच — (L. 20) K3 4 (marg as above) Ñ2 3 (marg) V1 B3 D1 जन्मनि (for जज्ञिवान्) D5 मानुषे चैव जन्मनि (for ^b) — K3 om the ref K2 G2 om (hapl) line 21 — (L. 22) K2 V2 B D3 D5 6 T1 2 G1–3 तन्मे (for त्वत्तो) — K2 reads lines 23 24 on marg — (L. 23) K2 मन्वन्तरे (for धन्वंतरे) — (L. 24) K1 4 Dn D1 4 भूत स हि, K3 (marg) भूतश्च हि, D1 5 जात स हि, T2 संभव (for स संभूत) K3 भूत स हि समुद्राच्च (for ^a) K3 Dn पुराऽमृते (by transp) — (L. 25) D1 वृत (for वृत) — For line 25, D3 subst

2** समुत्पन्न सकल्दा पूर्वं सर्वश्रिया वृत ।

— (L. 26) K1 जस्य D1 अथ, T3 तत (for सद्य) K1 3 V3 Dn D3–5 ह्यभ्यसन्निसिद्धि (K1 °स्मर्थ, Dn °सिद्ध)कार्यं हि, D2 वेवेशो सिद्धिकार्यं हि (for ^a) K1 Ñ1 3 V B Dn D3–6 T G विष्णु (for विष्णुर्) — (L. 27) V3 तम् (for स्तम्) B1 समत (for स स्मृत) — (L. 28) B तनयोऽस्मि तव प्रभो (for ^b) — (L. 29) T3 G1 2 भागान् (for भाग) Ñ2 3 V D2 मम लोकेश्वरेश्वर (for ^d) — (L. 30) B3 T1 उक्त्वा (for उक्त) K4 कृष्णो (for दृष्ट्वा) G2 तथा (for तथ्य) T2 प्रभुम् (for प्रभु) — Before line 31, D2 5 ins विष्णुरुवाच — (L. 31) K4 Ñ2 3 D1 G3 यज्ञियैर्हि, V3 यज्ञिकैर्हि, T2 यज्ञैश्च हि, G1 यज्ञैश्च हि, G3 तव चैव (for यज्ञियैर्हि) K3 Ñ3 (marg) V1 B Dn D3 पुरा (for सह) — K3 reads line 32 on marg — (L. 32) K1 4 Dn विधिहोत्रं (K1 °युक्त), D1 हि नियुक्त (for विनि°). K1 4 Ñ3 V B1 2 Ds1 D1 3 6 T2 G1 3 विधिहोत्र, K3 Dn विनियुक्त, D1 विद्धि हौत्र (for विद्धि होत्रं) G3 मनीषिभि (for महर्षिभि) — (L. 33) K1 उपभुक्त, Ñ3 V1 B1 3 °होम, Dn D5 T3 °होमा, D3 (marg) °भोक्तु, D4 °हौत्रे, D2 °भागो, T2 G2 °भोग, G3 5 °भोगो (for °होमो) T2 G3 स्थिरे, G1 5 स्थिरी (for तुभ्य) — For line 33 T4 subst

3** न शक्यमिह वै कर्तुं मया तुभ्य कथंचन ।

— (L. 34) T3 G1 हि भूतानां (for ऽसि देवानां) K1 तव, V1 3 T3 पुत्रम् (for पुत्र) D3 ईश्वर (for ही°) — T2 om line 36 — (L. 36) D3 G1 गृहस्थस्य (for गर्भ°) — (L. 37) D3 T3 प्राप्स्यसि (for °से) V3 विभो — (L. 38) K2 चतुर्मखैर्, K4 मनुमखैर्, D2 तत्र मखैर्, D3 सह मखैर्, D1 तत्र मखैर् (for चरुमखैर्) B3 जाप्यैर्; Ñ3 V1 2 B3 D1 2 4 6 T2 G1 3 जप्यैर्, D1 यज्ञैर् (for जाप्यैर्) D5 G1 यजन्ति (for यक्ष्यन्ति) — (L. 39) T3 G3 करिष्यसि (for विधा°) — (L. 40) G3 सुदृशम् (for दृष्टम्) — (L. 42) Ñ2 D5 इत्येतस्मै, B1 इति तस्मै (for इमं तस्मै) K1 तत (for पुन) — (L. 43) B1 D5 T1 द्वापरे (for °रं) Ñ2 द्वितीये द्वापरे प्राप्य (for ^a) D1 सौनिहोत्रि (for सौनि°) — (L. 44) D1 चिन्तयन् (for धन्वो) Ñ2 तप (for तस्य) K Ñ2 D1 2 4 T1 G1 4 धन्वी दीर्घतपा K4 D1 °मा)त्मया, Ñ2 2 (marg as above) D2 6 धन्वो दी(Ñ2 °र्घी )र्घतपास्तथा, Dn D3 (marg) s1 T1 4 धन्वन्दीर्घतपा महा, T2 G1, 2 4 धन्वो (G1 धूर्तो) दीर्घतपास्तदा (for ^b) — K2 reads line 45 on marg — (L. 45) D3 तस्यां, G2, 4

द्वितीये द्वापरे प्राप्ते सौनहोत्रिः स काशिराट् ।
पुत्रकामस्तपस्तेपे धन्वो दीर्घं महत्तदा ॥
प्रपद्ये देवतां तां तु या मे पुत्रं प्रदास्यति ।
अब्जं देवं स पुत्रार्थे तदाराधितवान्नृप ॥
ततस्तुष्टः स भगवानब्जः प्रोवाच तं नृपम् ।
यदिच्छसि वरं सर्वं तत्ते दास्यामि सुव्रत ॥
भगवन्यदि तुष्टस्त्वं पुत्रो मे ख्यातिमान्भवेत् ।
तथेति समनुज्ञाय तत्रैवान्तरधीयत ॥
तस्य गेहे समुत्पन्नो देवो धन्वंतरिस्तदा ।
काशिराजो महाराजः सर्वरोगप्रणाशनः ॥
आयुर्वेदं भरद्वाजात्प्राप्येह समिपक्क्रियम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥
धन्वंतरेस्तु तनयः केतुमानिति विश्रुतः ।
अथ केतुमतः पुत्रो वीरो भीमरथः स्मृतः ॥
भीमरथस्यापि सुतो दिवोदासः प्रजेश्वरः ।
दिवोदासस्तु धर्मात्मा वाराणस्यधिपोऽभवत् ॥
एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप ।
शून्या निवेशयामास क्षेमको नाम राक्षसः ॥
शप्ता हि सा मतिमता निकुम्भेन महात्मना ।
शून्या वर्षसहस्रं वै भवित्रीति न संशयः ॥
तस्यां तु शप्तमात्रायां दिवोदासः प्रजेश्वरः ।
विषयान्ते पुरीं रम्यां गोमत्यां सन्यवेशयत् ॥
भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनाम् ।
हत्वा निवेशयामास दिवोदासो नराधिपः ।
भद्रश्रेण्यस्य तद्राज्यं हृतं तेन बलीयसा ॥

जनमेजय उवाच ।

वाराणसीं निकुम्भस्तु किमर्थं शप्तवान्प्रभुः ।
निकुम्भः कश्च धर्मात्मा सिद्धिक्षेत्रं शशाप यः ॥

वैशंपायन उवाच ।

दिवोदासस्तु राजर्षिर्नगरं प्राप्य पार्थिव ।

ताम ( for तां तु ) T1 यो वै ( for या मे ) —( L 46 ) K1 4 ( K3 °ज ) देव सुतार्थाय ( for °) —( L 47 ) D2 प्रहृष्ट ( hypermetric ) ( for तुष्ट ) K3 अब्ज, K3 Dn इन्द, K4 अज ( for अब्ज ) K3 नृप, D5 नृप ( for नृपम् ) —( L 48 ) K1 Ñ2 V1 Dn1 D3 G4 यदीच्छसि, Dn2 यसि° ( for यदि° ). Ñ3 ( marg ) V1 B D5 D ब्रूहि ( for सर्वं ) K4 Ñ V Dn D1–6 T G सुतार्थाय ( for स पुत्रार्थे ) K2 3 अक्ष D2 4 त ते ( for तत्ते ) — Before line 49, K Ñ2 3 V B Dn D5 D1 5 T1 3 4 G4 ins नृप उवाच, D6 T2 G1–3 दीर्घं तपा —( L 49 ) B3 तुष्टोऽसि, T1 4 स तुष्ट ( for तुष्टस्त्व ) K1 4 ( sup lin as above ) तत्र K2 3 N2 3 ( marg ) V B Dn4 Ds1 D1–5 T1 भव ( for भवेत् ) — Before line 50, G2 ins वैशंपायन —( L 50 ) N3 V1 D2 तमनुज्ञाय T3 G1 समनुज्ञाप्य ( for °ज्ञाय ) —( L 52 ) K N2 3 V B3 Dn D1 3 6 T2–4 G2–5 महाराज ( for °ज ) K3 पाप ( for रोग ) —( L 53 ) K1 Ñ V2 3 B1 D5 6 T2 G1 4 प्राप्येह समिपक्क्रियाम् K3 Dn D1 2 T1 °ह भिषजा क्रियम् K4 Ñ3 ( marg ) V1 °ह भिषजां क्रियम् D3 4 G5 °ह भिषज क्रियम्, T3 4 प्राप्य सर्वं ( T4 चैव ) भिषक्क्रियम् ( for °) T3 —( L 54 ) V2 तदष्टधा T1 4 G4 तेना° ( for तम° ) चक्रे ( for व्यस्य ) D6 T2 G1 3 5 प्रत्यवेदयत् ( for प्रत्यपा° ) T3 लोकानां हितकाम्यया ( for °) —( L 56 ) K1 3 4 D1 4 धीरो ( for वीरो ) D3 सुत ( for स्मृत ) —( L 57 ) V2 B1 2 D5 D3 5 T1 3 4 G1 3 4 पुत्रो ( V2 D3 4 G2 सुतो ) भीमरथस्यापि ( for °) K3 प्रकीर्तित ( for प्रजेश्वर ) —( L 59 ) D4 एतस्मिन्नन्तरे काले ( for °) —( L 60 ) K2 V3 Dn शून्यां निवासयामास ( for °) —( L 61 ) T2 G1 शप्ता हि सा पुरी तात ( for °) —( L 62 ) D5 भविता ( for °त्री ) K3 V3 Dn T1 तात्र ( for [इ]ति न ) —( L 64 ) V B1 3 Dn D1 3 T2–4 G4 5 स ( for स ) — After line 64 K1 ( marg ) Ñ1 2 V B Dn D5 D5 6 T2 G1–3 5 ins

4** भद्रश्रेण्यस्य पूर्वं तु पुरी वाराणसीत्यभूत् ।

—( L 66 ) K1 3 4 Dn D1 4 G1 5 नरर्षभ, V2 D5 D2 नरेश्वर ( for नराधिप ) —( L 67 ) D3 यद् ( for तद् ) B2 3 येन ( for ) तेन ) D2 बलौजसा ( for बलीयसा ) —( L 68 ) D3 विभु, T2 4 G2 प्रभो ( for प्रभु ) —( L 69 ) K1 3 D2 स हि, K4 Ñ2 D4 च हि D3 चैव ( for कश्च ) K2 Ñ3 V3 Dn1 D5 6 T1 3 G2 3 4 5 निकुम्भकश्च धर्मात्मा D1 T3 निकुम्भस्य हि ध° ( for °) K1 B2 3 D2 T3 4 G4 सिद्ध, K3 D4 6 T2 G1 3 4 धर्म°, D2 सिद्धं ( for सिद्धि ) — After line 69 D2 ins

5** कारणं तद्देशेन वद त्वं वदतां वर ॥

—( L 70 ) K1 3 4 Ñ2 3 V B1 2 D ( except Dn2 ) नगरीं ( for °रं ) —( L 71 ) K2 इरीणायां स, T3 4 वाराणस्यां, G1 स्थितायां तु ( for इरीणायां तु ) K1 ( sup lin ) महातपा K4 Ñ2 V1 D3 नराधिप ( for °धिप ) —( L 72 ) D4 एतस्मिन्न न्तरे काले ( for °) — K3 om lines 73 74 —( L 73 )

वसति स्म महातेजाः स्फीतायां तु नराधिपः ॥
एतस्मिन्नेव काले तु कृतदारो महेश्वरः ।
देव्यास्तु प्रियकामार्थं न्यवसच्छ्वशुरान्तिके ॥
देवाज्ञया पार्षदा ये त्वभिरूपास्तपोधनाः ।
पूर्वोक्तै रूपवेषैश्च तोषयन्ति स्म पार्वतीम् ॥
हृष्यते वै महादेवी मेना नैव प्रहृष्यति ।
जुगुप्सत्यसकृत्तां वै देवदेवं तथैव च ॥
सपार्षदस्त्वनाचारस्तव भर्ता महेश्वरः ।
दरिद्रः सर्वदेवासौ शीलं तस्य न वर्तते ॥
मात्रा तथोक्ता वरदा स्त्रीस्वभावान्न चुकुपे ।
स्मितं कृत्वा तु वरदा भवपार्श्वमथागमत् ॥
विवर्णवदना देवी महादेवमभाषत ।
नेह वत्स्याम्यहं देव नय मां स्वं निवेशनम् ॥
तथा कर्तुं महादेवः सर्वाँल्लोकानवेक्षत ।
वासार्थं रोचयामास पृथिव्यां कुरुनन्दन ॥
वाराणसीं महातेजाः सिद्धक्षेत्रं महेश्वरः ।
दिवोदासेन तां ज्ञात्वा निविष्टां नगरीं भवः ॥
पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत् ।
गणेश्वर पुरीं गत्वा शून्यां वाराणसीं कुरु ।
मृदुनैवाभ्युपायेन अतिवीर्यः स पार्थिवः ॥
ततो गत्वा निकुम्भस्तु पुरीं वाराणसीं तदा ।
स्वप्ने निदर्शयामास कण्टकं नाम नापितम् ।
श्रेयस्तेऽहं करिष्यामि स्थानं मे रोचयानघ ॥
मद्रूपां प्रतिमां कृत्वा नगर्यन्ते तथैव च ।
ततः स्वप्ने यथोद्दिष्टं सर्वं कारितवान्नृप ॥
पुरीद्वारे तु विज्ञाप्य राजानं तु यथाविधि ।
पूजां च महतीं तस्य नित्यमेव प्रयोजयत् ॥
गन्धैश्च धूपमाल्यैश्च प्रोक्षणीयैस्तथैव च ।

---

B D5 T1 स (for तु) B कामस्तु (for ॰कामार्थं) D5 सोऽन्वसद् (for न्यवसच्) D5 (marg as above) तत्पुरान्तिक (for श्वशु॰) — (L. 74) T3 G3 पारिषद्या (for पार्षदा ये) T2 G1 2 5 देव्यास्तथा पारिषदास् (G1 परिजनास्) (for °) B1 प्रति, T3 अभि (for त्वभि) — (L. 75) Dn पूर्वोक्त, Da पूर्वोक्ता (for °क्तै) K4 N3 V1 2 B1 2 D3 D1 5 T2 G3 उपदेशैश्च, D1 व्यपदेशैश्च (for रूपवेषैश्च) — (L. 76) D5 हृष्यते हिमवान्देवो (for °) K4 प्रतुष्यति K5 प्रहृष्यते (for °ति) — (L. 77) K4 N2 3 V1 2 B Dn D5 D1 T1 3 4 G1 3 तां (for तं) D5 जुगुप्सत्यसकृत्कुर्वे वै (for °) — (L. 78) B4 [अ]नाकारस् (for °चारस) — (L. 79) D1 [आ]स्ते (for [अ]सौ) — (L. 80) D5 च तदा (for वरदा) K4 चक्षमे (for चुकुपे) — (L. 81) T3 वर (for भव) N2 V1 मथागता, T3 4 G1 4 उपागमत् (for अथा°) D3 भगवत्पार्श्वमागमत् (for °) — (L. 82) G (ed) विवर्णा वरदा देवी (for °) — Before line 83 G1 ins देवी — (L. 83) Bom and Poona eds निवेशनम् (for निवेश°) — Before line 84, G3 ins वैशंपायन — (L. 84) D1 पुरमुक्तो, D तथोक्तस्तु (for तथा कर्तुं) V1 मन कृत्वा (for महादेव) T1 G1 तथा कर्तुमना देव (for °) — (L. 86) K2 N2 3 V B D5 D1 6 T1 4 G1-4 वाराणस्यां G3 वाराणस्यां महादेव (for °) K2 N2 3 V1 2 B1 D5 D1 3 T1 2 सिद्धिक्षेत्रे (N2 D1 5 °त्र), V2 B2 3 D3 T2 4 G2 3 4 5 सिद्धक्षेत्रे (for °त्रं) — (L. 87) G1 निरुद्धां (for निविष्टां) D1 निविष्टां प्रययौ शुभ (for °) — (L. 88) N1 निविष्टम्, V2 निकुम्भम् (for तिष्ठन्तम्) — (L. 89) V1 B1 2 (marg as above) राक्षसेश (for गणेश्वर) B3 रम्यां, B1 (marg) गत्वा (for गत्वा) K5 पुर (for कुरु) — D1 om lines 90-91 — (L. 90) K1 2 4 Dn Da (by corr) D1 2 4 T1 4 G1 हृत, K2 D3 ह्रति, T3 महा (for अति) G3 ह्यतिवीर्यपराक्रम (for °) — (L. 92) K3 निदर्शयामास, N2 V2 संदर्श°, V3 4 5 निवेद°, D3 निर्दिश° (for निदर्श°) K1 2 मणुद्द, V2 2 B D3 T2 G2 2 वण्डुक, Dn कन्दुक, D1 अणुद्द; D2 मघुक; D3 मण्डुक, D1 मण्टक, T1 2 4 G1 अष्टकं (for कण्टकं) K2 (before corr as above) N2 (by corr) गत्वा राजानमादिशत् (for °). — (L. 93) B1 मम (for तेऽहं) B1 विधास्यामि (for करिष्यामि) D5 रोचय (for रो°) K1 स्थानं च रचयाशु मे (for °) — (L. 94) N3 V1 D5 नगर्यां तु, T1 °रे तत् (for °र्यन्ते) — G3 repeats line 97 after line 131 — (L. 95) B1 तथा (for ततः) K2 सर्वं, D1 स्वप्ने (for स्वप्ने) D1 यथादिष्ट, T1 4 यथाष्टं (for यथोद्दिष्टं) D1 यथोद्दिष्टं तत्र स्वप्ने (for °) G1 स्वप्ने (for सर्वं) — (L. 95) T1 द्वारि द्वारे (for पुरीद्वारे) K1 D1 विज्ञाप्य K1 (by corr) निमाय K3 विन्यस्य, D1 (marg as above) विधाय (for विज्ञाप्य) K1 2 4 D2 4 राजानं च, N2 3 V1 2 B 2 Dn D1 D1 3 T1 2 4 G1-4 राजानं च N2 राजा नर्तं, D1 (marg as above) वाचनार्थे च (for राजानं तु) — K3 repeats line 97 after line 99 — (L. 97) N3 (marg as above) B1 2 D1 T1 4 तत्र, G1 कृत्वा (for तस्य) D1 प्रयुङ्क्ते (for

अन्नपानप्रयोगैश्च अत्यद्भुतमिवाभवत् ॥
एवं संपूज्यते तत्र नियमेन गणेश्वरः ।
ततो वरसहस्रं तु नागराणां प्रयच्छति ।
पुत्रान्हिरण्यमायुश्च सर्वान्कामांस्तथैव च ॥
राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता ।
पुत्रार्थमागता देवी साध्वी राज्ञा प्रचोदिता ॥
पूजां तु विपुलां कृत्वा देवी पुत्रमयाचत ।
पुनः पुनरथागम्य बहुशः पुत्रकारणात् ॥
न प्रयच्छति पुत्रं हि निकुम्भः कारणेन हि ।
राजा तु यदि सक्रुद्धः कार्यसिद्धिस्ततो भवेत् ॥
अथ दीर्घेण कालेन क्रोधो राजानमाविशत् ।
भूतमेतन्महद्द्वारि नागराणां प्रयच्छति ॥
प्रीतो वराग्र्यैः शतशो मम किं न प्रयच्छति ।
मामकैः पूज्यते नित्यं नगर्यां मम चैव हि ॥
विज्ञापितो ममार्थं वै देव्या मे पुत्रकारणात् ।
न ददाति च पुत्रं मे कृतघ्नः केन हेतुना ॥
ततो नार्हति सत्कारं मत्सकाशाद्विशेषतः ।
तस्मात्तु नाशयिष्यामि स्थानमस्य दुरात्मनः ॥
एवं स तु विनिश्चित्य दुरात्मा राजकिल्बिषी ।
स्थानं गणपतेस्तस्य नाशयामास दुर्मतिः ।
भग्नमायतनं दृष्ट्वा राजानमशपत्प्रभुः ॥
यस्मादनपराधस्य त्वया स्थानं विनाशितम् ।
पुर्यकस्मादियं शून्या तव नूनं भविष्यति ॥
ततस्तेन तु शापेन शून्या वाराणसी तदा ॥
शप्त्वा पुरीं निकुम्भस्तां महादेवमथागमत् ॥
अकस्माच्च पुरी सा तु विद्रुता सर्वतोदिशम् ॥
तस्यां पुर्यां ततो देवो निर्ममे पदमात्मनः ।
रमते तत्र वै देवो रममाणो गिरेः सुताम् ॥
न रतिं तत्र वै देवी लभते गृहविस्मयात् ।
वसाम्यत्र न पुर्यां तु देवी देवमथाब्रवीत् ॥

प्रयोनयत्) —(L 98) K1 नैवद्यै (for मार्दयैश्च) K1 s Ñ3 (marg as above) Dn D1–4 T4 प्रेक्षणीयैस् (for प्रो°) —(L. 99) Ñ3 (marg ) V1 B1 3 प्रदान (for पानप्र) —(L 100) T3 संपूजितम् (for °ज्यते) V3 तेन (for तत्र) —(L. 101) K3 (marg as above) D6 वर्षं (for वर) Ñ3 (marg ) B1 D31 (marg ) नगर्यां स (for नागराणां) —(L. 102) D2 पुत्र (for पुत्रान्) D3 वाससु (for आयुश्च) K1 T4 सर्वं (for सर्वान्) — T3 reads line 103 twice —(L 103) B3 सुवशा, D3 यशोदा (for सुयशा) —(L. 104) K4 D4 प्रणोदिता, Ñ3 V2 प्रदर्शिता (for प्रचोदिता) D1 राज्ञी राज्ञा प्रणोदिता (for °) —(L. 106) B1 3 (marg as above) 3 D3 सा वने वर (B3 पुत्र) मागत्य (for °) Ñ3 V1 मा वने (for बहुश) K3 देवी पुत्रस्य कारणात् (for °) — K3 om (hapl) lines 107–113 —(L. 108) V1 B D5 T1 2 4 G1 न क्रुद्ध, Dn1 सक्रुध्येत्, D न कुप्येत् (for सक्रुद्ध) —(L. 109) T2 दार्दर्घेणैव कालेन (for °) — T3 om lines 109[b]–113[a] —(L. 110) K2 Ñ2 V2 B2 (marg as above) D6 मम, Ñ3 V3 D1–4 महा (for महद्) B1 2 (marg ) 3 D4 D5 T1 2 4 भूत एव महान्द्वारि (for °) Ñ2 V3 नराणां य (for नागराणां) —B3 om (hapl) line 111 —(L. 111) V2 बहुशो D6 G1 3 6 गणपो (for शतशो) T3 प्रयच्छामि (for °ति) —(L 112) D3 ममाग्र्यैः (for मामकैः) N3 (marg ) Dn2 नग V1 B Dn1 D3 मे सदा (for मम च) —

र्यन्ते सदैव हि (for °) —(L. 113) K1 V1 मया पूर्वं, K2 मया त्वं वै, Ñ2 यथापूर्वं, Ñ3 (marg ) V1 D5 6 G3 5 ममार्थं वै, Dn D3 मयाप्यर्थं, T1 3 4 G4 मयार्थं वै, G1 महार्थो वै, G2 मयार्थो वै (for ममार्थं वै) Dn D3 T1 3 4 G2 4 पुत्रस्य (for मे पुत्र) —(L. 114) T4 कारणात् (for हेतुना) —(L 115) K2 4 नार्हसि (for °ति) — V1 om lines 116–121 —(L 116) Ñ2 3 D3 6 T1 3 4 G4 5 न (for तु) —(L. 117) G2 4 किल्बिष (for °षी) —(L 118) K1 गच्छा पातिस् (for गणपतेस्) —(L 119) D31 आयतने (for °तनं) D3 T3 अवदत् (for अशपत्) —(L. 120) B1 यस्मादनपराधान्मे, D5 °राधेन, D6 T3 G1 3 °राद्धस्य (for °) —(L. 121) T3 G1 3 तस्माद् (for [अ]क°) B1 3 D5 पुरी शून्या तथाकस्मात् (for °) —(L 122) D3 च तेनैव T2 G1 च शापेन (for तु शा°) T1 3 4 पुरी (for तदा) K1 3 4 Dn शून्या वाराणसी तदा (K3 पुरीम्) (for °) — D3 om line 123 —(L. 123) D2 पुरा, T2 रिपु (for पुरीं) T1, 3 G4 उपागमत् (for अथा°) — Before line 124 K3 ins वैशम्पायन उवाच —(L. 124) T3 4 G4 दिश (for दिशम्) —(L. 125) T2 G1 महा (for ततो) V2 पुरम् T3 परम (for पदम्) —(L. 126) G1 om 126[a] K1 रममाणा गिरे सुता (for °) —(L. 127) D4 गिरि (for गृह) D3 विस्मृतात् (for विस्मयात्) —(L. 128) K3 [ए]व, D6 स्व (for [अ]त्र) K3 न वसाम्यत्र पुर्यां तु (for °) Ñ3 D4 देवदेवम् T1 देवो देवीम् G3 देवमत्रम् (for देवी देवम्) Ñ3

महादेव उवाच ।

नाहं वेश्म विमोक्ष्यामि अविमुक्तं हि मे गृहम् ।
नाहं तत्र गमिष्यामि गच्छ देवि गृहं प्रति ॥
हसन्नुवाच भगवांस्त्र्यम्बकस्त्रिपुरान्तकः ।
तस्मात्तदविमुक्तं हि प्रोक्तं देवेन वै स्वयम् ।
एवं वाराणसी शप्ता अविमुक्तं च कीर्तितम् ॥
यस्मिन्वसति वै देवः सर्वदेवनमस्कृतः ।
युगेषु त्रिषु धर्मात्मा सह देव्या महेश्वरः ॥
अन्तर्धानं कलौ याति तत्पुरं हि महात्मनः ।
अन्तर्हिते पुरे तस्मिन्पुरी तु वसते पुनः ।
एवं वाराणसी शप्ता निवेशं पुनरागता ॥
भद्रश्रेण्यस्य पुत्रो वै दुर्दमो नाम विश्रुतः ।
दिवोदासेन बालेति घृणया स विसर्जितः ॥
हैहयस्य तु दायाद्यं कृतवान्वै महीपतिः ।
आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् ॥
भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना ।
वैरस्यान्तं महाराज क्षत्रियेण विधित्सता ॥
दिवोदासाद्दृषद्वत्यां वीरो जज्ञे प्रतर्दनः ।
तेन पुत्रेण बालेन प्रहृतं तस्य वै पुनः ॥
प्रतर्दनस्य पुत्रौ द्वौ वत्सभार्गौ सुविश्रुतौ ।
वत्सपुत्रो ह्यलर्कस्तु सनतिस्तस्य चात्मजः ॥
अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसंगरः ।
अलर्कं प्रति राजर्षिं श्लोको गीतः पुरातनैः ॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।

---

अयाचत, $V_2$ तदाब्रवीत्, $V_3$ अभाषत (for अथाब्रवीत्) $B_{1.2}$ $D_5$ देव देवीं तथाब्रवीत्, $G_2$ देवीं देवस्तथाब्रवीत् (for $^b$) — $T_{1.3.4}$ $G_{2-4}$ ईश्वर, $T_2$ om (for महादेव). — (L 129) $\tilde{N}_2$ $D_{S1}$ विमोक्षामि (for °क्ष्यामि) $K_{1.3.4}$ $D_{n2}$ $D_{S2}$ (marg) $D_{2.4.5}$ नाहं वेश्मनि वत्स्यामि (for $^a$) $K_2$ अवियुक्त, $V_1$ अवियुक्तं (for अविमुक्त) $T_2$ शृणु (for गृहम्) — Before line 130, $D_6$ $T_2$ $G_{1.5}$ ins ईश्वर — (L 130) $\tilde{N}_3$ $V_2$ देवि (for तत्र) $K_1$ $D_3$ G(ed) [आ]गमिष्यामि, $D_3$ निवत्स्यामि (for गमिष्यामि) $B_1$ (marg as above) यथागतम् (for गृहं प्रति) — Before line 131, $G_3$ ins वैशंपायन — (L 131) $V_2$ B $D_5$ प्रहस्य (for हसन्) — (L 132) $\tilde{N}_{2.3}$ $B_3$ $D_{2.5.6}$ $T_3$ $G_2$ यस्मात्तद्, $D_1$ तत्तस्माद् (by transp) $G_3$ [अ]प्यवि (for अवि) $V_2$ यस्मात्तु देवि मुक्तं हि, $G_4$ यस्मात्तया विमुक्तं हि (for $^a$) $D_4$ प्रोक्तं देवि स्वयंभुवा (for $^b$) — (L 133) $D_{4.5}$ प्रकीर्तितम्, $T_3$ च केतनम्, $G_5$ च कीर्तितं (for च कीर्तितम्) — (L 137) Poona ed सा (for तु) — (L 138) $\tilde{N}_{2.3}$ (marg) $V_1$ आगमत् (for °ता) — (L 139) $K_{1.3}$ भद्रश्रेणस्य (for °ण्यस्य) $K_2$ B दुर्गमो, $D_3$ (marg) $G_2$ दुर्मदो (for दुर्दमो) — $D_1$ repeats line 140 after the repetition of lines 141–143 — (L 140) $K_3$ $D_4$ बालिना, $B_1$ बाल्ये हि, $D_1$ (second time) $_6$ बालो हि (for बालेति) $\tilde{N}_3$ (marg) [अ]सौ (for स) $K_1$ (sup lin as above) $_3$ V $B_{1.3}$ $D_n$ $D_3$ $D_1$ (first time) $_{3.4.6}$ $T_{1.3.4}$ $G_{2-4}$ स ($V_1$ $D_5$ [अ]सौ) विवर्जित, $D_1$ (second time) परिव°, G(ed.) स च वर्जित (for स विस°) — $D_1$ repeats lines 141–143 after line 1 of 8** — (L 141) $V_1$ $D_{3.5}$ $T_4$ $G_{4.5}$ हृतवान्, $D_1$ (both times) हतवान् (for कृ°) — (L 142) $\tilde{N}_{2.3}$ $V_{1.2}$ $D_2$ दिवोदासैर्, $T_2$ °दास (for °दास) $B_3$ कृतो (for हृतं) $K_1$ दिवोदासे हते बलात्, $K_3$ °दासो हतो बलात् (for $^b$) — (L 143) $K_3$ भद्रश्रेणस्य (for °ण्यस्य) $K_3$ B दुर्गमेन; $D_2$ (before corr as above) $_4$ दुर्मदेन (for दुर्दमेन). — $D_1$ repeats line 144 after line 3 of 8** — (L 144) $V_2$ विधित्सया, $T_3$ विरोचना (for विधित्सता) $G_2$ क्षत्रिये विधित्सदा (for $^b$) — $G_3$ repeats lines 145 146 after line 148 — (L 145) $T_3$ स्वदर्शन (for प्रतर्दन). — For line 146, $\tilde{N}_3$ $V_1$ $B_{1.3}$ $D_5$ subst

6** तेन बालेन दायाद्यं प्रगृहीतं पुनस्तदा ।
[ $\tilde{N}_3$ $V_1$ पुत्रेण (for बालेन) ]

While after line 146, $K_1$ ins

7** एष प्रतर्दनो राजा महात्मा संबभूव ह ।
स एव शत्रुजिद्वीर ऋतध्वज इतीरितः ।
उपभुज्यास्य देहस्य पाने ब्रह्ममयोऽभवत् ॥

— (L 147) $K_2$ द्वौ पुत्रौ (by transp.) $K_1$ भर्गौ; $V_2$ $T_3$ $G_1$ भार्गौ $D_{2.3}$ भर्गौ $T_1$ $G_4$ भर्गौ, $T_{3.4}$ $G_2$ -गर्गौ (for भार्गौ) $K_4$ सुविस्मितौ, $D_n$ बभूवतु (for सुविश्रुतौ). — After line 148, $D_1$ ins

8** अलर्को नाम पुत्रस्तु राजा सनतिमान्भुवि ।
अष्टारथो नाम नृप सुतो भीमरथस्य वै ।
नतिपुत्रेषु बाल्येषु प्रहृतं तस्य भारत ॥

— $G_3$ om lines 149 150 — (L 150) $B_1$ राजानं $D_1$ राजर्षे (for °र्षिं) G(ed) श्लोकैर् (for श्लोको) $V_1$ $T_3$ पुरातन- (for °तनैः) $K_{1.3}$ श्लोकौ गीतौ पुरातनौ ($K_2$ °नैः) (for $^b$) — (L 151) $K_4$ $V_2$ $B_1$ $D_n$ $D_2$ $_5$ $T_{1.2.3.4}$ षष्टि, $D_{1.4.6}$ $G_{2.3}$ षष्टिर् (for षष्टिं) $K_3$ षष्टिं सहस्रवर्षाणि (for $^a$) $K_{3.4}$ $B_3$ $D_n$ $D_{1.3.5}$ $T_2$ $G_3$ षष्टि, $D_{2.4.6}$ $T_{2.4}$ $G_{1.3.4}$ षष्टिर् (for

युगा रूपेण संपन्न आसीत्तादिकुलोद्वहः ॥
लोपामुद्राप्रसादेन परमायुरवाप सः ।
तस्यासीत्सुमहद्राज्यं रूपयौवनशालिनः ॥
शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसम् ।
रम्यां निवेशयामास पुरीं वाराणसीं पुनः ॥
सनतेरपि दायादः सुनीथो नाम धार्मिकः ।
सुनीथस्य तु दायादः क्षेमो नाम महायशाः ॥
क्षेमस्य केतुमान्पुत्रः सुकेतुस्तस्य चात्मजः ।
सुकेतुतनयश्चापि धर्मकेतुरिति श्रुतः ॥
धर्मकेतोस्तु दायादः सत्यकेतुर्महारथः ।
सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः ॥
आनर्तस्तु विभोः पुत्रः सुकुमारश्च तत्सुतः ।
सुकुमारस्य पुत्रस्तु धृष्टकेतुः सुधार्मिकः ॥
धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ।
वेणुहोत्रसुतश्चापि भर्गो नाम प्रजेश्वरः ।
वत्सस्य वत्सभूमिश्च भृगुभूमिस्तु भार्गवात् ॥
एते ह्यङ्गिरसः पुत्राः जाता वंशेऽथ भार्गवे ।
ब्राह्मणाः क्षत्रिया वैश्या, त्रियः पुत्राः सहस्रशः ॥
इत्येते काशयः प्रोक्ता नहुषस्य निबोधत ॥

Colophon

No 8

After 47 52, all Mss ( except $M_{1-3}$ ) G(ed) ins ·

वैशंपायन उवाच ।

आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी ।
जननी सिद्धसेनस्य दुर्गा वीरा महातपाः ॥

---

पर्हि ) — After line 151, $D_1$ $T_{1\,3\,4}$ $G_{3\,5}$ ins

9** अलर्कादपरो नान्यो बुभुजे मेदिनीमिमाम् ।
[ $D_1$ युवा ( for इमाम् ) ]

— ( L 152 ) $B_1$ $D_3$ $T_{3\,4}$ $G_4$ कुलोद्भव ( for °द्वह ) — ( L. 153 ) $V_2$ $D_3$ अवाप्तवान् ( for °प स ) B $D_5$ वर व( $B_1$ प )र-मवाप्तवान् ( for $^b$ ) — $K_2$ $G_2$ om line 154 — ( L. 155 ) $K_2$ $D_1$ महाराज ( for °बाहुर् ) — ( L. 156 ) $G_1$ रम्या निवासयामास ( for $^a$ ) $T_1$ $G_1$ पुरा ( for पुन ) — ( L. 157 ) $T_2$ om ( hapl ) lines $157^b$–$158^a$ $K_2$ $V_2$ $D_2$ पार्थिव ( for धार्मिक ) — ( L. 158 ) $K_{1-3}$ $\tilde{N}_2$ $V_{1\,3}$ $B_{1\,2}$ Dn $D_{1\,3\,4}$ $T_{1,4}$ क्षेम्यो ( for क्षेमो ) $K_4$ महातपा ( for °यशा ) $V_2$ क्षेम्यो नाम प्रजेश्वर ( for $^b$ ) — ( L 159 ) Some Mss क्षेम्यस्य ( for क्षेमस्य ) — ( L 160 ) $K_{1\,2\,4}$ $\tilde{N}_3$ $V_{1\,3}$ $B_2$ Dn $D_{2\,5}$ T G सुकेतोस् ( for °तु ) $K_3$ $D_{1\,6}$ सुकेतोश्तनयस्यापि ( for $^a$ ) $K_3$ ( marg as above ) अपि ( for इति ) $K_{1\,3\,4}$ $V_2$ Dn $D_{2\,4}$ $T_{2\,3}$ $G_{1\,3}$ स्मृत , $\tilde{N}_2$ $B_2$ श्रुति ( for श्रुत ) — ( L. 161 ) $K_3$ $V_2$ $D_2$ $G_3$ महायशा , $D_4$ इति स्मृत ( for महारथ ) — ( L. 162 ) $D_5$ $T_2$ $G_{1-3\,5}$ सत्यकेतो ( for °केतु- ) $T_1$ श्रीमान् ( for चापि ) $T_1$ महेश्वर , $T_3$ $G_1$ जने° ( for प्रजे° ). — $G_4$ om ( hapl ) lines 163 166 — ( L. 163 ) $B_{1\,3}$ $D_5$ सुविभुस् ( for आनर्तस् ) — ( L 164 ) $K_{1\,4}$ धृतकेतु° ( for धृष्ट° ) $K_2$ च धार्मिक , $D_{2\,4}$ स ( $D_4$ तु ) धार्मिक , $D_3$ स पार्थिव ( for सुधार्मिक ) $K_3$ धृतकेतुस्तथैव च ( for $^b$ ) — ( L 165 ) $K_1$ धृतकेतोस् ( for धृष्ट° ) $\tilde{N}_3$ ( marg ) $V_1$ वै सहोत्र , $V_3$ रेणु° ( for वेणु° ) $V_2$ प्रजापति ( for प्रजेश्वर ) — $T_1$ om ( hapl ) line 166 — ( L. 166 ) $V_3$ रेणुहोत्र ( for वेणु° ) $K_1$ $D_5$ भार्गो , $K_4$ भग्नो , $D_1$ ( sup lin as above ) गर्गो , $D_3$ ( orig ) भृगुर् , $D_3$ ( marg ) $_5$ $T_2$ $G_{2\,3\,5}$ वत्सो ( for भर्गो ) $V_2$ वत्सो नाम प्रजापति , $G_1$ वत्सो नाम जनेश्वर ( for $^b$ ) — ( L. 167 ) $K_2$ गर्भ , $V_1$ $B_3$ भर्ग , $B_1$ $D_5$ भार्ग ( for भृगु ) $K_{1\,3}$ $D_5$ भार्गव° ( for °वात् ) $D_2$ भृगो पुत्रास्तु भार्गवा ( for $^b$ ) — ( L. 169 ) K Dn $D_{1\,4\,5}$ तयो , $\tilde{N}_2$ $V_3$ $B_{1\,3}$ $D_3$ $D_{2\,6}$ $G_2$ त्रय , $D_4$ तेषां ; $T_{2\,4}$ जाता ( for स्त्रिय ) $\tilde{N}_2$ $V_{1\,2}$ $B_2$ तपोयुक्ता सहस्रदा ( for $^b$ ). — ( L 170 ) $K_{1\,3\,4}$ $V_2$ $D_5$ काश्यपा ( for काशय ) $K_{2\,3\,4}$ $V_{1\,3}$ Dn $D_{1-4\,6}$ $T_{2\,3}$ $G_{1\,3\,5}$ निबोध मे ; $K_2$ °ध तत् , $T_1$ °ध न , $T_3$ प्रबोध मे ( for निबोधत )

*Colophon* om in $K_{2\,3\,4}$ $D_{2\,3\,5}$ $T_2$ $G_1$ — *Mention of the Epic* $D_{5\,3}$ — *Mention of Khila* $K_3$ $\tilde{N}_2$ $V_{1\,3}$ B Dn1 $D_3$ $D_{1\,4\,6}$ — *Adhy name* $K_3$ $\tilde{N}_2$ $V_{1\,3}$ B $D_3$ क्षत्रवृद्धप्रसव , $D_1$ आयुवंशानुकीर्तनम् , $D_5$ $G_{2\,3}$ काशी( $D_5$ °शि )-वंशकथनम् — *Adhy no* ( figures words or both ) $\tilde{N}_2$ $V_1$ $D_4$ 28 , $V_{2\,3}$ $B_2$ Dn $D_{5\,3}$ 29 , $D_1$ $T_1$ $G_{2-5}$ 27 ; $D_6$ $T_{2\,4}$ 30

8

( L. 1 ) $D_3$ काली ; $T_1$ उमा ( for आर्या ) $K_1$ $V_2$ $D_{n1}$ कात्यायिनी ( for °यनी ) $\tilde{N}_3$ गौरी ; $V_3$ ( marg as above ) चैत्र ( for देवी ) $T_4$ शार्ङ्गिकी ( for कौशिकी ) — ( L. 2 ) $D_{2\,3}$ सिद्धिसेनस्य , $T_3$ सिद्धसंघस्य ( for °सेनस्य ) $K_{3-4}$ $\tilde{N}_{2\,3}$ [illegible] $B_{1\,3}$ Dn $D_5$ $D_{1\,3-6}$ $T_{1-3}$ G $M_4$ उग्रधारी ( for दुर्गा वीरा ) $\tilde{S}_1$ महाबला ( for °तपा ) — $T_3$ om. line 3 , $K_3$ reads it on

जया च विजया चैव पुष्टिश्च त्वं क्षमा दया ।
ज्येष्ठा यमस्य भगिनी नीलकौशेयवासिनी ॥
बहुरूपा विरूपा च अनेकविधरूपिणी ।
विरूपाक्षी विशालाक्षी भक्तानां परिरक्षणी ॥
पर्वताग्रेषु घोरेषु नदीषु च गुहासु च ।
वासस्तव महादेवि वनेषूपवनेषु च ॥
शबरैर्बर्बरैश्चैव पुलिन्दैश्च सुपूजिता ।
मयूरपक्षध्वजिनी लोकान्क्रमसि सर्वशः ॥
कुक्कुटैश्छागलैर्मेषैः सिंहैर्व्याघ्रैः समाकुला ।
घण्टानिनादबहुला विश्रुता विन्ध्यवासिनी ॥
त्रिशूलपट्टिसधरा सूर्यचन्द्रपताकिनी ।
नवमी कृष्णपक्षस्य शुक्लस्यैकादशी प्रिया ॥
भगिनी वासुदेवस्य रजनी कलहप्रिया ।
आवासः सर्वभूतानां निष्ठा च परमा गतिः ॥
नन्दगोपसुता चैव देवानां विजयावहा ।
चीरवासाः सुवासाश्च रौद्री सध्या त्वमेव च ॥
प्रकीर्णकेशी मृत्युश्च तथा मांसौदनप्रिया ।
लक्ष्मीरलक्ष्मीरूपेण दानवानां वधाय च ॥
सावित्री चापि देवानां माता भूतगणस्य च ।
अन्तर्वेदी च यज्ञानामृत्विजां चैव दक्षिणा ॥

---

marg — (L. 3) Ś1 हि त्वं, B2 (marg) च त्वं (for चैव) K1 B1 2 (marg as above) 3 D5 D4 6 तुष्टिः पुष्टिः, K2 V2 3 D2 3 T1 G4 पुष्टिस्तुष्टिः, Ñ2 3 पुष्टिस्त्वं च (for पुष्टिश्च त्वं) — (L. 4) B1 आद्या (for ज्येष्ठा) K1 सोमस्य K3 रा° (for य°) G1 पीत (for नील) Ś1 D3 G2 M4 वाससी (for वासिनी) — (L. 5) K3 सुरूपा (for वि°) D4 T4 विधि (for विध) K3 Ñ2 3 (marg as above) V2 3 Dn D8 T2 G1 5 M4 चारिणी (for रूपिणी) Ś1 सुरूपा गिरिचारिणी, K2 Ñ1 D2 3 T1 3 G3–4 वनकविधि(K1 D2 3 °व्रत)चारिणी, K4 °वचकारिणी (for °) — G4 om (hapl) line 6 — (L. 6) K2 4 N2 3 V2 B3 Dn1 D5 D7 3 5 6 T2 4 G1 2 4 M4 रक्षिणी, V2 पालिनी (for रक्षणी) — After line 6 G5 reads lines 13–14 — (L. 7) Ś1 भूतेषु, V2 [स्व]घोरेषु, T2 G1 दैवेषु (for घोरेषु) K1 हृदेषु, T2 G1 सुनासु (for गुहासु) Ś1 गुहासु च नदीषु च (for °) — (L. 8) K3 (marg) V2 B D1 वससि त्वं, Dn1 वासस्ते च (for °स्तव) G1 नदीषु (for वनेषु) — After line 8 D5 T2 G1 3 4 read lines 13–14 — (L. 9) K2 शबरी, D5 T2 G1 शबरैर् (for श°) Ś1 N3 (marg) V1 Dn अभि, Ñ3 चैव (for च सु-) — (L. 10) Ś1 D4 (marg) सिंह, T1 M4 पिच्छ (for पक्ष) K1 3 4 Ñ1 Dn D1 5 T1 2. 4 G2 5 क्रमसि (for क्रा°) Ś1 नित्यश, D3 सर्वत, D1 °था (for °श) B3 D5 लोकान्क्रमसि नित्यश (D5 सर्वत) (for °) — (L. 11) T1 अजगैर् (for छागलैर्) Ś1 चैव (for मेषै) K2 Ñ3 V3 सिंहव्याघ्रैः, V1 सिंहव्याघ्र, T2 व्याघ्रैः सिंहैः (by transp) Ś1 निषेविता (for समाकुला) D3 सिंहव्याघ्रैश्च सङ्कुला (for °) — (L. 12) G3 वीणा (for घण्टा) K1 om विश्रुता D1 [अ]विन्ध्य (for विन्ध्य) K1 4 D2 3 5 6 T1 2 G M4 विन्ध्यवासिनी वि(K1 D2 3 °न्ध्यभि)श्रुता, K2 Ñ3 (marg) V1 2 B3 (marg) विन्ध्यपर्वतवासिनी, N3 V1 (both marg) D3 T3 4 विन्ध्ये वससि सर्वदा (T3 4 पर्वते), D4 विन्ध्ये वससि सर्वदा (for °) — (L. 13) B Dn2 T3 G4 त्रिशूल (for °ल) T2 3 G2 5 पट्टस (for पट्टिस) K2 Ñ2 3 V1 2 धरी (for धरा) Ś1 मुद्गरै पट्टिसै प्रासै, K1 3 4 Ñ1 Dn D1 3 5 त्रिशूली (Dn1 °ल) पट्टिशी चैव, T1 G4 M4 त्रिशूली प(M4 °रप)ट्टसधरी (G4 °रा) (for °) K2 V2 Dn1 D1 सूर्यचन्द्र, B Dn2 चन्द्रसूर्य (for सूर्यचन्द्र) K4 प्रभाविनी, D3 प्रतापिनी (for पताकिनी) Ś1 सूर्यचन्द्रोपशोभिता (for °) — (L. 14) K4 T2 G1 M4 शुक्ल (for कृष्ण) K1 3 4 Ñ2 3 V B D T2 G2–4 तथा, T3 शुभा, G5 सिता (for प्रिया) K2 शुक्ला चैकादशी तथा, T2 4 G1 कृष्णस्यैकादशी तथा (for °) — After line 14, D2 reads lines 22–25 — (L. 15) N (except Ś1 Ñ1 V2) T G M4 भगिनी बलदेवस्य (for °) K1 (sup lin as above) B1 2 (marg as above) D2 G2 जननी (for रजनी) Ś1 रजनी कालनाशनी, T1 M4 रजनी च हरिप्रिया (for °) — (L. 16) K4 निवास, Ñ1 आसार (for आवास) T5 आधारभूता भूतानां (for °) G(ed) त्वं (for च) — (L. 17) G सा (for च) Ś1 Ñ1 D1 देवानां प्रिया तथा (Ś1 ह्यसि); Ñ2 (marg) V1 °नां विजयाय च, B1 2 (marg) 3 देवी त्वमपराजिता, T1 M4 देवानां हितकारिणी (for °) — M4 reads lines 18–20 after line 36 — (L. 18) Ś1 सुवासाश्चीरवासाश्च (for °) K1 3 4 Ñ3 (marg as above) V2 3 Dn D1 3 5 6 T2 G1 2 5 M4 रात्रि, Ñ1 G3 रात्री (for रौद्री) Ś1 B3 G2 रौद्री (G2 रात्रि) सध्याचरी निशा (for °) — T4 om (hapl) lines 19–20 — (L. 19) Ś1 K2 भूतानां (for मृत्युश्च) V3 D5 T2 G1 2 4 5 M4 सुरा (for तथा) D4 T1 मांसादन (for मांसौ°) B D5 D7 4 G2 सुरामांसबलिप्रिया (for °) — (L. 20) D2 भयावहा (for वधाय च) — (L. 21) Ś1 चैव, K3 B1 चासि, K4 त्वं च (for चापि) K3 सावित्रीणां च देवानां; V2 B3 D सावित्री चासि (V2 चैव) देवानां, T1 M4 गायत्री सर्वभूतानां (for °) Dn मन्त्र (for भूत) K2 गर्भेष्वपि;

सिद्धिः सांयात्रिकाणां च वेला सागरयायिनाम् ।
यक्षाणां प्रथमा यक्षी नागाना सुरसेति च ॥
ब्रह्मवादिन्यथो दीक्षा शोभा च परमा तथा ।
ज्योतिषां त्वं प्रभा देवि नक्षत्राणा च रोहिणी ॥
राजद्वारेषु तीर्थेषु नदीना सगमेषु च ।
पूर्णे च पूर्णिमाचन्द्रे कृत्तिवासा इति स्मृता ॥
सरस्वती च वाल्मीकेः स्मृतिर्द्वैपायने तथा ।
सुरादेवी च भूतेषु स्तूयसे त्वं स्वकर्मभिः ॥
इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनेति च ।
ऋषीणां धर्मबुद्धिस्तु देवानामदितिस्तथा ॥

कर्षकाणा च सीतेति भूतानां धरणीति च ।
तापसाना च देवी त्वमरणी चाग्निहोत्रिणाम् ॥
क्षुधा च सर्वभूताना तृप्तिस्त्वं च दिवौकसाम् ।
स्वाहा तुष्टिर्धृतिर्मेधा वसूनां त्वं वसूमती ॥
आशा त्व मानुषाणा तु तुष्टिश्च कृतकर्मणाम् ।
दिशश्च विदिशश्चैव तथा ह्यग्निशिखा प्रभा ॥
शकुनी पूतना च त्वं रेवती च सुदारुणा ।
निद्रा च सर्वभूताना मोहनी क्षत्रिया तथा ॥
विद्यानां ब्रह्मविद्या त्वमोंकारोऽथ वषट् तथा ।
नारीणा पार्वती च त्वं पौराणीमृषयो विदु॰ ॥

---

Ñ2 V3 -गणेषु च ( for गणस्य च ) Ś1 D5 माया मन्त्रगणस्य च ( D5 °गगेष्वपि ), K1 3 4 Ñ1 D1 6 T2 G भूत( K1 माया )- मन्त्रगणेषु च, T1 M4 भूमि( M4 °मि )र्मन्त्रगणेषु च ( for °) — After line 21, D2 T4 ins 1** — After line 22, Ñ1 reads and Ds2 repeats line 32, V2 3 B Ds1 T3 4 read lines 32 33 and D reads line 33 Ñ1 om lines 23 29 — ( L 23 ) K Ñ2 3 V1 3 B3 ( marg ) D1 5 6 T3 G2 5 M4 सि( V1 ऋ )द्धिस्त्व यात्रि( K3 पैतृ )काणां तु ( V1 च ), V2 B D2-4 सिद्धिश्च ( D2 °स्त्व ) देवि पात्राणा ( B2 कामाना ), T2 G1 3 4 सिद्धिस्त्वं याज्ञिका( G1 3 °या )ना तु ( for ° ) Ś1 वेला सागरना मता, K1 2 Ñ3 ( marg ) V1 3 B Dn D2-4 6 T1-3 G M4 वेला ( D3 °णी ) त्वं सागरस्य च, G( ed ) माता भूतभवस्य च ( for ° ) —( L 24 ) V2 3 B2 परमा ( for प्रथमा ) D3 [अ]पि ( for [इ]ति ) — Ñ2 3 V B2 Dn Ds1 K2 नागाना सुरसेविता ( for ° ) D1 5 ins after line 24 D2 T4 after line 21

1** कन्याना ब्रह्मचर्या च सौभाग्य प्रमदासु च ।
[ V2 Dn2 Ds1 D2 4 त्वं ( for च ) Poona ed कन्यानां ब्रह्मचर्यंत्वं ( for ° ) ]

—( L 25 ) Ś1 ब्रह्मचारिणी ( for °वादिनी ) T3 ब्रह्मवादी यथो दिष्टा ( for ° ) Ś1 व्रतिनी च दृढव्रता ( for ° ) —( L 26 ) G1 वेति ( for देवि ) —( L 27 ) Ñ1 B1 2 ( marg as above ) 3 D3 T4 दुर्गेषु ( for तीर्थेषु ) D3 सागरेषु ( for संगमेषु ) D4 नदीषु सागरेषु च ( for ° ) —( L 28 ) K1 3 4 Ñ3 B3 Dn D3 D1 3 5 T2-4 पूर्णा च, K3 पूर्णाथ, D2 पूर्णा तु ( for पूर्णे च ) D पुरा, T3 [इ]ति च ( for इति ) V2 स्थिता D1 स्मृति ( for स्मृता ) Ś1 बुद्धिर्नीलाम्बिका श्रुति, G( ed ) त्व बुद्धिरम्बिका शुचि ( for ° ) —( L 29 ) D6 G2 3 5 वाल्मीकौ ( for के ) K1 स्मृतिर्द्वैपायनस्य च ( for ° ) — After line 29, K1 3 4 Ñ3 3 V1 Dn D1 3 5 6 T1 3 4 G M4 read lines 32 and 33 ( transposed ), while K2 reads and Ds2 repeats line 32 after line 29 —( L 30 ) D4 उमा, T3 4 सुधा ( for सुरा ) K3 T2 G1 3 5 देवेषु ( for देवी च ) G4 स्वरे वेदषु भूतषु ( for ° ) D2 3 श्रूयसे, G2 त्रा° ( for स्तू° ) — After line 30 K2 reads lines 36ᵃ-37ᵃ repeating them in their proper place —( L 31 ) K1 ( sup lin as above ) चन्द्रस्य चारुपुष्टिस्त्वं ( for ° ) Ś1 D5 [आ]श्रया ( for [इ]ति च ) —( L 32 ) K3 वृत्तिस् ( for -बुद्धिस् ) K1 3 4 Ñ2 3 Dn Ds1 s2 ( second time ) D1-3 5 6 T1 3 4 G M4 मानसी ( for अदितिस् ) K2 Ñ3 ( marg ) V Ds2 ( first time ) [इ]ति च ( for तथा ) Ś1 देवानां च परायणम् ( for ° ) — K3 Ñ1 om line 33 —( L 33 ) K4 कर्पुकाणा च सीमेति ( for ° ) — Ś1 om lines 34-59 —( L 34 ) T3 तपस्त्वं हि ( for च देवी त्वम् ) —( L 35 ) K1 ( sup lin as above ) गतिस् ( for तृप्तिस् ) —( L 36 ) K2 ( first time ) स्पृहा ( for स्वाहा ) K1 धृत्तिर्, K3 4 Ñ3 V2 Dn T3 4 तृप्तिर्; V3 D1 3 पुष्टिर्, D2 5 वृष्टिर् ( for तु° ) B1 3 Ds2 चैव, M4 देवी ( for मेधा ) K2 ( both times ) D1 वसुभैता, Ñ2 3 V1 3 D2 वसुंधरा; D3 सरस्वती, D6 T1 2 G1-3 5 M4 च समता ( for वसुमती ) D4 वसूना च वसू स्मृता ( for ° ) —( L 37 ) K2 Ñ3 ( marg ) V1 2 B D5 T3 4 आशा चासि ( K3 Ñ3 [ marg ] V1 चैव, T4 चापि ) मनुष्याणा, T1 M4 आशा च मनुजानां च ( for ° ) K4 M4 पुष्टिश् ( for तु° ) —( L 38 ) T3 G1 [अ]ग्निमुखा ( for °शिखा ) G5 प्रिया ( for प्रभा ) —( L 39 ) K3 शाकुन्ती ( for °नी ) D3 सुगुप्ता च नभोरूपा ( for ° ) —( L 40 ) G4 वसु ( for सर्व ) K2 चाक्षया; Ñ3 ( marg as above ) त्वं क्षमा ( for क्षत्रिया ) — K3 Ñ1 D1 om ( hapl ) line 41 —( L 41 ) K4 Ñ3 V1 3 B1 3 D3 4 5 T4 G4 M त्वमोंकारो, Ñ2 V3 ओंकारो हि T3 ओंकारश्च ( for °रोऽथ ) D3 T2 G1 त्वमोंकारो वषट् स्वधा ( D6 क्रिया ) ( for ° ) —( L 42 ) V3 पुराणा ( for पौराणीम् ) B2 ( marg

अरुन्धत्येकभर्तृणां प्रजापतिवचो यथा ।
पर्यायनामभिर्दिव्यैरिन्द्राणी चेति विश्रुता ।
त्वया व्याप्तमिदं सर्वं जगत्स्थावरजंगमम् ॥
समामेषु च सर्वेषु अग्निप्रज्वलितेषु च ।
नदीतीरेषु घोरेषु कान्तारेषु भयेषु च ॥
प्रवासे राजवन्धे च शत्रूणां च प्रमर्दने ।
प्राणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः ॥
त्वयि मे हृदयं देवि त्वयि बुद्धिर्मनस्त्वयि ।
रक्ष मां सर्वपापेभ्यः प्रसादं च करिष्यसि ॥
इमं देव्याः स्तवं दिव्यमितिहाससमन्वितम् ।
यः पठेत्प्रातरुत्थाय शुचिः प्रयतमानसः ॥
त्रिभिश्च काङ्क्षितं मासैः फलं वै सम्प्रयच्छति ।
षड्भिर्मासैर्वरिष्ठं तु वरमेकं प्रयच्छति ॥
अर्चिता नवभिर्मासैर्दिव्यं चक्षुः प्रयच्छति ।
संवत्सरेण सिद्धिं तु यथाकामं प्रयच्छति ।
सत्यं च ब्रह्मचर्यं च द्वैपायनवचो यथा ॥

No 9

After 51 12, D6 T G M4 G(ed) ins.

अतिप्रसक्तो क्रीडाया कृष्णसंकर्षणौ मुहुः ।
कस्मिंचिद्वेश्मनि निर्गत्य नवनीतं च गृह्णतः ॥
सक्षोभ्य तक्रं बहुशो दारकौ दारकैः सह ।
अन्यभूता ततो राजन्घटाश्च परिजघ्नतुः ॥
दधि पीत्वा तु देवेशौ तान्घटांश्च पिपेषतुः ।
शिक्यं च परिजग्राह कृष्णो दारकवेषवान् ॥
भित्त्वा छित्त्वा च गोविन्दः पयो क्षीराणि सर्वशः ।

---

as above ) 8 5 श्रुवन् ( for विदु ) T3 4 पौराणीं सुतपोऽश्रुवन् ( for ᵇ ) — ( L 43 ) K4 च माऽत्रीना , T1 M4 [ए]व मारुणा, T2 G1 4 5 [ए]कमारुणा , G3 तु मारुणा ( for [ए]कभर्तृणा ) — K2 V2 B D3 D4 subst for line 43 Ñ3 ins after 44

2** भेदो विवादशीलाना त्वमिन्द्राणीति विश्रुता ।

— ( L 44 ) T3 4 पर्यायैर् , Bom and Poona eds G(cd) पर्यायै ( for पर्याय ) — ( L. 45 ) Ñ3 V1 सर्वमिद ( by transp ) — ( L 46 ) V3 D3 D4 वह्नि ( for अग्नि ) G1 -प्रज्वलनेषु ( for °लितेषु ) B1 3 D4 वह्निप्रज्वलिते ( D4 °लने ) तथा ( for ᵇ ) — ( L 47 ) K Ñ V2 3 B2 3 Dn D1 5 चौरेषु , V1 चोरे वा , B2 ( marg ) D5 सर्वेषु , T3 4 शैलेषु , G3 पूर्वेषु ( for घोरेषु ) Ñ2 वनेषूपवनेषु च , B1 2 ( marg as above ) 3 D3 D4 वनेषु च गुहासु च , D5 भयेषु च रिपुष्वपि T3 4 गुहासु च वनेषु च ( for ᵇ ) — ( L 48 ) T1 M4 प्रवेशे ( for प्रवासे ) D2 -बन्धे वा , D3 -बन्धेषु ( for बन्धे च ) — ( L 49 ) K3 प्राणत्यागेषु सर्वेषु ( for ᵃ ) K3 रक्षा नान्य , G2 M4 रक्षा न च ( for हि रक्षा न ) — ( L 50 ) K1 3 4 Ñ1 2 3 ( marg as above ) V2 3 Dn D1 6 T1 2 4 G M4 चित्त ( for बुद्धिर् ) — ( L 51 ) K4 कुरुष्व हि ( for करिष्यसि ) K1 2 B D3 D2-5 T3 4 प्रसाद कर्तुमर्हसि ( for ᵇ ) — T1 om lines 52-57 G2 om line 52 Before line 52, T3 ins वैशम्पायन — ( L 52 ) K1 Ñ1 D2 6 चैव स्तव , B2 तु सस्तव , D3 स्तव स्तव , D4 च वैष्णव ( for देव्या स्तव ) B1 3 D5 पुण्यम् ( for दिव्यम् ) K2 D1 6 T1 G4 5 प्रकल्पितम् , V3 -प्रकीर्तितम् ( for -समन्वितम् ) K1 3 4 Ñ1 2 V2 Dn D2 3 T3 G1 इति व्यास( V2 वेदव्या )सप्रकल्पि( K3 Ñ2 °कीर्ति )तम् , D32 इतिहास पुरा( marg सना )तनम् , D4 5 पुण्य व्यासप्रकीर्ति° , G3 M4 इतिहास प्रकल्पितम् ( for ᵇ ) — ( L 53 ) D2 स्वय ( for शुचि ) K3 सयत ( for प्र° ) D4 प्रयत शुचिमानस ( for ᵇ ) — V3 D6 T3 G1 3 4 5 M4 om line 54 — ( L 54 ) K1 Ñ3 V1 2 Dn D2 3 5 त्रिभिर्मासै काङ्क्षित तु , K3 D1 काङ्क्षित स त्रिभिर्मासै , K4 Ñ1 त्रिभिर्मासैश्च काङ्क्षित , T3 4 G5 त्रिभिर्मासैर्वरिष्ठ तु ( for ᵃ ) T3 4 G3 वरमेकं ( for फल वै स ) — K4 D3 G3 om ( hapl. ) lines 55 57 , Ñ3 om ( hapl ) line 55 D5 reads line 55 on marg — For line 55, B3 D5 T3 4 subst

3** षण्मासात्पठते यस्तु काङ्क्षित च लभेत स ।

[ T3 4 षण्मास ( for °सात् ) T3 4 काङ्क्षित लभते नर ( T4 च स ) ( for ᵇ ) ]

— K3 om ( hapl ) line 56 — ( L 56 ) D2 4 G4 तु त्रिभिर् , T4 दशभिर् ( for नव° ) T3 य पठेद्दशभिर्मासैर् , G2 अर्चिता स्व च षण्मासैर् ( for ᵃ ) — D6 T2 G1 2 4 5 M4 om ( hapl ) line 57 , D4 reads it on marg — ( L 58 ) K1 3 4 Ñ1 3 V Dn D1-3 5 T1 सत्य ( K3 4 °त्यं ) ब्रह्म च दैवं ( T1 दिव्य ) च ( for ᵃ )

9

G2 om line 1 M4 om line 2 — ( L 2 ) D2 om 2ᵇ T3 4 प्रज( T4 च ज )ह्नतु ( for च गृह्णत ) — ( L 3 ) T4 तत्र

तच्छिष्टं चैव देवेशः क्षितौ च समवाक्षिपत् ॥
पायसं च समानीय गृहादन्यत्र निक्षिपन् ।
दारकेभ्यस्तदा कृष्णो ददौ स्व च समाचरन् ॥
शिक्यास्थ घटमादाय दध्नां दारकसत्तमः ।
निर्भिद्याच्छिद्य भूमौ तु निष्पिपेष स केशवः ॥
दारकौ तौ तु सहसा वत्सानां च परंतप ।
दाम्नां विमोचनं कृत्वा वत्सान्वेनूरपायताम् ।
प्रतिवेश्म तदा तौ तु व्यसनं पर्यवर्तताम् ॥
अतिप्रसक्तौ तौ दृष्ट्वा सर्वव्रजविचारिणौ ।
न च शक्तो वारयितुं नन्दगोपः सुदुर्मदौ ॥
ततस्तु दारकैः सार्धं कृष्णश्चक्रुश्च तद्गतम् ।
एकस्य तु तदा कृष्णो दारकस्य महीपते ।
प्रच्छाद्य तरसान्य तु दारकं प्रत्युवाच ह ॥
गच्छ वत्स यथान्यत्र तथा दृष्टैश्च दारकैः ।
यदि दृष्टस्त्वमन्यैस्तु जितो दण्डधरो मम ।
इत्युक्त्वा बलभद्रं तु तं द्रष्टुं प्रैषयद्बली ॥
स गत्वा बलभद्रस्तु गृहीत्वा दारकं बलात् ।
केशवाय ददौ तं तु स्व जितः केशवोऽब्रवीत् ॥
पीलकं च समानीय विक्षिप्य भुवि गूहितम् ।
आहूय दारकान्सर्वानिदमाह जगत्पतिः ॥
शक्तश्चेद्भवता कश्चित्कीलं गृह्णातु पश्यतः ।
मम पार्श्वगतो भूत्वा दण्डो देयश्च तस्य ह ॥
तच्छ्रुत्वा दारकाः सर्वे तं द्रष्टुं यत्नमास्थिताः ।
नाशक्नुवंश्च ते सर्वे जितास्तानब्रवीदिति ॥
एवमादीनि गोविन्दो बालक्रीडनकानि वै ।
चकार मतिमान्कृष्णो दारकैः सह गोकुले ॥

No 9A

$D_6$ T G $M_4$ G(ed) cont $M_{1-3}$ ins after 51.12

क्वचिद्वेश्मनि सगम्य शिक्यस्थान्पयसो घटान् ।
आदाय युगपत्सर्वान्पय पीत्वा मुदा भृशम् ।
अभिहत्य ततः सर्वान्निष्पिपेष हसन्नहि ॥
आच्छिद्य शिक्यमन्यत्र ततो दध्नो घटान्क्षिपन् ।
यथाकामं ततः पीत्वा दारकेभ्यस्ततो ददौ ॥
अथ वेगान्मुदा कृष्णः क्वचिदन्यत्र वेश्मनि ।

$M_4$ हत्वा (for भित्त्वा) $T_2$ भित्त्वा (for छित्त्वा) —(L 8) $G_4$ तदुच्छिष्ट $T_4$ देन (for चैव) $T_1$ गोविन्द (for देवेश) — घ देवेश (for °) —(L 9) $T_2$ समाधाय (for °नीय) —(L 10) $T_3$ प्रददौ तं $T_{1\ 3\ 4}$ $M_4$ दारक (for विक्षिपन्) —(L 11) $T_4$ शिक्यस्थ (for शिक्यास्थ) घटं क्षिपन् (for °) —(L 12) $T_4$ निर्भिद्याभिद्य भूम्या तु (for °) —(L 13) —(L 14) $D_6$ $T_{1\ 2}$ G $D_6$ $T_2$ $G_{1\ 4}$ $M_4$ परतपौ (for °प) — $T_{3\ 4}$ $M_4$ विलोलनं °नुमनीयत, पर्यवर्तताम् (…) —(L 17) $T_{3\ 4}$ [अ]शक्नुवद् $T_4$ सर्वे व्रजविचारिण (for °) $D_6$ $T_{1\ 2}$ सुदुर्दमौ, $T_4$ च दुर्मदौ (for सुदु°) (for च शक्तो) —(L 18) $M_4$ मतस् (for ततस्) $T_1$ स बालकै (for तु दारकै) $T_{3\ 4}$ तर्जितम्, $M_4$ तद्गतौ (for °तम्) —(L 20) $D_6$ $G_2$ गन्तु, $G_1$ त तु (for [अ]न्य तु) $T_{3\ 4}$ प्रत्यभाषत (for प्रत्युवाच ह) —(L 21) $T_2$ तत्र; $G_1$ तस्य (for [अ]न्यत्र) $G_1$ तु (for च) —(L 22) $D_6$ $G_2$ करो (for -धरो) $T_{3\ 4}$ क्षितौ दण्डकरो मम (for °) —(L 23) $T_1$ तं (for तु) $T_{3\ 4}$ गुप्त्वा तत्र बलाद्धरि (for °) —(L 24) $T_4$ कृत्वा (for गत्वा) $T_2$ $G_1$ दार गजगृहे बलात् (for °) —(L 25) $T_3$ $G_1$ त्वरित (for स्व जित) —(L 26) $T_3$ तत कृष्णो, $T_4$ तदा कृष्णा (for समानीय) $T_4$ गोपितम् (for गूहितम्) $T_3$ निक्षिप्य भुवगोपितम् (for °) —(L 27) $G_2$ जगद्गुरु (for °त्पति) —(L 28) $T_2$ शक्तिश्चेद् (for शक्त°) $T_3$ पश्यतु (for °त) $T_4$ कील कृष्णा तु पश्यतु (for °) —(L 29) $T_2$ $G_1$ पार्श्वे (for पार्श्व) $T_2$ दण्डा देयाश्च (for दण्डो देयश्च) — $T_4$ om (hapl) lines $30^b$–$31^a$ —(L 32) $T_3$ $G_3$ एवमादीनि गोविन्दो (for °)

9 A

(L 1) $D_6$ $T_{2\ 3}$ $G_{1\ 3\ 4\ 5}$ $M_4$ निर्गत्य, $T_1$ $M_3$ संगत्य, $T_4$ संवेश्य (for सगम्य) —(L 2) $T_4$ सर्वं (for सर्वान्) —(L 3) $D_6$ $T_{2\ 4}$ G अभिगम्य, $T_3$ हृतम् (for भृशम्) $T_{1\ 3\ 4}$ $G_{3-5}$ सर्वे (for सर्वान्) $T_3$ °प्राश्य, $M_4$ °पत्य (for °हत्य) —(L 4) $T_4$ आक्षिप्य; $G_1$ अभिद्य (for आच्छिद्य) $M_4$ हरि (for ह्यहि) $M_4$ दधि (for दध्नो) $G_2$ ततो —(L 5) $T_3$ दधि कृत्स्न, $T_4$ यथा दुग्धान्घटान्क्षिपेत् (for °) —(L 6) $M_3$ मुहु (for मुदा) कृत्स्नं (for यथाकामं)

गुप्तान्घटानुपादाय त्वरितोऽथ बभञ्ज ह ॥
कश्चिद्घृतघटान्पूर्णान्बहूनादाय वेश्मनि ।
व्यभजद्दारकेभ्यस्तु भक्षयंश्च स्वयं ददौ ॥
अन्यतो वेश्मनः शिक्यान्घटांस्तक्रस्य पूरयन् ।
आदायाधूय बहुधा तस्मिन्नेव मुहुः क्षिपन् ।
व्यहसद्विविधं हासं ननर्त च स दारकः ॥
तक्रेषु च पयः क्षिप्य तक्रं च पयसि क्षिपन् ।
पयो जलेषु संयोज्य घृतमग्नौ जुहाव च ॥
एवं तौ सततं तत्र चक्रतुर्वेश्मसंगरम् ॥
अथ वत्सान्मुहुर्नद्धान्दामभिः कीलकेषु वै ।
भित्त्वा छित्त्वा च दामानि वत्सान्धेनुष्वनीयताम् ॥
दामान्याच्छिद्य सर्वत्र वत्सान्दिक्षु प्रकालयन् ।
आकृष्य दारकान्केशैरन्योन्यं समबन्धत ॥
निरुध्यमानो गोपीभिः स चक्रे वै मुहुर्मुहुः ।
सर्पिषा पयसा चैव दध्ना तक्रेण शून्यकम् ॥
प्रायेण गोव्रजं चक्रे पूर्वजेन सहायवान् ।
पश्यन्तीनां च गोपीनां कृष्णो नित्यं स संभ्रमम् ॥
पिबन्पयश्च विविध चक्रे चैव स वैशसम् ॥
क्रन्दन्त्योऽथ मुहुर्गोप्यो यशोदानिकटं ययुः ।
कृष्णस्य चेष्टितं सर्वं यशोदायै न्यवेदयन् ॥
मम कुम्भ्यो दश हताः पुत्रेणानेन दुर्मते ।
न च शिष्टं पयस्तक्रं घृतं वा दधि लेशकम् ।
किमद्य क्रियते मूढे जीविका मम नश्यति ॥

अन्याः ।

पञ्चाशन्मम कुम्भीना शिक्यादादाय ते सुतः ।
घृतस्य पूर्णान्सुश्लिष्टान्पश्यन्त्या मम हन्ति ह ॥

अपराः ।

अन्तर्वेश्मन्यशून्यांश्च कुम्भान्सर्वान्घृतेन वै ।
ताञ्शून्यान्कारयामास न च शिष्टं घृतं मम ॥
अतिक्रुद्धा तथान्याह केशानाकृष्य सर्वशः ।
पञ्चत्रिंशद्घटान्कृष्णो घृतेन पयसा समम् ।
आघूर्योत्क्षिप्य चाविध्य निचिक्षेप च भूतले ॥

---

— (L 9) $M_{1-3}$ बभञ्ज (for व्यभजद्) $T_3$ ₄ व्यभक्षयन्दार केभ्यो (for °) $D_6$ T G $M_4$ भक्षयन्स्वयमाबभौ (for °) — (L 10) $T_3$ अन्यत्र (for अन्यतो) $D_6$ $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ M पूरकान् (for °यन्) — (L 11) $T_2$ आधूय (for आदाय) $T_{1\ 3\ 4}$ आदाय (for आधूय) $G_2$ बहु (for मुहु) — $T_{1\ 3}$ om. (hapl) lines 12-13 — (L 12) $M_3$ जहास (for व्यहसद्) $G_4$ $M_1$ त्रिविधावादान् (for °ध हास) $G_3$ ननाद (for ननर्त) — (L 14) $G_1$ जहार (for जुहाव) $T_4$ स (for च) — After line 14, $T_1$ G(ed) read 52 1-3 and $M_1$ 52 $1^a$–$3^b$ (all with the ref) repeating the same in its proper place — (L 15) $T_2$ ₄ G वसन्तौ (for एव तौ) $M_1$ G(ed) सकरम् (for -संगरम्) — After line 15, $M_3$ ins

1** गाव दुष्टा नीरुजाश्च वत्सला कामदोहना ।
आगम्य हर्षितास्तौ तु पुच्छादिष्वत्रलम्बताम् ॥
पुच्छगोमूत्रसुस्नातौ शृङ्गकर्णावलम्बिनौ ।
वत्सानारोहमाणौ च तत्पाले फेनवौ शिशू (sic) ॥

— (L 16) $M_3$ बध्वा (for बद्धान्) G(ed) दाम्ना वै (for दामभि) — (L 17) $T_1$ $G_2$ $M_{1\ 4}$ छित्वा, $G_3$ $M_2$ छित्वा (for भित्त्वा) $M_{1\ 2}$ भित्वा (for छित्त्वा) $D_6$ $T_{1\ 3\ 4}$ $G_{3\ 5}$ [अ]नीयत (for °ताम्) — (L 18) $G_1$ [आ]भिद्य (for [आ]च्छिद्य). $G_4$ सर्वान् (for वत्सान्) $T_3$ ₄ $M_4$ प्रचार( $T_4$ °ल )यन् (for प्रकालयन्) — (L 19) $T_3$ ₄ प्रकृष्य (for आ°) $T_1$ ₄ G(ed) अन्योन्य समबध्नत, $T_2$ $G_1$ °न्य समबन्धह, $T_3$ $M_4$ °न्य समभिद्य( $M_4$ °बध्न )ताम् (for °) — (L 20) $T_3$ ₄ नियद्धो ( $T_4$ °रुध्य ) गोपिभिश्चैव (for °) $T_2$ ₄ $M_{1-3}$ चक्रे चैव ( $M_1$ °व ) (for स चक्रे वै) — (L 23) $T_2$ $G_1$ $M_{1\ 4}$ सभ्रम (for °मम्) — $M_1$ om line 24 — (L 24) $M_4$ बहुधा (for विविध) $M_{2\ 3}$ पश्यन्त्योऽ° $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_4$ शैशवम् (for व्यपिबत्तासां (for °) वैशसम्) — (L 27) $D_6$ $M_3$ कुम्भा (for कुम्भ्यो) — (L 28) $T_4$ क्रियार्थं वै, $T_4$ पयस्तत्र (for °स्तक्र) — (L 29) $T_1$ अन्यत्, $T_3$ ₄ अत्र (for अद्य) $D_6$ T G $M_4$ जीवित (for जीविका) — $T_2$ ₄ $G_1$ om the ref — (L 30) $D_6$ $G_3$ ₄ $M_3$ कुम्भाना (for कुम्भीना) $T_3$ ₄ पञ्च वै मम कुम्भाना (for °) — $D_6$ $T_{1\ 2\ 4}$ G $M_{1\ 3\ 4}$ om the ref — (L 32) $D_6$ $T_{1\ 2\ 4}$ G $M_4$ पूर्णाश्च, $T_3$ शिक्याच्च (for [अ]शून्यांश्च) $D_6$ तांधि, $T_{1\ 2\ 4}$ $M_{1\ 3}$ कुर्वन्, $M_4$ कुम्भान् (for सर्वान्) $T_3$ कुम्भानादाय सर्वेत (for °) — (L 33) $D_6$ T $T_{1\ 2\ 4}$ G शून्यास्तु, $M_4$ तान्पूर्णान् (for ताञ्शून्यान्) $D_6$ T G $M_{3\ 4}$ दृष्ट (for शिष्टं) — (L 34) $T_2$ $M_{1-3}$ अभि (for अति) $D_6$ [अ]प्यन्या, $T_1$ साह, $T_{2\ 3}$ G $M_4$ चान्या, $T_4$ [अ]न्या सा (for [अ]न्याह) $D_6$ $T_2$ ₃ G $M_{3\ 4}$

न किंचिद्व्यञ्जनं मूढे मम वेश्मनि विद्यते ।
गावश्च वत्सकैः पीताः कृष्णेनानेन मोक्षितैः ॥

अन्या ।

पायसं बहु पक्कं मे भद्रे जग्धमनेन वै ।
दध्योदनं भृशं दत्तं दारकेभ्यो रसान्वितम् ॥
अपूपा बहवो जग्धा भर्त्रर्थे रक्षिता मया ।
सक्तवो बहवः पीताः संस्कृताः शर्करादिभिः ॥
किं गृहेण च मे कार्यं किं घोषैः किं गवादिभिः ।
एषा यास्यामि दुर्मेधे मूढे दुष्पुत्रसूयिनि ॥

अन्या ।

धेनवो मम नष्टाः स्युर्वत्सैः सार्धं दशाद्य वै ।
अनेन कालिता मूढे तव पुत्रेण दुर्हृदा ॥
भक्षितं नवनीतं मे वल्मीकप्रतिमं नवम् ।
जीविका मम नष्टाभूदेषा यास्यामि देशकम् ॥
एवमत्यन्ततो गोप्यो विनेदुर्विस्वरं भृशम् ।
का गतिर्वद भद्रेति गोप्यः सर्वास्तदाब्रुवन् ॥
अथ ताभ्यो यथानष्टं यशोदा दत्तवत्सलम् ।
समाश्वास्य ततः सर्वाः स्वं स्वं वेश्म व्यकालयत् ॥

No. 10

After 53. 7, $D_6$ S G(ed.) ins :

प्रागेव वसुदेवस्तु नन्दगोपेन वारितः ।
वृन्दावननिवासस्ते परिहर्तव्य इत्यपि ॥
स पुत्रगुरुतां पश्यन्वनं चासुरसेवितम् ।
विममर्शाथ बुद्ध्यैव नन्दगोपो महामतिः ॥
बहुसंपदमालोक्य गर्गो वृन्दावने वने ।
गोपाः प्रवेष्टुमिच्छन्ति प्रलम्बस्तत्र चासुरः ॥
नान्यद्वनं च पश्यामि समीपे संपदा युतम् ।
किं नु कर्तव्यमिति मे पुत्रयोश्च हितं भवेत् ॥
एवं विचारयन्तं तं नारदोऽभ्यागमन्मिथः ।
ब्रह्मणा चोदितो विप्र इन्द्रेण च महात्मना ॥
यदृच्छया महायोगी नित्यं लोकहिते रतः ।
ववन्दे नन्दगोपस्तु तस्य वै चरणौ मुनेः ॥
तमाह सस्मितं विप्रः संभ्रमाकुलमानसम् ।
ज्ञात्वा त्वयि मनोदुःखं प्रणयात्तेऽहमागतः ॥
इदं रहस्यं देवानां नाख्यातव्यं कदाचन ।
अस्मिन्काले महाप्राज्ञ काले ज्ञास्यति वै भवान् ॥
यत्त्वां वक्ष्यामि घोषेश तत्त्वं ज्ञास्यसि वै विभो ।

आधूय ; $T_3$ आदाय ( for आरुज्य ) $T_4$ शिशूनादाय सर्वत· ( for ⁸ ). —( L. 35 ) $D_6$ विंशद् ( for त्रिं° ). $G_2$ मम ( for समम् ) —( L. 36 ) $T_3$ $G_{1, 4, 5}$ तान्विध्य , $M_4$ चाहत्य ( for चाविध्य ). $T_3$ आदायोत्क्षिप्य तान्विध्य ( for ⁰ ). $D_6$ $T_{1, 3, 4}$ $G_{1, 4, 5}$ M भुवस्तले ( for च भूतले ). —( L. 37 ) $T_4$ भाजनं ( for व्यञ्जनं ). $T_1$ $_2$ $G_{1, 3-5}$ $M_4$ —( L. 38 ) $T_{3, 4}$ वत्सेन ( for कृष्णेन ). — $T_{3, 4}$ $G_3$ om the मोक्षिता ; $G_3$ मोचिता ( for मोक्षितैः ). — $M_4$ om ( hapl ) ref —( L. 41 ) $T_{3, 4}$ पुन ( for मया ). —( L. line 43. —( L. 43 ) $D_6$ $T_{3, 4}$ G गृहेषु ( for गृहेण ) — $T_4$ 44 ) $T_{3, 4}$ दुर्बुद्धे ( for दुर्मेधे ). $D_6$ पश्य ( for मूढे ). G( ed. ) om. the ref. —( L. 45 ) $D_6$ दशाद्य वै , $T_{2, 4}$ दशा परा ( for दशाद्य वै ) —( L. 46 ) $T_4$ [आ]कुलिता ; $G_1$ कलिता, G( ed ) कारिता ( for कालिता ) — $G_3$ om line 49 —( L. 49 ) $D_6$ $T_3$ $G_{1, 3-5}$ $M_4$ अन्यास्तदा ( for अत्यन्ततो ). $T_1$ एव मत्यन्तघोषेण ( for ⁰ ) $T_{1, 2}$ विपेदुर् ( for विनेदुर् ) $T_1$ G(ed ) विस्तरं ; $T_4$ वत्सरं ; $M_4$ विस्वरा ( for °रं ). — $M_{1-3}$ om. line 50. —( L. 50 ) $T_4$ तौ ( for का ). $T_1$ $M_4$ कुत्र ; $T_{2, 4}$ वत्स ( for भद्र ). —( L. 52 ) $T_3$ तदाश्वास्य ( for समाश्वास्य ) $T_3$ अनुनीय गृहं ययौ ( for ⁸ ).

10

( L. 2 ) $T_{2, 4}$ $G_{3-5}$ वृन्दावने ( for °वन ). —( L. 3 ) $D_6$ $T_{1-3}$ G $M_4$ स्व- ( for स ) $T_4$ -महिमां ( for -गुरुतां ). —( L. 5 ) $D_6$ T G $M_4$ -सपानम् ( for -संपदम् ). $D_6$ $G_2$ गोपाः वृन्दावनं वनम् ( for ⁸ ). — After line 5, $M_4$ repeats 53 7ᵃᵇ. —( L. 6 ) $D_6$ S ( except $M_{1-3}$ ) प्रवेष्टुं भूशमि च्छन्ति ( for ⁰ ). —( L. 7 ) $T_3$ पश्यन्तौ च ( for च पश्यामि ). $D_6$ $T_3$ $G_{1, 3, 4}$ चाश्रमे ; $T_1$ $M_4$ पत्तने ; $T_4$ $G_1$ प्रसवे ; G( ed. ) ग्रामके ( for समीपे ). $T_3$ समभयवसमान्वितम् ; $G_3$ चाश्रमे चाप दायुतम् ( for ⁸ ). —( L. 8 ) $T_1$ च सुखे ; $T_4$ स्वस्ति वै ( for च हिते ). —( L. 9 ) $D_6$ $T_3$ G $M_4$ पथि ; $T_2$ भुवि ( for मिथ ) — $M_{1-3}$ om line 10 —( L. 10 ) $T_{2, 4}$ राजन् ( for विप्र ). —( L. 11 ) $T_{2, 4}$ हितंकर ( for -हिते रत· ). — $T_4$ om lines 13-14 —( L. 13 ) $T_3$ $G_1$ विस्मिते ( for

न केवलौ नव सुतौ देवौ मानुषतां गतौ ।
रामकृष्णाविमौ जातौ दैत्यमूलहराविति ॥
आसुरं पक्षमुद्धर्तुं जायमानं जनार्दनम् ।
दैत्यः शकटवेषेण ज्ञात्वा त्वामाश्रितोऽसुरः ।
शकटस्य त्वधः सुप्तं निहन्तुं निश्चितं शिशुम् ॥
रक्षाहीनं युवाभ्यां च वियुक्तं वीक्ष्य दानवः ।
लब्धरन्ध्रश्च निष्पेष्टुं तत्क्षणाच्छिशुना हतः ॥
ताडितो वामपादेन विपर्यस्तो ममार ह ।
प्रबुद्धस्य तु बालस्य तन्मुहूर्तं विजृम्भतः ॥
तस्यामेव निशायां च पूतना नाम राक्षसीम् ।
पाययन्तीं विषपयः सस्तन्यं प्राणमाहरत् ॥
पुनरर्जुनसूतौ तौ दैत्यौ तच्छिद्रदर्शिनौ ।
हन्तुकामौ तदा बालः स्वयमेव जघान ह ॥
नानारूपधरान्दैत्यानेवं हन्ता तवात्मजः ।
भयशान्तं न ते गोप विश वृन्दावनं वनम् ॥
तत्रापि सुमहत्कार्यं कर्ता कृष्णोऽयमीदृशम् ।
प्रत्यक्षं तव चैतानि कर्माणीह कृतानि च ॥
हनिष्यति प्रलम्बं च रामः परबलार्दनः ।
कृष्णश्चासुरसंघातं न भीस्त्वामुपसर्पतु ॥
इत्युक्त्वा नन्दगोपं तु कृष्णं तुष्टाव नारदः ।
नमस्तुभ्यं जगद्धात्रे विश्वकर्त्रे नमो नमः ॥
कृष्णाय बलरूपाय बहुरूपाय ते नमः ।
नीलजीमूतवर्णाय गोपवेणुप्रवादिने ॥
नमस्ते देवकीमातर्नमस्ते यादवेश्वर ।
नमस्ते देवदेवेश नमो मायाविधायिने ।
त्रैलोक्यस्थितिसंहारसृष्टिकर्त्रे नमो नमः ॥
विश वृन्दावनं देव विहर त्वं यथासुखम् ।
तत्र दैत्यान्महावीर्याञ्जहि यत्नपरो भव ॥
इत्युक्त्वा नारदे याते नन्दगोपो महामतिः ।
व्यपेतभयसंत्रासः पुत्रयोर्मुदमावहत् ॥

## 11

After adhy. 53, $D_6$ S ins :

वैशंपायन उवाच ।

तौ तु वृन्दावनं प्राप्तौ वसुदेवसुतावुभौ ।
चेरतुर्वत्सयूथानि चारयन्तौ स्वरूपिणौ ॥

---

स॰) $M_{1, 2}$ -चेतसम् (for मान॰) — $T_{3, 4}$ $M_{1-3}$ om line 16 — (L 16) $T_1$ तदा (for काले) — $T_1$ $G_4$ om line 17 — (L 18) $T_{3, 4}$ $M_{1, 2}$ दिव्यौ, $M_3$ दिव्य (for देवौ) $G_4$ मानुष्यता (for ॰षता) — (L 19) $D_6$ एतौ (for जातौ) $T_3$ इव (for इति) — (L. 20) $M_4$ बलम् (for पक्षम्) $G$(ed) उत्क्रन्तु (for उद्धर्तुं) — (L 21) $D_6$ $T_{3, 4}$ रूपेण (for वेषेण) $M_{1, 2}$ सुर (for ऽसुर) — (L 22) $G$(ed) निश्चित (for ॰त) $D_6$ सुतम् (for शिशुम्) $T_3$ निहन्तु निश्चित शिशु (for $^b$) — For line 23, $M_{1-3}$ subst

1** युवाभ्यामथ निर्मुक्तं वीक्ष्य दामोदरं तदा ।

— (L 24) $D_6$ S (except $T_4$ $M_{1-3}$) तत्क्षण (for ॰णाच्) — $M_{1-3}$ om line 26 — (L 26) $G$(ed) प्रवृद्धस्य (for प्रबु॰) $T_1$ प्रबुद्ध स तु बालस्तु $M_4$ प्रलम्ब स तु बालश्च (for ॰) $T_1$ $M_4$ त मुहूर्तं व्यजृम्भत (for $^b$) — (L 27) $D_6$ पूतना नाम राक्षसी (for $^b$) — (L. 28) $D_6$ पाययन्ती (for ॰यन्तीं) $T_3$ पाययन्ती विष स्तन्य (for $^a$) $D_6$ स्तन्य प्राणमथा हरत्, $T_1$ $M_4$ सम प्राणैरपा॰, $T_3$ तस्या प्राणमपा॰ (for $^b$) — (L 29) $T_2$ $_3$ $G$ $M_4$ द्वौ (for तौ) — (L. 30) $D_6$ $T_{1, 2, 4}$ $G$ $M_4$ तदा बाल, $T_3$ तथा बाल (for तदा बाल) — (L 31) $T_4$ अय (for एवं) $G$(ed) हन्तु (for हन्ता) $G_2$ जनार्दन (for तवात्मज॰) — (L 32) $M_4$ ततो (for न ते) $T_3$ नन्दगोप भय त्यज (for $^a$) — (L 33) $T_3$ ईश्वर (for ईदृशम्) — $T_{3, 4}$ $M_{1-3}$ om line 34 — (L 36) $D_6$ -संघातान् (for ॰तं) $T_4$ निर्भीस्त्वम्, $G_2$ मा भीस्त्वाम् (for न भी॰) $T_{3, 4}$ सर्पं च (for सर्पतु) — Before line 37, $T_1$ $G_2$ ins वैशंपायन Before line 38, $M_{1, 2}$ ins नारद — $T_{3-4}$ om (hapl) lines 39 43 $D_6$ om (hapl.) line 39 — (L 39) $T_1$ $G_2$ $M_{3, 4}$ बाल (for बल॰) $M_2$ भग कृष्णाय कृष्णाय (for $^a$) $M_4$ बाल (for बहु) — (L. 40) $M_4$ -बर्हाय (for वर्णाय) — (L 41) $D_6$ $G_2$ पुत्र (for मातर्) — (L 43) $D_6$ $T_1$ $G_{2, 5}$ हरे (for नम॰) — (L. 44) $D_6$ $T_{1, 2, 4}$ $G$ $M_4$ विहरस्व (for ॰र त्वं) — (L. 45) $T_3$ हरे (for भव) — Before line 46, $T_{1, 4}$ $G_3$ ins वैशंपायन — (L. 46) $T_1$ महाद्युति, $T_{3, 4}$ विशां पते (for महामति) — (L. 47) $G_2$ उद्वहन् (for आवहत्)

11

Some Mss om the ref $D_3$ $T_2$ $M_{1-3}$ om lines 1-2 — (L 1) $G_{2, 5}$ प्राप्त (for प्राप्तौ) $G_3$ नन्दगोप (for

रथस्य एव प्रवर शरैर्वारय सात्यके ॥
न त्वेव निर्दय बाणा मोक्तव्या सात्यके त्वया ॥
अस्य ब्राह्मणचापल्य सोढव्य खलु सर्वथा ॥
तत षष्ट्या रथेपूणा गरुडस्य द्विजस्तदा ।
आजघान महाबाहो सात्यकि प्रवरो भृशम् ॥
शिनेर्नप्ता ततस्तस्य क्षिपत सायकान्नृप ।
चिच्छेद पुरुषव्याघ्रो वचन चेदमब्रवीत् ॥
ब्राह्मणो नामिहन्तव्यस्तिष्ठ विप्र स्वकर्मणि ।
अवध्या यादवाना हि स्वपराधेऽपि हि द्विजा ॥
प्रवरस्तु प्रहस्यैनमुवाच कुरुनन्दन ।
अल क्षान्त्या नृणा शूर युध्य सर्वात्मना रणे ॥
जामदग्न्यस्य रामस्य शिष्योऽहमपि यादव ।
नामत प्रवरो नाम सखा क्षात्रस्य धीमत ॥
न देवा योद्धुमिच्छन्ति मन्यन्तो मधुसूदन ।
आनृण्य सौहृदस्याद्यमद्य गतासि माधव ॥
ततस्तयोस्तदा रौद्र सग्रामो ववृधे नृप ।
अस्त्रैर्दिव्यैर्नरव्याघ्र शैनेयद्विजमुख्ययो ॥
चौक्षचाल तदा राजन्भुचराश्च सहस्रश ।
तस्मिन्वर्तति सग्रामे तेषाममितमहात्मनाम् ॥
नातिशिश्ये रणे कार्ष्णिरैन्द्रिमस्त्रभृता वरम् ।
ऐन्द्रि कार्ष्णि महात्मान मायिन शूरसमतम् ॥
हन्त गृह्ण प्रतीच्छेति तावुभौ योधसत्तमौ ।
युयुधाते नरश्रेष्ठ परस्परजयैषिणौ ॥
अथ शार्ङ्गायुधसुतं शचीपुत्र प्रतापवान् ।
विभाव्याभ्यहनद्राजन्दिव्येनास्त्रेण सत्वर ॥
सोऽस्त्र तदतिर्दीप्यन्तमापतन्त शितै शरै ।

°र्स , G3 स र्स ( for शिय ) G3 जम्बुद्वीपाभिसगत ( for ᵇ ) — ( L. 1091 ) K1 4 N2 D1 T1 2 G1 3 4 M1 यात स V1 B D3 5 6 ते यात V3 स जात , D1 सजात ( for सयात ) K3 स्वशक्त्या रोपसज्ञात V2 गुरुशक्त्या नृप ते यात , D5 स्वभक्त्या नृप सप्राप्त ( for ᵃ ) K1 3 Ñ1 V B1 4 Dn D5 D1 T1 G2 3 °घातिना ( for °न ) — ( L. 1093 ) K3 रथस्थम् , Ñ1 V2 B1 Dn D5 T1 M1 भगस्थ , Ñ1 V1 B3 5 T2 3 G1 3 4 तपस्थ ( for रथस्थ ) D5 द्विज तमेव प्रवर , G3 रथस्थे प्रवर चैव ( for ᵃ ) T2 G1 3 4 शरीर् ( for शरैर् ) — ( L. 1094 ) *T2 3 G3 4 बाणैर् ( for बाणा ) K3 D3 सत्यक ( for सात्यके )* — ( L. 1095 ) G3 चापल्यात् ( for °ल्य ) D3 येदूर्न ब्राह्मणानां हि ( for ᵃ ) V1 कर्मणा ( for सर्वथा ) V2 सोढव्य सात्यके त्वया ( for ᵇ ) — ( L. 1096 ) D1 शरेपूणा D3 रथे° ( for रथे° ) — ( L. 1097 ) V2 B1 3 G3 महाबाहु ( for °बाहो ) G3 प्रवर सात्यकिं भृशम् ( for ᵇ ) — ( L. 1098 ) D3 तान प्राप्तान् ( for शिनर्नप्ता ) Dn D5 T1 G3 4 धनुस्तस्य , T2 3 G1 महावीर ( for ततस्तस्य ) Ñ1 तस्याशुगा शिनर्नप्ता ( for ᵃ ) — ( L. 1100 ) K1 हि V1 [ब]ति , G2 4 [ब]पि ( for [ब]भि ) K3 ब्राह्मणे नाभिहन्तव्य ( for ᵃ ) K1 3 N1 V2 Dn तिष्ठ स्व , M1 विप्रस्व ( for विप्र स्व ) — ( L. 1101 ) K3 Ñ1 V2 3 B1 Dn D3 D1 T1 G1 3 ह्यपराधे ; V1 B1 M1 अप° ; D3 ह्यपराद्ध ; G3 त्वपराधे ( for स्व° ) K1 4 सापराधा अपि द्विजा ( for ᵇ ) — ( L. 1103 ) D3 रणे ( for नृणा ) K3 सेकपे ( for शूर ) K1 4 V1 D1 युद्धे T1 3 G1 M1 युधि ( for युध्य ) — ( L. 1104 ) D3 इति D3 मामि ( for अपि ) — ( L. 1106 ) Ñ2 युद्धम् ( for योद्धुम् ) — ( L. 1107 ) Ñ1 Dn T1 2 G3 4 अद्य ( for अद्य ) — ( L. 1109 ) T1–3 G1 3 5 सर्वे दारुणेश्च संग्रामे ( for ᵃ ) — ( L. 1110 ) D3 भूतः ( for चौर ) V2 मत्स्याश्च , T1–3 G1 3–5 M1 महाराज ( for तदा राजन् ) K1 ( marg. ) Ñ2 V1 2 B1 3 D2 5 T1 3 G1 2 4 M1 भूधराश्च Ñ1 Dn2 D1 G1 झषचराश्च ; V3 B1 मृगचराश्च ( for भु° ) — ( L. 1111 ) K1 प्रवृत्त ( for वर्तति ) B1 3 D3 अपि ( for अति ) — ( L. 1112 ) V2 वृषिर् ( for कार्ष्णिर् ) Dn1 रौद्रम् ; G1 3 चेन्द्रम् ( for ऐन्द्रिम् ) K1 D1 T2 3 वर T1 G3 वर ( for वरम् ) K3 इन्द्रसूनुमरिंदमम् V3 ऐन्द्रिमस्त्रविदां वर ( for ᵇ ) — ( L. 1113 ) *G3 ऐन्द्र ( for ऐन्द्रि ) G3 कृष्णं ( for कार्ष्णि ) K1 3 4 V1 B1 Dn D5 D1 4 T1 2 G M1 समरम् ;* V2 समास ( for समतम् ) — ( L. 1114 ) Ñ2 V1 2 D3 हन ( for हन्त ) D2 प्रयच्छ ( for प्रतीच्छ ) K3 हन गृह्ण प्रतीक्षेति ( for ᵃ ) D3 संमतौ ( for सत्तमौ ) — For line 1114 T1–3 G1 3 5 M1 subst.

31** तौ तु बाणाग्रनिर्भिन्नावुभौ भरतसत्तम ।
[ T2 3 G1 सत्तमौ ( for °त्तम ) ]

— ( L. 1115 ) T1 3 G3 M1 नरश्रेष्ठौ ; T3 G1 4 5 रणश्रेष्ठौ ( for नरश्रेष्ठ ) — B3 om. lines 1117–1122 — ( L. 1117 ) T1 3 G1 3 5 M1 आभाष्य ( for वि° ) V2 धीमान् ( for राजन् ) Ñ1 D1 3 T2 3 G1 4 5 सत्वरम् ( for °र ) — ( L. 1118 ) K1 3 4 Ñ3 V B1 3 Dn Dn1 D1 4 5 अपि ( for अति ) Dn1 सो ऽर्धे तत्पतिर्दीप्यमानम् T1 3 G1 3 4 M1 सो ऽर्धं तदति दिव्यं तु ( G3 दीप्यमानं ) G3 सायंकं तदप्यमानं स्म ( for ᵃ ) K1 4 आपतन्तं शि ; T1 3 G1 3 4 M1 स्त्रैण शि ( for आपतन्तं ) — ( L. 1119 ) K3 निरास ( for मराणि )

तस्तम्भे बाणजालेन तदद्भुतमिवाभवत् ॥
ततस्तद्दीप्यमानं तु पपात रणमूर्धनि ।
रौक्मिणेयस्य कौरव्य घोरं दानवमर्दनम् ॥
तेनास्त्रेण रथो दग्धः प्रद्युम्नस्य महात्मनः ।
नादहत्तत्तु घोरं तं रौक्मिणेयं जनाधिप ॥
दहत्यग्निं न खल्वग्निरुद्धतोऽपि विशां पते ।
दग्धाद्रथान्महाबाहू रौक्मिणेयोऽपचक्रमे ॥
अथ नारायणसुतो विरथो रथिनां वरः ।
स्थितो धनुष्मानाकाशे जयन्तमिदमब्रवीत् ॥
महेन्द्रपुत्र दिव्यं त्वं यदस्त्रं मुक्तवानसि ।
नाहमीदृशरूपाणां शक्यो हन्तुं शतैरपि ॥
प्रयत्नं कुरु शिक्षाया यत्नं मेऽद्य प्रदर्शय ।
नास्ति मेऽतिशयं कर्ता सग्रामेऽमरनन्दन ॥
आसीन्मे साध्वसं दृष्ट्वा रथस्थं त्वां धृतायुधम् ।
बिभेमि तव नेदानीं युद्धे दृष्टबलाबलः ॥
मनसा स्पर्शतामेष पारिजातस्त्वया तरुः ।
शक्यं न खलु हस्ताभ्यां स्प्रष्टव्यो यस्त्वया ह्यसौ ॥
रथो मायामयो दग्धस्त्वया यो ह्यस्त्रतेजसा ।
ईदृशानां सहस्राणि स्रष्टुं शक्तोऽस्मि मायया ॥
एवमुक्तो जयन्तश्च मुमोचास्त्रं महाबलः ।
तपसोपचितं तेन स्वयमेवातितेजसा ॥
तद्प्रद्युम्नो महावेगं शरजालैरवारयत् ।
चरमार्यस्त्राणि दिव्यानि मुमोचैवापराणि सः ॥
दिक्षु सर्वासु रुरुधुस्तान्यस्त्राण्यथ भारत ।
रौक्मिणेयं महात्मानमन्तरिक्षे च पञ्चमम् ॥
महोल्कासदृशान्बाणानस्त्राण्यमरसत्तमः ।
मुमोच तानि घोराणि प्रद्युम्नं प्रति सर्वतः ॥
तानि सर्वाणि बाणौघैः कार्ष्णिरस्त्राण्यवारयत् ।
जयन्तं चापरैर्बाणैर्विव्याध निशितैस्तदा ॥
ततो नादः समुत्सृष्टो द्युचरैः पुण्यकर्मभिः ।

—( L 1120 ) G3 तदस्त्रं ( for ततस्तद् ) T1 2 रथ ( for रण ) —( L 1123 ) K1 3 D3 T1 तं तु, Ñ2 V1 तत्र, D4 स्वय, T3 G2 तत्सु ( for तत्तु ) K2 नादहद्धव्यवाहस्त, K4 स्वय, T3 G2 तत्सु ( for तत्तु ) V3 D1 °हत्त तु घोरं वै, Ñ1 T2 G1 4 6 M4 °हत्त तु तद्घोर V3 °हत्तत्र घोर तु, D5 °हत्त्वथ घोरास्त्र, D6 नादायत्त तु यद्घोर ( for °) D3 T1 G3 नराधिप ( for जना° ) —( L 1124 ) K1 अद्भुतो ( for उद्धतो ) —( L 1125 ) Bom Poona eds G( ed ) दग्धान् ( for दग्धाद् ) K1 V1 8 Dn D3 D1 4 6 G2 प्रच्यवंश्च, K2 प्रच्याव्याथ, Ñ2 T1 पतन्त च, D3 प्रच्यवन्त, D3 प्रच्युतस्तु, T2 3 G1 3 5 M4 उत्पतश्च ( for महाबाहू ) K4 दह्यमानाद्रथात्प्राद्रवन् ( for ° ) K3 V1 प्र, T3 G3 त्रि ( for ऽप- ) —( I 1128 ) K3 4 यद् ( for त्व ) K1 यदर्थं, K3 4 अस्त्रं त्वं ( for यदस्त्र ) Ñ1 मयि ( for असि ) —( L 1129 ) D4 5 नाहमीदृक्स्वरू पैश्च ( for ° ) B1 हन्तुं शक्य ( by transp ) Ds3 D4 G2 शरैर् ( for शतैर् ) —( L 1130 ) K1 2 Ñ1 V2 B Dn D3 D1 G2 शिक्षाणां, K2 4 D3 4 शिष्याणां, D2 शिक्षा च ( for शिक्षायां ) V1 2 B3 T1 3 G1 3 5 M4 अद्य ( for मेऽद्य ) K3 प्रदर्शयन् ( for °य ) —( L 1131 ) Ñ2 ऽद्य भयं, D4 निधनं ( for ऽतिशयं ) K1 योऽस्ति मे समरं हर्ता; T1 3 G1 3 5 M4 कर्ता त्वमपि देवानां ( for ° ) —( L 1132 ) Dn3 नास्ति, G2 नासीन् ( for आ° ) K1 T1 3 G3 5 M4 साध्वस ( for साध्वसं ) K3 4 एतायुध, G2 दृतायुधम् ( for धृता° ) N1 V2 Dn D3 T1 —( L 1133 ) D1 दृढ ( for दृष्ट ) G3 बलोऽबलम्, Ñ1 बलोऽबल, M1 बलाबलम् ( for °बल° ) K2 4 युद्धे दृढबलाबलम्, D3 युधि दृष्ट्वा बलाबलम् ( for ° ) —( L 1134 ) Ñ2 V1 3 B1 3 D4 ( marg as above ) 6 स्पृश्यताम् ( for स्पर्श° ) G5 सैष ( for एष ) B3 मनसा स्पृश्यतामेव ( for ° ) B3 तरुस्त्वया ( by transp ) —( L 1135 ) D3 5 शक्यो ( for शक्य ) Ñ2 V1 2 B3 ऽयं त्वया; V3 धनुषा, D3 D6 यस्त्वया ( for यस्त्वया ) D3 स्पृष्ट चैव त्वया ह्यसौ ( for ° ) —( L 1136 ) B1 मायामयो रथो दग्धस् ( for ° ) G3 [आ]जौ ( for यो ) K3 D3 [अ]त्र ( for [अ]स्त्र ) —( L 1137 ) D3 कर्तुं ( for स्रष्टुं ) K1 शक्त स्रष्टुं स्वमायया ( for ° ) —( L 1139 ) V1 3 B D6 [उ]पार्जितं ( for [उ]पचितं ) V2 T1 3 G1 4 5 M1 [उ]पार्जितं ( for [उ]पचितं ) स्पादित, V2 T1 3 G1 4 5 M1 —( L 1140 ) K2 T1 G3 M4 महा- D3 दिव्य ( for तेन ) —( L 1140 ) K2 T1 G3 M4 महातेजा ( for °वेगं ) T2 G1 4 प्रद्युम्नोऽथ महातेजा ( for ° ) —( L 1141 ) V3 अबाधयत्; D6 अवाकिरत् ( for °रयत् ) —( L 1141 ) K1 3 4 N1 2 Dn D3 D1 3 G3 मुमुचे च, V2 B D6 T1 G1 मुमोचाथ; V3 °च च, G2 °चापि ( for °चैव ) V1 मुमुचे चापबालिशः, T2 3 G1 4 M4 मुमोचाथ वराणि स ( for ° ) —( L 1143 ) D2 सस्थितम् ( for पञ्चमम् ) —( L 1144 ) Ñ1 -संनिभ ( for सत्तम ) D3 अस्त्राणि नृपसत्तम ( for ° ) —( L 1145 ) Ñ2 अस्त्राणि, Dn D3 G1 यानि ( for तानि ) V3 सर्वाणि ( for घोराणि ) —( L 1146 ) K1 4 Dn1 D1 M1 शस्त्राणि; V1 सर्वाणि ( for अस्त्राणि ). —( L 1147 ) D1 ( marg as above ) प्रजन्तं ( for जयन्त ) —( L 1148 )

दृष्ट्वा स्थैर्यं च शैघ्र्यं च प्रद्युम्नस्य महात्मनः ॥
प्रवरस्यापि बाणेन शितेन शिनिपुंगवः ।
चिच्छेदेष्वसनं वीरो हस्तावापं च भारत ॥
ततोऽन्यत्स तु जग्राह महत्तद्धनुरुत्तमम् ।
महेन्द्रदत्तं प्रवरो महाशनिसमस्वनम् ॥
स तेन वीरो महता धनुषा विप्रसत्तमः ।
शरान्मुमोच विशिखानर्करश्मिनिभास्तदा ॥
चकर्त च धनुश्चित्रं शैनेयस्यामितौजसः ।
विव्याध सर्वगात्रेषु बाणैरपि च सात्यकिम् ॥
धनुरादाय शैनेयस्ततोऽन्यत्कुरुनन्दन ।
दृढं भारसहं धीमान्विव्याध प्रवरं रणे ॥
उत्त्कर्ततुरन्योन्यं चर्मणी तौ शितैः शरैः ।
गात्रेभ्यश्चैव मांसानि मर्मभिद्भिः शरोत्तमैः ।
अथाष्टधारबाणेन पुनरिष्वसनं द्विधा ।
चिच्छेद प्रवरो वीरस्त्रिभिश्चैनमताडयत् ॥
अन्यदिष्वसनं स तु महीतुमनस द्विजः ।
गदया ताडयामास क्षिप्तया लघुहस्तवत् ॥

सोऽसि चर्म च जग्राह सात्यकिः प्रहसन्निव ।
न जग्राह धनुर्धीमान्गदयाभिहतो भृशम् ।
ततः शरशतान्येव मुमोच प्रवरस्तदा ॥
विहस्तमिव विज्ञाय सात्यकिं यदुनन्दनम् ।
प्रद्युम्नोऽस्य ददौ खड्गं निर्मलाकाशसंनिभम् ॥
तस्य चिच्छेद भल्लेन निस्त्रिंशं प्रवरस्तदा ।
स्सरुदेशेऽपातयच्च प्रवरः प्रहसन्निव ॥
व्यधमच्च तथा चर्म शितैर्बाणैरजिह्मगैः ।
आजघान च शक्त्यैनं हृदि विप्रो ननाद च ॥
तं विह्वलमिव ज्ञात्वा पारिजातजिहीर्षया ।
ताक्ष्यो॑भ्याशे रथेनैव स तस्थौ प्रवरस्तदा ॥
तं पक्षपुटवेगेन चिक्षेप गरुडस्तदा ।
गव्यूतिमेकं सरथः स पपात मुमोह च ॥
तं जयन्तो निपत्याथ पतितं ब्राह्मणं नृप ।
समाश्वास्य रथं दीर्घं समारोपितवांस्तदा ॥
शैनेयमपि मुह्यन्तं पतन्तं च मुहुर्मुहुः ।
आश्वासयानः प्रद्युम्नः पितृव्यं परिषस्वजे ॥

---

K3 D5 खेचरे, Ñ1 2 V1 2 B D3 D6 T1 3 G1 3-5 M5 खमरै, Dn2 खचरे ( for चु° ) — ( L 1149 ) D3 T2 3 G1 4 शौर्यं ( for शैघ्र्य ) — ( L 1151 ) K1 4 Ds2 D1 2 4 5 6 ( marg ) हस्ताचाप ( for °वाप ) — ( 1152 ) K1 महात्मा, K2 D1 3 महान्त, K3 D4 महद्ध, K4 महेन्द्र, Ñ2 V1 B2 सुमहद् ( for महत्तद् ) V2 T2 G5 महद्धनुरनुत्त मम् ( for ° ) — ( L 1153 ) D4 समप्रभम्, D5 सर्म स्वयम् ( for समस्वनम् ) — ( L 1154 ) K4 D2 धनुषा ( for महता ) K4 D3 महता, M1 धनुष्मान् ( for °धा ) B1 2 D5 रिपु ( for विप्र ) — ( L 1155 ) Ñ2 भगवान् V2 निशितान्, V3 B1 2 Dn2 D6 T1 3 G1 2 4 5 M4 विवि धान ( for विशिखान् ) V1 T2 -प्रभास्तदा, B1 2 D3 6 समप्रभान्, G4 निभ यथा ( for निभास्तदा ) V3 अर्कवह्नि- समप्रभान् ( for ° ) — ( L 1156 ) B3 स चकर्त ( for चकर्त च ) V4 महौजस ( for [अ]मितौ° ) — ( L 1157 ) Ñ2 V2 चैव, D5 चैनं ( for सर्व ) — ( L 1159 ) K1 G3 दृढ- ( for दृढ ) Ñ2 B1 2 D3 श्रीमान् ( for धी° ) — ( L 1160 ) V1 Ds2 D5 चर्मणी ( for च° ) — ( L 1161 ) G2 शितैः शरैः ( for शरोत्तमैः ) — ( L 1162 ) Ñ1 V B D3 D6 T1 2 G2 2 M1 [अ]परेण, Ñ2 [अ]ष्टधर, D1 [अ]स्य शर, D3 [अ]स्य चैव ( for [अ]ष्टधार ) D1 3 स पुनश्चि धसन्द्विधा ( for ° ) — ( L 1165 ) K1 3 4 Ñ1 2 V1 3 B Dn D3 4 5 क्षेप्यया ( for क्षिप्तया ) — ( L 1167 ) K3 4 निहतो, D1 ताडितो, G5 ह्रि हतो ( for [अ]भिहतो ) V1 रणे ( for भृशम् ) — ( L 1169 ) G4 M1 विध्वस्तम् ( for विह° ) — Ñ1 om line 1170 — ( L 1170 ) K1 विमलाकाशसंनिभम्, G3 निर्मल तार° ( for ° ) — ( L 1172 ) K4 मुष्टि, D3 3 जत्रु, G2 उरो ( for त्सरु ) Ñ1 V2 B1 2 D6 महातेजा, T1 G3 2 M1 समाहत्य, G2 समामाय ( for ऽपातयच्च ) K3 जत्रुदेशे पातयच्च, B3 जत्रुदेशे महातेजा, T2 3 G1 4 स वरेडे समाहत्य ( for ° ) — ( L 1173 ) D1 तद्विधा ( for च तथा ) K3 अधमत्तद्विधा चर्म, D3 व्यधमच्चर्म खड्गं च ( for ° ) — ( L 1174 ) D3 शैनेयं ( for शक्त्यैनं ) — ( L 1175 ) G1 इमं ( for इव ) Dn ज्ञाय ( for ज्ञात्वा ) V2 जिघृक्षया ( for जिहीर्षया ) — V3 om line 1177 — ( L 1177 ) K2 चिच्छेद ( for चिक्षेप ) T1 2 G1 2 3 M1 प्रवरं ( for गरु डस् ) — ( L 1078 ) T2 G1 3-5 M1 गव्यूतिमेकां स रथात् ( for ° ) Ñ2 V2 B1 2 D4-6 T1 2 G1 2 3 M1 पपात च ( for स पपात ) T2 G3 पपात च मुमोच ह ( for ° ) — ( L 1179 ) K3 पतितं नृपसत्तम ( for ° ) — ( L 1182 ) V1 2 आश्वास्यमान, D2 °सयन ( for °सयान ) — ( L 1183 ) G1 सव्येन ( for परिष° ) — ( L 1184 ) K1 2 4 Ñ1 D1, 2

तं हि पस्पर्श हस्तेन सव्येन मधुसूदनः ।
नीरुजः स्पृष्टमात्रेण सात्यकिः समपद्यत ॥
प्रद्युम्नो दक्षिणे पार्श्वे वामे तु शिनिपुंगवः ।
तस्थतुः पारिजातस्य युद्धशौण्डतरावुभौ ॥
जयन्तः प्रवरश्चैव रथेनैकेन भारत ।
संपतन्तौ महेन्द्रेण प्रहस्योक्तौ महात्मना ॥
नासन्नमभिगन्तव्यं गरुडस्य कथचन ।
वलयानेप पततां राजा च निनतासुतः ॥
दक्षिणे चैव सव्ये च च पार्श्वे मम धृतायुधौ ।
उभौ स्थितौ युध्यमानं मामेवेह प्रपश्यतम् ॥
एवमुक्तौ स्थितौ वीरौ ततः शक्रस्य पार्श्वयोः ।
ददृशाते युध्यमानौ देवराजजनार्दनौ ॥
अथेन्द्रो गरुडं बाणैर्महाशनिसमस्वनैः ।
विव्याध सर्वगात्रेषु महास्त्रप्रभवैस्तदा ॥
स तान्बाणानणयन्वैनतेयः प्रतापवान् ।
ससाराभिमुखो वीरः शक्रनागमरिंदमः ॥

उभौ तौ सहसा राजन्वलिनौ गजपक्षिणौ ।
प्रयुद्धौ वीर्यसपन्नौ महाप्राणौ दुरासदौ ॥
रदनैः पन्नगारिं करेण शिरसा तदा ।
ऐरावतो गजपतिराजघान मदस्तदा ॥
तथा नखाङ्कुशैस्तीक्ष्णैर्वैनतेयो वलोत्कटः ।
तथा पक्षनिपातैश्च शक्रनागं जघान ह ॥
मुहूर्तं सुमहानासीत्संपातो गजपक्षिणोः ।
विस्मापनीयो जगतः प्रेक्षकाणां भयावहः ॥
मूर्ध्न्यैरावत तार्क्ष्यस्ताडयामास भारत ।
नखाङ्कुशकरालेन चरणेन महाबल ॥
स प्रहाराभिहतस्तो निपपात निविष्टपात् ।
पारियात्रे गिरिश्रेष्ठे द्वीपेऽस्मिञ्जनमेजय ॥
पतन्तमपि त शक्रो न मुमोच महानलः ।
कारुण्यादथ सौहार्दात्पूर्वाभ्युपगमादपि ॥
कृष्णोऽप्यन्वगमच्चैन पृष्ठतः प्रभुरव्ययः ।
पारिजातधता धीमान्गरुडेन महाबलः ॥

---

त्रिरुजः (for नी°) N2 B1 स्पर्श (for स्पृष्ट) K3 Dn त्रिरुज स्पर्शमात्रेण, B3 G2 3 त्रिरुज (B3 नीरुज) स्पृष्टमात्रस्तु (for °) —(L 1186) Ñ1 B1 3 -शौण्डौ तु तावु, B3 -शौण्डौ घ्नाव् (for -शौण्डतराव्) —(L. 1190) G2 स राजा (for राजा च) K3 D1 राजा विनतया स्तु (D1 सु) त (for °) —(L. 1191) K3 मध्ये, V2 वामे (for सव्ये) K3 पार्श्वे च सु, Ñ2 मम पार्श्वे (by transp) —(L 1192) K2 V3 D3 6 T3 युध्यमानौ (for °मान) K1 V2 D1 G5 प्रपश्यथ, Ñ1 T3 3 G4 °श्यथ, D6 °श्यताम् (for °श्यतम्) —(L. 1193) D3 पार्श्वेत (for °यो) — After line 1194, K2 ins an addl. colophon mentioning adhy name संकुल युद्धे ऐरावणगरुडौ —(L 1195) D3 वज्राशनि (for महा°) — After line 1195, D4 ins

32** वरुणो धर्मराजस्तु धर्मज्ञो बहुभिर्वृत ।
कृष्ण स योधयामास दिक्पालैश्च नराधिप ॥
सर्वे देवा महेन्द्रेण कृष्ण मत्वा तु मानुषम् ।
यावन्त एव ते देवा ददृशुस्तं समन्तिके ॥

—(L 1196) D3 चैव (for सर्वे) B1 T3 -प्रवरैस् (for प्रभवैस्) — M4 om (hapl) lines 1197–1203 —(L. 1197) K2 V2 3 Ds2 D2-4 6 स तान्बाणानगणयद् (for °). —(L. 1198) K1 3 D3 4 6 अरिंदम (for °म) —(L 1199) K3 वाहने (for सहसा) K1 1 D2 4 वीरौ (for राजन्) —(L 1200) D6 G6 प्रवृद्धौ (for प्रयुद्धौ) K2 D2 4 युयुधाते वीर्ययुतौ (D2 °तौ), D4 युयुधानौ वीर्ययुतौ (for °) V2 B1 3 D6 दुराधर्षौ (for महाप्राणौ) T1 3 G1 3 5 महास्वनौ (for दुरासदौ) —(L 1201) Ñ1 V1 3 नदनै, D6 ततस्तु (for रदनै) T1-3 G1 3-5 तदा नागरिपु वीरं (for °) T1 3 G1 3 5 तरसा (for शिरसा) —(L. 1203) K2 D1 4 तीव्रैर् (for तीक्ष्णैर्) D3 नखराङ्कुशैस्त तीक्ष्णैर् D4 नखाङ्कुशैस्तथा तीक्ष्णैर् (for °) K4 D6 महाबल, V2 3 D1 बलोत्कटे (for °त्कट) —(L. 1204) Ñ2 निपातेन, G1 निघातैश्च (for निपा°) Ñ1 B1 3 D6 अताडयत् (for जघान ह) —(L. 1205) V2 B2 स मुहूर्तं; B1 D5 मुहूर्तं तु (for °र्तं सु) Ñ1 संमर्दो, V1 D3 D1 संपातं; V2 D6 समर्दौ, B2 ससर्गौ (for संपातो) —(L. 1206) K3 Ñ1 1 V1 1 B1 2 Dn D3 D2 4 6 T1 G3 प्रेक्षितॄणां (for प्रेक्षकाणां) — B3 om lines 1207 —(L 1207) K1 मूर्ध्नि ऐरावत तार्क्ष्यस् (for °) —(L. 1208) Ñ1 V1 प्रहारेण; (for करालेन) G1 गरुडेन (for चरणेन) D2 महाबली (for °बल) —(L. 1209) D4 स तत्प्रहाराभिहतो (for °) K1 D5 निपत्य च, Ñ1 B1 3 D5 स पपात (for निप°) —(L. 1211) V1 गत तम् (for पतन्तम्) — G2 om (hapl) lines 1212–1214 —(L 1212) Ñ2 पूर्वादभिगमादपि, T3 G1 3 5 M4 सर्वाभ्युपग° (for °) —(L. 1213) D3 G1 पृष्ठत प्रभुरव्यय (for °) —(L 1214) Ñ1 धीर, Ñ2 श्रीमान्; B D6 वीरो (for धीमान्) T1 3 G1 3 5 M4 पारि-

स तस्थौ पर्वतश्रेष्ठे पारियात्रे तु वृत्रहा ॥
ऐरावते समारूढो समासो वनृषे पुनः ।
शरैराशीविषप्रख्यैरसयुक्तैः सुतेजितैः ।
अन्योन्यं कुरुशार्दूल शक्रकेशवयोर्महान् ॥
ततो वज्रायुधो वज्रमशनिं च पुनः पुनः ।
मुमोच गरुडे राजन्नैरावणरिपौ नृप ॥
वज्राशनिनिपातास्तान्सेहे शक्रस्य नागहा ।
अवध्यो बलिनां श्रेष्ठो निसर्गेण तपोबलात् ॥
मुमोच पक्षमेकैकं मानयन्नशनिं तदा ।
वज्रं च देवराज्ञोऽथ भ्रातुः कश्यपसंभवः ॥
आक्रम्यमाणस्तार्क्ष्येण न्यमज्जन्नृपते गिरिः ।
विवेश धरणीं राजञ्शीर्यमाणः समन्ततः ॥
चुकूज बहुमानेन कृष्णस्य स तु पर्वतः ।
तमद्राक्षीत्ततः कृष्णः किंचिच्छेषमधोक्षजः ॥
तं मुक्त्वा गरुडेनाथ तस्थौ देवो विहायसि ।
प्रद्युम्नं च तदोवाच सर्वकृल्लोकभावनः ॥
इतो द्वारवतीं गत्वा रथमानय माचिरम् ।
सदारुकं महाबाहो मत्तेजोबलमाश्रितः ॥
वक्तव्यो बलभद्रश्च राजा च कुकुराधिपः ।
श्वो जित्वेन्द्रमागमिष्ये द्वारकामिति मानद ॥
तथेत्युक्त्वा तु धर्मात्मा प्रद्युम्नः पितरं विभुः ।
गत्वा यथोक्तमुक्त्वा च यादवेशबलावुभौ ॥
नाडिकान्तरमात्रेण पुनस्तं देशमाययौ ।
दारुकेण समायुक्तं रथमास्थाय भारत ॥

Colophon

वैशंपायन उवाच ।

तमारुह्य रथं कृष्णः पारियात्रं गिरिं ययौ ।
यत्रैरावतमास्थाय स्थितः सुरपतिः प्रभुः ॥
पारियात्रो गिरिश्रेष्ठो दृष्ट्वायान्तं जनार्दनम् ।
शाणपादसमो भूत्वा प्रविवेश वसुंधराम् ॥
प्रियार्थं वासुदेवस्य प्रभावज्ञो महात्मनः ।
तस्य प्रीतो हृषीकेशः पर्वतस्य जनाधिप ॥

जातं बहन्धीमान् ( for ᵃ ) T1 s G1 s s M4 महात्मना ( for °बल ) — ( L 1215 ) Ñ1 Cal ed संभूत( Cal ed °वृद ) पर्वते तस्थौ ( for ᵃ ) — ( L 1216 ) K3 Ñ1 Dn D1 s ववृते ( for °घे ) — ( L 1217 ) K1 अभ्रयुक्तैः, Ñ1 s T2 रत्न°, V2 मध्वैर्युक्तै, M4 शस्त्रयुक्तै ( for अस्त्र° ) K4 G1 सुपूजितै, Ds1 G1 सुतेजसै, T2 s G4 °जनै ( for °जितै ) G2 s रत्न युक्तै सुतेजनै ( for ᵇ ) — ( L 1219 ) G3 कोपाद् ( for वज्रम् ) D1 s सागानि ( for अ° ) — ( L 1220 ) T1-s G1 s-s M4 om ( hapl ) lines 1220ᵇ–1226ᵃ D3 गतो ( for रिपौ ) — ( L 1221 ) K3 Dn पक्षिराट् ( for नागहा ) — ( L 1222 ) Bomb Poona eds G(ed) ततो ( for तपो ) — ( L 1223 ) K4 एकं तु ( for एकैक ) — ( L 1224 ) Ñ3 D3 s s राजस्य ( for राज्ञोऽथ ) K4 वज्रेण देवराजोऽथ ( for ᵃ ) — ( L 1225 ) K1 निमज्जत्, V3 निमज्ज ( for न्यमज्जन् ) G3 गिरौ ( for गिरि ) D3 निमज्जन्नपतद्गिरि ( for ᵇ ). — ( L 1227 ) Ñ1 बहुमानेन कृष्णस्य, T1-s G1 s s M4 चुकूज बहुधा पक्षी ( for ᵃ ) T1 G3 M4 पश्यत ( for पर्वत ) Ñ1 न चुकूज स पर्वत, T2 G5 केशवस्य तु पश्यत ( for ᵇ ) — ( L 1228 ) D3 तत्राद्राक्षी स्वयं कृष्ण ( for ᵃ ) K3 शिष्टम् ( for शेषम् ) — ( L 1229 ) D3 इत्युक्त्वा ( for तं मुक्त्वा ) K3 T1 s G3 s तं मुक्त्वा गरुडं नाथ ( for ᵃ ) — ( L 1230 ) K4 धर्मकृत्( for सर्व° ) — ( L 1232 ) D3 मत्तो बलसमाश्रित ( for ᵇ ) — ( L 1233 ) V3 B1 T2 s G1 s s बलदेवश्च ( for °भद्रश्च ) V1 कुकुराधिपतिस्तथा, T1 M4 राजा कुरुकुलाधिप ( for ᵇ ) — ( L 1234 ) B1 s T2 s G1 s गमिष्यामो ( B1 s °मि ), Dn T1 G3 s s M4 स्वागमिष्ये ( for आग° ) K4 जित्वेन्द्रमागमिष्ये श्वो, Ñ1 श्वो वर्जयित्वा गन्तास्मि ( sic ) ( for ᵃ ) — ( L 1235 ) K4 ऽवतरन् ( for पितर ) Ñ3 V3 B1 D2-s प्रभु, B3 Ds T1-s G3 विभुम्, G2 भुवि, M4 नृप ( for विभु ) — ( L 1236 ) K2 s B1 s Dn D1 s याद वेन्द्र, Ñ1 s V B3 Ds नरदेव ( for यादवेश ) G2 याद वेन्द्रयगावुभौ ( for ᵇ ) — ( L 1237 ) K4 तालिकान्तर, D3 निमेषा° ( for नाडिका° )

Colophon — *Mention of the Fpnc* K3 Dn1 Ds1 T3 — *Mention of Khila* K3 Ñ1 V B Dn Ds D3 — *Adhy name* K Ñ1 s V B Dn D1 D2 s T1 s G1 s s M4 पारिजात( K1 °जातक, T1 G1 °जाताप )हरणम्, D1 पारिजातहरणे संकुलयुद्धम् — *Adhy no* K3 ( marg ) 127, V1 133, V3 132, V2 B2 131, Dn Ds1 D4 128, D1 125, D3 139, T1 G1-4 M4 142, T2 G1 144, T3 151, G2 124, G3 145

( L 1239 ) D1 समारुह्य ( for त° ) — ( L 1240 ) B2 G1 तत्र ( for यत्र ) K3 [ए]व गजम्( for [ऐ]रावतम् ) K4 विभु ( for प्रभु ) — ( L 1241 ) B2 V1 गिरिवरो ( for °श्रेष्ठो ) V3 पारिपात्रे गिरिश्रेष्ठ ( for ᵃ ) — ( L 1242 ) D2 सोऽशुपाद ( for शाणपाद ) — ( L 1243 ) Dn1 प्रियार्थे ( for °र्थं )

ततः प्रयान्तं युद्धार्थमच्युतं कुरुनन्दन ।
सपारिजातो गरुडः पृष्ठतोऽनुययौ बली ॥
प्रद्युम्नः सात्यकिश्चापि गरुडस्थौ महाबलौ ।
गतावुभौ रक्षणार्थं पारिजातमरिंदमौ ॥
ततस्त्वस्तं गतः सूर्यः प्रवृत्ता रजनी नृप ।
उपस्थितं पुनर्युद्धं शक्रकेशवयोस्तदा ॥
सुप्रहाराहतं दृष्ट्वा विष्णुरैरावतं गजम् ।
नातिकल्य महातेजा देवराजानमब्रवीत् ॥
गरुडाभिहतः पूर्वं नातिकल्यो गजोत्तमः ।
ऐरावतो महाबाहो रात्रिश्च समुपोह्यते ॥
श्वः प्रभाते पुनः कामं प्रवर्तस्व यथेच्छसि ।
एवमस्त्विति कृष्णं तु देवराजोऽब्रवीत्प्रभुः ॥
उवास पुष्कराभ्याशे देवराजः पुरंदरः ।
वज्रं गिरिमयं कृत्वा धर्मात्मा नृपसत्तम ॥
ब्रह्मा ततो जगामाथ कश्यपश्च महानृषिः ।
अदितिश्चैव सर्वे च देवा मुनय एव च ॥
साध्या विश्वे च कौरव्य नासत्यावश्विनौ तथा ।
आदित्याश्चैव रुद्राश्च वसवश्च जनेश्वर ॥
नारायणश्च पुत्रेण सात्यकेन च भारत ।
सहोवास गिरौ रम्ये पारियात्रे प्रहृष्टवत् ॥
यः स शाणप्रमाणोऽस्य भक्त्या समभवन्नृप ।
वर आदात्ततस्तस्य पर्वतस्य महाद्युतिः ॥
शाणपाद इति ख्यातो भविष्यसि महागिरे ।
पुण्येनार्धेन तुल्यो हि पुण्यो हिमवतः शुभः ॥
एवमेव च भूमिष्ठो भव पर्वतसत्तम ।
मेरुणा स्पर्धमानो हि बहुचित्रमृगायुतः ॥

K2 V2 B3 D6 G2 महाबल° ( for °रमन° ) — ( L. 1244 ) K3 जनार्दन ( for जनाधिप ) — ( L. 1245 ) K1.4 प्रियार्थे, K1 ( marg ) 3 B Dn1 D1 3 6 T2 G2 4 प्रयातं, T1 °ते ( for °न्त ) D4 आगत ( for अच्युत ) — ( L. 1246 ) D5 पृष्ठस्थो ( for °तो ) K1 3 4 Dn D1 T1 G3 तदा, Ñ2 पुन ( for बली ). Ñ1 पृष्ठतो च बली ययौ ( for ° ) — ( L. 1247 ) T2 महात्मन ( for °बलौ ) — ( L. 1248 ) V2 B1 3 D6 पारिजात ( for रक्षणार्थं ) Ñ1 गता यत्र पारिजातं; D2 तावुभौ रक्षणार्थं च ( for ° ) Ñ1 D6 ररक्षतुररिंदमौ, V2 B1 3 रक्षितुं जनमेजय ( for ° ) — ( L. 1249 ) Ñ1 V2 B1 3 D6 ऽस्तं गमत् ( for त्वस्तं गत° ) — ( L. 1250 ) K1 ( marg as above ) स्थितं पुन ( for उपस्थितं ) Ñ1 B3 युद्दे ( for युद्धं ). V2 B3 D6 उपस्थिते पुनर्युद्धे ( for ° ) K N2 V1 3 B2 Dn D3 D1-6 G3 इह, Ñ1 B1 3 D6 प्रभो, V2 नृप, T2 तथा ( for तदा ) — ( L. 1251 ) K2 V2 D3 G2 स ( for सु° ) D2 3 प्रहारार्दित, G1 प्रभाग्रहत ( for प्रहारा° ) D6 T1-3 G3 5 M4 स्वप्रभाव ( D6 °प्रहार-; G5 °वाहन, M4 °प्रवाहा )हतं दृष्ट्वा ( for ° ) V1 पुनागत, B1 3 D6 ऐरावणं ( for °वत ) — ( L. 1252 ) T2 G4 महाराज ( for °तेजा ) K1 ( sup lin as above ) 3 V2 देवराजमथा( K1 °नु )ब्रवीत् ( for ° ) — ( L. 1253 ) V2 -हतं ( for हत ) K3 गरुडाप्रहत पूर्वं, Ñ2 °डोऽभिहत पूर्वं, D3 °डेनाहत पूर्वं ( for ° ) — ( L. 1254 ) K2 D4 ( marg as above ) 5 महातेजा ( for °बाहो ) K2 V2 B3 D6 रात्रिश्च समपद्यत, Ñ2 V1 B2 °श्च समुपागता, V2 °श्च समुपागमत्, B1 रात्रि सा समपद्यत ( for ° ) — ( L. 1255 ) Dn D5 यथाकाम ( for पुन कामं ). T1, 2 G1 3-5 M4 प्रभाते तु पुन कर्म ( for ° ) K1 4 वर्तयस्व, D5 प्रहरस्व ( for प्रवर्तस्व ) — ( L. 1256 ) G1 उक्त्वा तु ( for अस्त्विति ) Ñ2 D2 3 पुन ( for प्रभु ) — ( L. 1257 ) T2 उवाच ( for उवास ) K4 देवराज पुरंदरम् ( for ° ) — ( L. 1258 ) K1 D6 वज्रं; D2 3 दुर्गं ( for मन ) Ñ2 दृष्ट्वा ( for कृत्वा ) T1-3 G1 3 5 M4 शक्रकृष्णाहवं श्रुत्वा ( for ° ) — ( L. 1259 ) V2 3 T1 2 तत्र ( for ततो ) B1 D6 G1 3 5 M4 ब्रह्मा तत्रागमाथ ( for ° ) Ñ1 V2 B1. 2 D6 कश्यपश्चैव तत्र निशाम्य ( for ° ) — ( L. 1260 ) K1 3 4 D1 5 ते सर्वे, D1 सर्वेश्च, T2 सर्वे चा ( for सर्वे च ) T3 3 G1 4 देवाश्च मुनयस्तथा ( for ° ) — ( L. 1261 ) G3 सिद्धा ( for साध्या ) — ( L. 1262 ) K4 T2 3 G4 5 M4 नरेश्वर ( for जने° ) — ( L. 1263 ) K4 स्व, Ñ1 D5 ऽप्य, V1 B1 3 D6 ऽपि, T1-3 G1 3-5 M4 तु ( for च ) K2 सात्यकिश्चैव भारत ( for ° ) — ( L. 1264 ) K1 तस्मिन्; K4 राम्यां ( for रम्ये ) K2 G3 प्रहृष्टवान्, D6 सहेष्टवत ( for प्रहृष्ट° ) — Ñ1 om. line 1265 — ( L. 1265 ) K1 Ñ2 B2 Dn G2 यस्स शाण; K4 यत्र शाण-, D1 य समोऽणु, D6 G3 यश्च शाण ( for य स शाण° ) D3 यत्राशाणप्रमाणाग्यो ( for ° ) — ( L. 1266 ) Ñ1 V2 B1 2 D6 सर्वा गति D3 जनेश्वर ( for महाद्युति° ) — ( L. 1267 ) Ñ2 शशपाद, D1 सोऽणु° ( for शाण° ) D1 महागिरि ( for °गिरे ) — ( L. 1268 ) V2 T1 G3 [अ]नन ( for [अ]र्धेन ). V2 D6 T2 3 G1 4 पुण्येनानेन तुल्येन ( V2 D6 °स्यश्च ); G3 प्राणेनानेन तुल्यो हि ( for ° ) D6 गिरे; T1-3 G1 4 5 तुल्यो ( for पुण्यो ) Ñ2 सुन ( for शुभ° ) D1 पुण्य हिमवत सुर ( for ° ) — Ñ2 om line 1270 — ( L. 1270 ) K4 मृगै युत ; D3 गुणैर्युत ( for मृगा° ) — After line 1270, Ñ1 2 V B2 D3 ins

तथा दत्त्वा वरं तस्य पर्वतस्य तु केशवः ।
दध्यौ गङ्गां सरिच्छ्रेष्ठां नमस्कृत्वा वृषध्वजम् ॥
अथाययौ विष्णुपदी स्मृता कृष्णेन भारत ।
संपूज्य तां ततः कृष्णः स्नात्वा स्नानमधोक्षजः ॥
उदकं च प्रहायाथ बिल्वं च हरिरव्ययः ।
देवमावाहयामास रुद्रं सर्वसुरेश्वरम् ॥
ततः प्राप्तो महादेवः सोमः सप्रवरो विभुः ।
तस्योपरि बिल्वस्य तथा गङ्गोदकस्य च ॥
तं पारिजातकुसुमैरर्चयामास केशवः ।
तुष्टाव वाग्भिरीशेशं सर्वकर्तारमीश्वरम् ॥
रुद्रो देवस्त्वं रुदनाद्रावणाच्च
रोरूयमाणो द्रावणाच्चादिदेवः ।
भक्तं भक्तानां वत्सलं वत्सलानां
कीर्त्या युक्तक्लेशाय प्रभवाम्यन्तरेण ॥
ग्राम्यारण्यानां त्वं पतिरिह पशूनां
ख्यातो देवः पशुपतिः सर्वकर्मा ।
नान्यस्त्वत्तः परमो देवदेव
जगत्पतिः सुरवीरारिहन्ता ॥
यस्मादीशो महतामीश्वराणां
भवानाद्यः प्रीतिदः प्राणदश्च ।
तस्माद्धि त्वामीश्वरं प्राहुरीशं
सन्तो विद्वांसः सर्वशास्त्रार्थतज्ज्ञाः ॥
भूतं यस्माज्जगदत्यन्तधीर
त्वत्तोऽव्यक्तादक्षरादक्षरेश ।
तस्मात्त्वामाहुर्भव इत्येव भूतं
सर्वेश्वराणां महतामत्युदारम् ॥

33** रमे त्वां पश्यमानोऽहं बहुचित्रमृगायुतम् ।
[ V3 -गणायुतम्, Ds1 नगा° ( for मृगा° ) ]

— Before line 1271, D6 ins वैशंपायन — (L 1272) V1 3 B1 3 D2–4 6 नमस्कृत्य ( for °त्वा ) — (L 1273) K1 ( sup lin as above ) स्मृत्वा पुण्येन भारत ( for ° ) — (L. 1274) K3 [पू]तां ( for तां ) D3 कृत्वा ( for कृष्ण ) K2–4 Ñ2 V1 B2 Dn Ds D1 3 6 T1 3 G M4 कृत्वा स्नानम्, Ñ2 V2 3 B1 3 D5 स्नातस्तस्याम् ( for स्नात्वा स्नानम् ) K1 यथाविधि ( for अधोक्षज ) K1 ( marg ) कृत्वा स्नानं यथा विधि ( for ° ) — (L. 1275) K3 4 D2 3 5 T2 3 G2 3–5 M4 गृहीत्वा ( for प्रहाय ) Ñ1 V3 B1 3 [ई]शो ( for [व्य]य ) K2 उदकं जग्राह ततो, D2 °कं स गृहीत्वाथ, D6 °कं च गृहीत्वेशो ( for ° ) Ñ2 ईश्वर ( for अव्यय ) — (L 1276) K3 Ñ1 3 V2 3 B Dn Ds D6 T1–3 G1 3 5 M4 [ई]श्वरेश्वरम् ( for सुरे° ) — (L 1277) K3 D5 ससोमं, D1 सोमं स ( for सोमः स ) K3 सोमं सपार्षदो विभु, D2 सोमं सोमधरो विभु ( for ° ) — (L. 1279) D1 पारिजातस्य कुसुमैः ( for ° ) — (L. 1280) Ñ3 ईशानं ( for ईशेशं ) N1 V3 B1 3 तुष्टाव च सर्वेशं ( Ñ1 °शा ), D5 °व वाग्भिरीशं स, D6 °व च तमीशानं ( for ° ) — Before line 1281, some MSS. ins कृष्ण उवाच — (L. 1281) K1 त्वं देव; K3 4 Ñ2 Dn D1 D2 4 देव त्वं ( for देवस्त्वं ) G3 रोदनाद् ( for रु° ) K2 Ñ3 V B2 3 D2 5 6 रुद्रो देव त्वं रोदनाद्रावणाच्च, D3 रुद्रो देव त्वं चोदनाद्रावणाद्वा, T1–3 G3 5 M4 रुद्र देव रोदनाद्रावणाच्च — (L 1282) V3 [इ]ति देव, T1 G5 [अ]तिदेवम्, G2 M4 [आ]दिदेवम् ( for °देव ) K3 D6 रोरूयमाणाद्द्रावणाच्चापि दे( D6 °विदे )व, D1 °माणो रवणाच्चातिदेव — (L 1283) V3 सेवकानां ( for वत्सलानां ) Ñ1 भक्त भक्तानां वत्सलोपमकीर्तिमान्, D1 भक्तो भक्तानां वत्सलो वत्सलानां — (L 1284) N1 om कीर्त्या D6 प्रसाद्य ( for युक्तक्लेशाय ) V3 प्रभवाम्युत्तरेण, D1 न प्रभवास्यन्त°, D2 प्रभवोऽस्यन्त° ( for प्रभवाम्यन्त° ) K3 कीर्त्या युक्तं सम्प्रसादयाम्यहम्, K3 D4 ( marg ) कीर्त्या जुष्ट त्वां प्रपेदे ( D4 °पद्ये ) शरणम्, D3 कीर्त्या युक्त सांख्यजन्मा तनुष्व, T1–3 G1 3 5 कीर्त्यायुर्दक्षेशाय प्रभाम( T3 °वा )न्तरेण, G2 कीर्त्या युक्तक्लेशाय प्रवरेणा° — (L 1286) V3 B3 सर्वकर्मन्, B1 °कर्मणि, T3 3 G1 4 °काम G2 कर्ता ( for °कर्मा ) — (L. 1287) K3 N3 V1 D1 T2 3 G1 4–6 M4 देवो ( for देव ) — (L 1288) B2 3 D6 जगत्यस्ति, D1 °त्पते ( for °त्पति ) D4 वीराधि°, T2 G1 3 M4 सर्वाधि ( for °वीरारि° ) D1 जगत्यस्ति सुरवीरहन्ता, T3 G4 5 बृहस्पति सुरसखा° — (L. 1290) Ñ1 V1 3 B1 3 D6 ईशस्त्वं ( for आद्यः ) — (L. 1291) K3 विद्वन् ( for हि त्वाम् ) T3 ईशं ( for ईशं ) — L 1292) D3 वेदा ( for विद्वांस ) D1 -शास्त्र ( for -शास्त्रार्थ ) V2 D3 G2 तत्त्वज्ञा, T1–3 G1 3–5 M4 तत्त्वम् ( for तज्ज्ञा ) — (L. 1293) K3 भवत्यस्मात् ( for भूतं य° ) V2 D3 D6 जगदाद्यन्त, B3 °दाद्य तु ( for °दत्यन्त ) K1 ( sup lin ) B1 D1 T1 3 G1 3–5 M4 भूतं यस्माज्जगदाद्य तु वीर K1 B1 °द्यन्तवीर — (L 1294) T2 त्वत्प्रसादाद् ( for 5व्यक्ताद् ). V B3 अक्षरेण, D1 T2 G2 3 4 रेश ( for °रेश ) — (L. 1295) K3 V1 D4 5 भवम् ( for भव ) D3 भूत ( for भूत ) — (L 1296) D3 -गणानां वै महतामप्युदारम् — (L 1297) K1 तस्मादधीर, N3 D2 3 4 यस्मादनीर, V3 °मिनीर, T1

यस्माज्जितैरमिपितोऽसि सर्वै-
र्देवासुरैः सर्वभूतैश्च देव ।
महेश्वरं विश्वकर्माणमाहु-
स्त्वा वै सर्वे तेन देवाधिदेव ॥
पूज्यो देवैः पूज्यसे नित्यदा वै
शश्वच्छ्रेय:काङ्क्षिभिर्नरदामेयवीर्य ।
तस्माद्विख्यातो भगवान्देवदेवः
सतामिष्टः सर्वभूतात्मभावी ॥
भूमिस्त्वयाप्तां देव यस्मात्प्रतिष्ठा
मुने लोकाना भावनोऽमेयकीर्तिः ।
त्र्यम्बकेति प्रथमं तेन नाम
तवाप्रमेयेति त्रिदशेशनाथ ॥
शर्वः शत्रूणां शासनादप्रमेय-
स्तथा भूयः शासनाच्चेश्वरेश ।

सर्वव्यापित्वाच्छकरत्वाच्च सद्भिः
शब्दस्येशानः श्रीकरार्कप्रियतेजाः ॥
समस्तानां नित्यदा यत्करोषि
शर्मं भ्रातृव्यान्यद्वधनैषी. समस्तान् ।
तस्माद्देवः शक्रोऽस्यप्रमेयः
सद्भिर्यज्ञैः कथ्यसे सर्वनाथ ॥
दत्तः प्रहारः कुलिशेन पूर्वं
तवेशान सुरराजातिवीर्य ।
कण्ठे नैल्यं तेन ते यत्प्रवृत्तं
तस्मात्ख्यातस्त्वं नीलकण्ठेति कल्यः ॥
यल्लिङ्गाङ्कं यच्च लोके भगाङ्कं
सर्वं सोम त्वं स्थावरं जङ्गमं च ।
प्रादुर्विभास्त्वा शुणिन तत्त्वविज्ञा-
स्तथा ध्येयामम्बिका भूतधात्रीम् ॥

तस्माज्जितैर् ( for य° ) K3 देवैर् ( for सर्वैर् ) — ( L 1298 ) K4 देवैः सुरैः ( for देवासुरैः ) — ( L. 1299 ) D1 2 विश्वेश्वरं ( for महे° ) B1 D32 सर्वं ( for विश्व ) — ( L. 1300 ) D2 सर्वे ( for तेन ) D5 त्वां वै सर्वे सर्वदेवा निदेव, D3 त्वां वै सर्वे देवा देवाधिदेवम् — ( L. 1301 ) D6 पूज्यैर् ( for पूज्यो ) V3 D1 देव ( for देवै ) K1 नित्यदा यान्, Ñ1 D5 °दा य, D4 दानवैश्च ( for नित्यदा वै ) T2 पूज्यो नित्य पूजितो नित्यदानै, T3 G3-5 M4 पूज्यो नित्यं पूज्यते नित्यदानै — ( L 1302 ) K3 V3 B1 D2 वरदोऽमेयवीर्य, K3 °दानेऽतिवीर्य, D1 4 °दामोघवीर्य ( for °दामेयवीर्य ) T1 2 G1-4 M4 भूते श्रेय काङ्क्षितामेयवीर्यं, T3 भूते श्रेय काङ्क्षितामेयविद्य — ( L. 1303 ) K3 Ñ1 B3 Dn D5 T1 2 G1 3 4 भूमि ( for भूमिस् ) D2 यस्मादेतत्, D4 यस्मात्तत्, G2 तस्मात् ( for य° ) K1 4 भूमिश्च ( K4 °मिं च ) वाप्ता देव यस्मात्प्रतिष्ठा, K3 भूमिस्त्वया विश्रुता देव यस्मात् — ( L. 1306 ) K1 4 D2 मुनि, Ñ1 Dn D5 पुनर् ( for मुने ) V3 °वीर्यं, T1 °वीर्ये ( for °कीर्ति ) K3 प्रतिष्ठा मुनेर्भावनामेयकीर्ति, D3 मुनिलोकानां भावनोऽमेयकीर्ति, D3 G3 पुनर्लोकाना भावनो ( G3 भवतो )ऽमेय°, T2 3 G4 मुने देवानां भवतोऽमेयकीर्ति ( G4 °र्ते ), G1 4 M4 मुने लोकाना भवतोऽमेयकीर्ते — ( L 1307 ) D5 देव ( for तेन ) — ( L 1308 ) K3 [इ]ति सुपर्वं, D4 [इ]ति त्रिदश, T2 3 G1 4 त्रिदशाधि ( for त्रिदशेश ) V3 तवाप्रमेय त्रिदशेशाय — ( L 1309 ) K1 2 B3 D1 2 4 T2 3 G1 सर्वे ( for शर्वः ) V2 3 D6 त्वप्रमेय ( for °यस् ) K1 सर्व शत्रूणां शासनादप्रमेयस् — T2 om ( hapl ) lines 1310 1315

— ( L 1310 ) D3 शमनाच्च ( for शा° ) Ñ3 D4 त्व सुरेश, B3 Dn D5 D6 G3 चेश्वरेण, D1 च स्वरश्च, T1 G1 2 5 M4 चेश्वरोऽसि, G4 हीश्वरोऽसि ( for चेश्वरेश ) — ( L. 1311 ) T1 2 G1 2-4 M4 सर्वव्यापित्वाद्व्यापकश्चासि नाना — ( L 1312 ) K3 V3 सर्वस्येशान ( for शब्दस्येशान ) D3 शकर श्चार्क ( for श्रीकरार्कप्रिय ) — ( L. 1313 ) K1 2 V3 D3 समक्तानां, V3 T1 3 G3-5 M4 शंभुर्भक्तानां, L1 1 D5 6 G2 श भक्तानां, D2 स भ°, G1 शंभुर्भूतानां ( for समस्तानां ) D5 य· करोति ( for यत्करोषि ) — ( L 1314 ) K3 अपूर्वं, Ñ1 च सर्वं, Ñ1 D1 असर्वं ( for समस्तान् ) D3 सम भ्रातृव्यान्युध्यसे वीर शर्वं, T1 G3 शम ( G3 °मं ) भ्रातृव्यानप्यव ध्यानवेषि, T3 G1 4 5 M4 शर्मं भ्रातृव्यानप्यवध्यानवेषी — ( L. 1315 ) K1 4 V2 B3 D4 T1 3 G3 5 इति ( for ऽसि ) — ( L 1316 ) D1 सर्वैर् ( for सद्भिर् ) K3 3 Ñ1 B1 Dn D5 D2 T1 3 G1 5 M4 सर्वनाथ, V3 G4 धर्मनाथ ( G4 °ध ) ( for सर्वनाथ ) — ( L 1319 ) K1 नीलं ( for नैल्यं ) K1 4 प्रदत्त ( for प्रवृत्त ) — ( L 1320 ) Ñ1 काय, V3 काव्ये, B1 ( marg ) 2 D3 काव्य; B2 काव्य·; T2 काय ( for कल्य ) T1 2 G1 3-5 M4 तस्मात्ख्यातस्त्वं नीलकण्ठोऽतिकाय — ( L 1322 ) K1 4 सोम सर्वं त्वं; K3 D1 सोम सर्वस्त्वं, Ñ3 V B3 D3 D5 2 3 सर्वं सोमस्त्वं, Dn1 सर्वं सोमस्त्व, D4 सोमस्त्वं तत्, T1 2 G2 3 M4 सर्वस्योजस्त्वं, T3 सर्वस्योजस्त्व, G3 सर्वस्येशस्त्व ( for सर्वं सोम त्वं ) — ( L 1323 ) K3 T2 3 गुणिनस् ( for °नं ) G3 प्रादुर्विप्रा मुक्तिदं त्वा स्वभिज्ञास — ( L 1324 ) K3 ज्ञेयाम्;

वेदैर्गीता सा हि तत्त्व प्रसूता
यज्ञो दीक्षाणा योगिना चातिरूप. ।
नात्यद्भुतं त्वत्समं देव भूतं
भूत भव्य भव देवाथ नास्ति ॥
अहं ब्रह्मा कपिलोऽथाप्यनन्त
पुत्रा' सर्वे ब्रह्मणश्चातिवीरा ।
त्वत्तः सर्वे देवदेव प्रसूता
एव सर्वेशः कारणात्मा त्वमीड्यः ॥
इति सस्तूयमानस्तु भगवान्गोवृषध्वज' ।
प्रसार्य दक्षिण हस्त नारायणमथाब्रवीत् ॥
मनीषितानामर्थाना प्राप्तिस्तेऽस्तु सुरोत्तम ।
पारिजात च हर्तासि मा भूत्ते मनसो व्यथा ॥
यथा मैनाकमाश्रित्य तपस्त्वमकरो' प्रभो ।
तथा मम वर कृष्ण सस्मृत्य स्थैर्यमाप्नुहि ॥
अवध्यस्त्वमजेयश्च मत्तः शूरतरस्तथा ।
भवितासीत्यवोच यत्तत्तथा न तदन्यथा ॥
यश्च स्तवेन मा भक्त्या स्तोष्यतेऽमरसत्तम ।
त्वया कृतेन धर्मज्ञ धर्मभाक्स भविष्यति ॥
समरे च जय विष्णो प्राप्य पूजा तथोत्तमाम् ।
निल्बोदकेश्वरो नाम भविताहमिहानघ ।
देवो त्वया स्थापितो वै देवसिद्धोपयाचनः ॥
इहस्थोपोपितो विद्वान्भक्तिमान्मम केशव ।

---

V3 B2 3 D6 [अ]व्ययम्, T1 3 G1 2 4 M4 ध्रुमाम् ( for ध्येयाम् ) G6 तथा हुमां कमला लोकधात्रीम् — ( L. 1325 ) K3 B1 D1 G2 तत्त्वप्रसूता, K4 तत्त्वत्प्रसादात्, D2 त्वं तत्प्र सूता, D3 त्वत्त प्र° ( for तत्त्व प्र° ) Ñ1 वेदो वेदाङ्गै सहिता सुप्रभूता, Ñ2 D4 6 देवै( D4 वेदै )र्गीता ( D6 °ता ) सा हि त्वत्त प्रसूता, V1 2 B2 3 T2 3 G1 3 4 M4 वेदा वेदाङ्गै सहिता स्त्वत्प्र°, T1 वेदैर्गीता या गिरिस्त्वत्प्र° — G6 om ( hapl ) lines 1326 1331 — ( L. 1326 ) B1 [अ]भिरूप, T3 [अ]तिरूपम्, G1 [अ]नुरूपम्, G3 [अ]नुरूप ( for [अ]तिरूप ) Ñ1 2 V1 यज्ञो दीक्षा दक्षिणा चातिरूप ( V1 °णाश्चा तिरूपा ), V2 3 B2 3 यज्ञो दीक्षा दक्षिणा चाभिरूप, D3 यज्ञो दीक्षा योगिना चानिरूप्य, G2 यज्ञो दीक्षा दक्षिणा चाभिरूपा, T1 3 G1 3 4 M4 यज्ञे दीक्षा दक्षिणा चैव भूता — ( L. 1327 ) D1 3 5 6 T1 3 G1 3 नान्यद्भुत, G2 नास्त्य द्भुत ( for नात्य° ) K1 Ñ2 तरसम ( for त्वत्सम ) Ñ1 D6 देव, V3 भूत ( for भूत ) V1 नान्यद्भुत त्वत्सम देवदेव — K1 om line 1328 — ( L. 1328 ) D5 भव्य भव ( for भूत भव्य ) Ñ2 भवतो नाथ ( for भव देवाथ ) K4 भूत भव्य न च देवास्ति नाथ V3 भूत स्तव्य भव देवाथ नास्ति, D2 भूत भवित्र च देवाथ नास्ति D3 भूतं भवद्धारि नान्यत्त्वदस्ति D4 भूत भव्य देवताना सुरेश, T1 3 G1 3-5 भव त्वत्तो देवदेवोऽन्य नास्ति, G2 भव्यं भव देवताना त्वमेव — ( L. 1329 ) G2 M4 आद्यो ( for अहं ) D5 कश्यपो ( for कपिलो ) K2 चाप्यनन्त, Ñ1 योऽप्य°, Ñ2 ऽथानन्तश्च, D4 ऽप्यनन्त ( for ऽथाप्य° ) T1-3 G1 2 4 आद्यो ब्रह्मा कपिलो चाप्यनन्त — ( 1330 ) K2 ब्राह्मणाद्य ( for ब्रह्मणश्च ) D2 3 6 वीर्या, G2 वीर ( for वीरा ) — ( L. 1332 ) K2 3 T1 3 G1 M4 स्व, G4 स त्वं ( for एवं ) B3 कारणात्मा ( for °णात्मा ) V1 नाथ, G1 ईश ( for ईड्य ) D4 एवं सर्वेषा कारणात्मा त्वमीश, D5 एव सर्वेषा कारण नाथ नान्य° — Before line 1333, D6 ins वैशपायन — ( L. 1333 ) B3 D6 स ( for सु ) K1 V1 2 D2-5 वृषभ ( for गोवृष ) — ( L. 1334 ) T1 3 G1 3-5 M4 वासुदेवम् ( for नारायणम् ) K2 नरो नारायणोऽब्रवीत्, Ñ1 नारायणमिदमब्रवीत ( hypermetric ), V3 B1 3 गोविन्दमिदम° ( for b ) — Before line 1335, G2 ins शिव — ( L. 1335 ) D6 समीरितानामर्थाना ( for a ) K1 3 Ñ1 2 V1 B2 Dn D3 D1-4 T1 3 G2 3 M4 प्राप्तिस्ते सुरसत्तम ( for b ) — ( L. 1336 ) T3 3 G1 5 त्व ( for [अ]सि ) T1 G2 पारिजातस्य हर्ता त्वं ( for a ) D5 मानसी, T1 3 G1 3 5 मनसि ( for °सो ) — ( L. 1337 ) K4 पुरा, Ñ1 V2 B D6 यदा ( for यथा ) T1 3 G1 4 5 मामक्म्, G3 मा कामम् ( for मैनाकम् ) — ( L. 1338 ) K1 3 4 तथ्य मम, Ñ1 V2 3 B D6 तदा दत्त ( for तथा मम ) K3 [दे]धर्यम् ( for स्थैर्यम् ) K3 सस्मर्य स्थैर्यमात्मनि, B2 स्मृत्वा धैर्यमवाप्नुहि, D3 सस्मृत्वा धैर्यमा° ( for b ) — After line 1338 D4 ins

34** नीत्वोदकेन दिव्येन स्नपयिष्यसि केशव ।

— ( L. 1339 ) T1 त्वं ( for च ) V3 शूरतमा, D3 च परतस ( for शूरतरस ) — ( L. 1340 ) D3 भवितासि त्वमि त्येव T1 3 G3-5 M4 °ता सत्यवादी त्व ( T1 3 G3 °चारित्व ), T3 G1 °तासीत्यवादीस्त्व ( for a ) D2 तत्तथैव न चान्यथा ( for b ) — ( L. 1341 ) Ñ1 कश्चित् ( for भक्त्या ) V3 B1 3 D3 य ससत्वेन मा कश्चित् ( for a ) — ( L. 1342 ) K4 कृष्णेन ( for कृतेन ) V2 तत्त्वज्ञ ( for धर्मज्ञ ) — ( L. 1343 ) T1 G2 विजय, T2 3 G3 M4 विजयी ( for च जय ) B1 ( marg as above ) कृष्ण ( for विष्णो ) K3 कृत्वा ( for प्राप्य ) V1 मनुत्तमाम् ( for तथो° ) B3 प्राप्स्यसि त्व तथो त्तमम् ( for b ) — ( L. 1345 ) K1 3 Dn D3 D1 2 देवे

निराममीप्सितांल्लोकान्गमिष्यति जनार्दन ॥
अवन्ध्या नाम देशेऽस्मिन्गङ्गा चैव भविष्यति ।
गङ्गास्नानसमं स्नानं मन्त्रतो भविता तथा ॥
पट्पुरं नाम नगरं दानवानां जनार्दन ।
अत्रान्तर्धरणीदेशे तथाक्रम्य महाबलाः ॥
एते दैत्या दुरात्मानो जगतो देवकण्टकाः ।
छन्ना वसन्ति गोविन्द सानावस्य महागिरेः ।
अवध्या देवदेवानां वरेण ब्रह्मणोऽनघ ।
मानुपान्तरितस्तस्मात्त्वमेताञ्जहि केशव ॥
एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
परिष्वज्य महात्मानं वासुदेवं जनाधिप ॥
ततो याते महादेवे प्रभातायां नराधिप ।
तस्यां निशायां गोविन्दो भूयः पर्वतमब्रवीत् ॥
तत्राधः पर्वतश्रेष्ठ निवसन्ति महासुराः ॥
त्वया रुद्धो हि तन्मार्गो जगतो हितकाम्यया ॥
निर्गमिष्यन्ति ते नैव मया रुद्धा महाबलाः ।
द्वारे निरुद्धे तत्रैव विनङ्क्ष्यन्ति ममाज्ञया ॥
त्वयि संनिहितश्चाहं भविष्यामि महागिरे ।
अधिष्ठाय महाघोरान्निहनिष्यामि च पर्वत ॥
आरुह्य मूर्ध्नि मद्रूपं दृष्ट्वा पर्वतसत्तम ।
गोसहस्रप्रदानस्य फलं प्राप्स्यन्ति शाश्वतम् ॥
त्वत्तोऽश्ममिश्रां प्रतिमां कारयित्वेह भक्तितः ।
शुश्रूषिष्यन्ति ये नित्यं मम यास्यन्ति ते गतिम् ॥
इति तं पर्वतं कृष्णो वरदोऽनुगृहीतवान् ।
तदाप्रभृति देवेशस्तत्र संनिहितोऽच्युत ॥
पाषाणैः प्रतिमां तत्र कारयित्वा च कौरव ।

---

मर त्वया गीतो, K2 देवेश स्थापितो देव, K4 विदेश्वरस्तथा गीतो ( for * ) K2 त्वया ( for देव ) V3 B2 D6 -सत्योप ( for सिद्धोप ) T1 3 G1 2 5 M4 -याचित ; G2 -सेवित ( for याचन ) K4 देवीसिद्धोपयाचित ( for ᵇ ) —( L 1346 ) V3 इहोऽस्य ( for इहस्थ ) D2 योऽर्च्यते ( for [उ]पो षितो ) —( L 1347 ) D5 निरात्राद् ( for ॰श्रम् ) K2 Ñ3 कामान् ( for लोकान् ) Ñ3 आगमिष्यनि ( hypermetric ) ( for ॰गमि॰ ) —( L 1348 ) V1 B1 ( marg ) आवर्ता, D2 5 अचिन्त्या, T1 G3 4 आवर्ते, G5 M4 आवर्तो ( for अवन्ध्या ) T2 3 G2 आवर्तनामा देशोऽस्मिन् ( for * ) —( L 1349 ) K3 सततं ; G5 M4 मात्रतो ( for मन्त्रतो ) D5 मन्त्रस्नानं भविष्यति ( for ᵇ ) —( L 1351 ) K4 वारुणे ( for धरणी ) K1 2 4 Dn D1 T1 G3 पराक्रम्य, Ñ3 तत्रा॰, D5 तं चा॰ ( for तथा॰ ) Ñ1 तथाक्रम महाबल ( for ᵇ ) —( L 1352 ) Ñ1 B1 D6 हिंस्रा ( for दैत्या ) K1 B2 T1-3 G1 2 5 M4 महात्मानो ( for दुरा॰ ) V2 B3 एते हिंस्रा महात्मानो ( for * ) V1 लोक ( for देव ) T1 3 G1 2-5 M4 जगतामपि कण्टका ( for ᵇ ) —( L 1353 ) M4 वसन्तोऽस्मिन् ( for सानावस्य ) D5 महात्मन ( for ॰गिरे ) T1 2 G1 3 5 वसन्तोऽस्मिन्महागिरौ ( for ᵇ ) — G4 om lines 1354ᵇ-1357* —( L 1355 ) D2 मानुषान्तर्हितस्तस्मात् ( for * ) T1 G3 सत्वर, T2 3 G1 5 M4 सत्वरम् ( for केशव ) — Before line 1356, G3 ins वैशंपायन —( L 1356 ) K4 महाबाहुस्, Ñ1 ॰बाहो ( for ॰देवम् ) —( L 1357 ) T1 3 G1 2 5 प्रति पूज्य ( for परिष्वज्य ) — D6 om line 1358 —( L 1358 ) D1 ततो यातो महादेवं ( for * ) V2 D4 जनाधिप ( for नरा॰ ) —( L 1359 ) D4 5 रजन्यां ( for निशायां ) Ñ3 स्वयं ( for भूय ) — After line 1360, K1 ( marg ) B3 Dn G3 ins

35** अवध्या देवदेवानां वरेण ब्रह्मणः पुरा ।
[ B3 सर्वे ( for देव ) ]

— K3 4 D1 om line 1361 —( L 1361 ) K4 तेन रुद्धो हि भगवान्, Ñ1 Dn D2-6 G3 तेन ( G3 तैर्हि ) रुद्धो भवानत्र, Ñ2 V B D3 ते निरुद्धा मया चात्र ( for * ) —( L 1363 ) K1 ऽभिरुद्धे ( for नि॰ ) K2 विनश्यन्ति ( for विनङ्क्ष्यन्ति ) Ñ2 V1 महासुरा ( for ममाज्ञया ) —( L 1365 ) K2 महारूप, K4 D1 ( marg ) 6 T2 ॰घोरं, Ñ2 D1 ॰योग ; V3 B2 3 [अ]सुरान्घोरान् D3 महाशूरं, D4 ॰शूरान्, D6 ॰शूर ( for ॰घोरान् ) K2 D1 5 G3 पर्वते ( for ॰त ) —( L 1366 ) T3 3 G1 4 तद्रूप ( for म॰ ) Ñ1 B2 आरोहयन्त्यूर्ध्वं बाहुश्च, D6 नर आरुह्य मद्रूपं, G5 आरुह्य मूर्तिमद्रूपं ( for * ) Ñ2 B1 2 यस्त्वा ( for दृष्ट्वा ) Ñ3 यस्त्वा पर्वतसत्तमम् ( for ᵇ ) —( L 1367 ) D4 गोप्रदानसहस्रस्य ( for * ) K Ñ1 V2 3 B Dn D3 D1 6 T1 G1 3 4 M4 प्राप्स्यति, V1 D3 5 ॰सि ( for ॰न्ति ) —( L 1368 ) K2 त्वत्तोऽस्माकं ; D6 त्वदश्ममिश्रां ( for त्वत्तोऽश्म॰ ) D3 शक्तितः ( for भ॰ ) —( L 1369 ) K3 Ñ2 D3 D2-4 शुश्रूषयन्ति, T1 G3 4 M4 ॰षन्ति च ( for ॰षिष्यन्ति ) V1 सततं ( for ये नित्यं ) T2 3 G1 4 शुश्रूषन्ति च ते नित्यं ( for * ) K4 गिरिम् ( for गतिम् ) T1 3 G2 3-5 M4 आशु प्राप्स्यन्ति ते गतिम् ( for ᵇ ) —( L 1371 ) Ñ1 तद्देव ( for देवेशस् ) Ñ1 नित्यं ( for तत्र ) —( L 1372 ) K2 पाषाणे ( for ॰णै ) K3 4 Ñ2 V1 B2 Dn D3 D1 3 T1 G3 6 M4 तात ; D3 तां तु ; D6

शुश्रूषन्ति कृतात्मानो विष्णुलोकाभिकाङ्क्षिणः ॥

Colophon

वैशंपायन उवाच ।

ततो रथवरं कृष्णः समारुह्य महामनाः ।
बिल्वोदकेश्वरं देवं नमस्कृत्य ययौ नृप ॥
महेन्द्रमाह्वयामास रथस्थो मधुसूदनः ।
सत्कृतं पुष्कराभ्यादो सर्वैर्देवगणैः सह ॥
ततः शक्रो जयन्तोऽथ हरिभिर्युक्तमुत्तमम् ।
आरुरोह रथं देवः सर्वकामप्रदः सताम् ॥
तयो रथस्थयोर्युद्धमभवत्कुरुनन्दन ।
देवयोर्दैवयोगेन पारिजातकृते तदा ॥
ततोऽहनद्रणे विष्णुर्बाणैः शत्रुबलार्दनः ।
सैन्यानि देवराजस्य बाणजालैरजिह्मगैः ॥
उपेन्द्रं न महेन्द्रोऽथ नैव विष्णुः सुरेश्वरम् ।
ताडयामासतुर्वीरौ शक्रैः शक्तावुभौ प्रभो ॥
एकैकमश्च दशभिर्महेन्द्रस्य जनार्दनः ।
विव्याध बाणैर्निशितैरश्वयुक्तैर्जनेश्वर ॥
सैन्यान्यपि च देवेन्द्र शरैरमरसत्तमः ।
छादयामास राजेन्द्र घोरैरस्त्राभिमन्त्रितैः ॥
स च बाणसहस्रैश्च कृष्णो गजमवाकिरत् ।
गरुडं च महातेजा बलभिद्धरिवाहनः ॥
भूमिष्ठाभ्यां रथाभ्यां तौ तदहः शत्रुदारणौ ।

---

कृत्वा ( for तत्र ) T1-3 G1 4 5 M4 च केशवम्, G3 तु कौरव, G3 हि भक्तित ( for च कौरव ) — ( L 1373 ) G4 महात्मानो ( for कृता° ) B1 शुश्रूषयन्ति ये नित्य ( for ° ) K4 लोक च ( for लोकाभि ) Ñ1 V3 B1 3 D6 काङ्क्षया ( for -काङ्क्षिण )

COLOPHON — *Mention of the Epic* K3 Ñ2 B3 Ds1 T3 — *Mention of Khila* K3 Ñ1 2 V1 3 B D1 D1 — *Adhy name* K Ñ1 3 V B Dn Ds D1 4-6 पारिजातहरणम्, D1 पारिजातहरणे ईशस्तव, D2 पारिजातहरणे बिल्वोदकेश्वरमाहात्म्यम्, T1 G3 4 पारिजातहरणे बिल्वोदकेश्वरप्रतिष्ठा, T2 3 G1 M4 बिल्वोदकेश्वरप्रतिष्ठा ( T2 °स्थानम् ), G2 पारिजातहरणे बिल्वेश्वरप्रादुर्भाव — *Adhy no* K3 ( marg ) 128, V1 G3 134, V2 133, V3 132, Dn Ds1 D1 129, D1 126, D3 139, T1 G3 4 M4 143, T2 G1 145, T3 155, G4 146

( L 1374 ) B1 D6 स्वमारुह्य ( for स° ) Ñ2 D6 T3 महाबल, D3 °बली ( for °मना ) — ( L 1375 ) Bom Poona eds G(ed) मृप ( for नृप ) — After line 1376, K1 4 D1 read line 1383 repeating it in its proper place — ( L 1377 ) K1 3 4 D5 पस्तृत्त, Ñ1 सस्तृत, Ñ3 संस्थित, V2 3 B1 3 D2 5 सस्थितं T3 सतत, G3 सुकृतं, G3 सत्कृत ( for °त ) K3 B3 D3 D4 5 G3 सर्वं, T3 समैर् ( for सर्वैर् ) — ( L 1378 ) Ñ1 V3 B3 D6 ऽपि सयत्तो, V1 जयन्तश्च, V2 ( sup lin as above ) ऽपि जयन्तो, B1 3 ऽथ संयुक्तो, D4 जयन्तोऽपि ( for °न्तोऽथ ) — ( L 1379 ) G4 प्रद् ( for प्रद ) — ( L 1380 ) K1-4 Ñ1 3 V2 3 B3 D5 G3 ततो ( for तयो ) T1-3 G1 3-5 M4 तयोरथ पुनर्युद्धम् ( for ° ) — ( L 1382 ) D1 विष्णु ( for विष्णुर ) Ñ3 ततर्दे देवराजस्य, V3 B2 3 ततर्दे सरसा विष्णुर् ( for ° ) K1-3 D4 शक्र-, D1 शक्रो ( for शत्रु ) B3 D3 बलार्दनम् ( for °र्दन ) K4 D2 बाणै शक्र जना( D2 बला )र्दनम् — ( L 1383 ) Ñ2 राजस्तु ( for -राजस्य ) — ( L 1384 ) K1 4 उपेन्द्रेण, K3 D3 उपेन्द्र च, Ñ1 न देवेन्द्र, G2 उपेन्द्र स ( for °न्द्र न ) T1-3 G1 3 4 M4 उपेन्द्र स ( T1 तु ) महेन्द्रोऽपि ( for ° ) D3 निघ्नन्, T1 M4 न च, G3 4 स च ( for नैव ) — ( L 1385 ) K Ñ1 3 V1 2 B1 3 Dn Ds D1 3 4 6 G2 शरैर् ( for उभौ ) V3 B3 शरैः शक्तावपि प्रभो, D5 शक्रैः शक्रावपि प्रभैः, D5 शक्रैः शक्रावपि प्रभू ( for ° ) — ( L 1386 ) K2 अत्र, D1 4 अस्त्र ( for अश्व ) D3 3 एकैकमश्च बहुभिर् ( for ° ) — V3 om line 1387–1393 — ( L 1387 ) K Ñ1 2 V1 Dn Ds D1 6 G3 विशिखैर्, T2 3 G4 दशभिर् ( for निशितैर् ) V2 B D6 विव्याध निशितैस्तीक्ष्णैर् ( for ° ) K1 ( sup lin as above ) अश्वयुक्तैर्, B3 अश्वयुक्त, D6 °मुक्तैर् ( for °युक्तैर् ) K1 D1 4 जनेश्वर, K3 जनार्दन, K4 नरेश्वर, G3 जनाधिप ( for जनेश्वर ) — ( L 1388 ) K3 D3 तथोपेन्द्र, D3 च देवेश ( for च देवेन्द्र ) Ñ1 B1 2 D4 सैन्यान्यपि देवेन्द्र; V1 B3 सैन्यादीनपि दे°, Dn सैन्याद्यानपि द° ( for ° ) K3 D4 सत्तम, B3 °मैः ( for °म ) — For line 1388, T1-3 G1 3-5 M4 subst

36** सैन्यं च छर्दयामास शरैर्यादवसत्तम ।

— ( L 1389 ) Ñ1 D1 देवेन्द्रो ( for राजेन्द्र ) T1 3 G1 3-5 M4 अचिरेणैव राजेन्द्र ( for ° ) K1 ( sup lin as above ) 4 शरैर् ( for घोरैर् ) — ( L 1390 ) B1 3 चक्री ( for स च ) D3 कार्ष्ण्यं रथम् ( for कृष्णो गजम् ) — ( L 1391 ) Ñ1 गरुडम् ( for °ड ) K3 महाबाहुर् ( for °तेजा ) K1 D1 बलिभिद् ( for बलभिद् ) K3 T1 2 G3 हरिवाहनम् ( for °हन ) — ( L 1392 ) B3 T1 G4 M4 भूमिष्ठाभ्यां रथा ( M4 रथा )भ्यां तु ( B3 तौ ) K4 दारुणे, D1 4 दारुणौ ( for °णौ ) — ( L 1393 ) K1 महावीर्यौ ( for °त्मानौ ) — ( L.

युयुधाते महात्मानौ नारायणसुराधिपौ ॥
चकम्पे वसुधा कृत्स्ना नौर्जलस्थेव भारत ।
दिशो दाहेन दिग्देशाः संवृताश्च समन्ततः ॥
चेलुर्गिरिवराश्चैव पेतुश्च शतशो द्रुमाः ।
पेतुश्च धरणीपृष्ठे मर्त्या धर्मगुणान्विताः ॥
निर्घाताः शतशश्चान्ये पेतुस्तत्र नराधिप ।
ऊहुश्च सरितः सर्वाः प्रतिस्रोतो विशां पते ॥
विष्वग्वाता ववुश्चैव पेतुरुल्काश्च निष्प्रभाः ।
मुहुर्मुहुर्भूतसघा रथनादेन मोहिताः ॥
प्रजज्वाल जले चैव वह्निर्जनपदेश्वर ।
युयुधुश्च ग्रहैः सार्धं ग्रहा नभसि सर्वतः ॥
ज्योतींषि शतशः पेतुः स्वर्गाच्च धरणीतले ।
दिशां गजाः प्रकुपिता नागाश्च धरणीतले ॥
गर्दभारुणसंस्थानैश्छिन्नाभ्रैश्चावृतं नभः ।
विनदद्भिर्महारावैरुल्काशोणितवर्षिभिः ॥
न भूर्न द्यौर्न गगनं नरेन्द्रवृषभाभवन् ।
स्वस्थानि सुरवीरौ तौ दृष्ट्वा युद्धगतौ तदा ॥
जेपुर्मुनिगणा मन्त्राञ्जगतो हितकाम्यया ।
ब्राह्मणाश्च महात्मानो व्यतिष्ठंस्तेषु सत्वराः ॥
ततो ब्रह्मा महातेजाः कश्यपं वाक्यमब्रवीत् ।
गच्छ वध्या सहादित्या पुत्रौ वारय सुव्रत ॥
स तथेति तदा देवमुक्त्वा पद्मभवं मुनिः ।
जगाम रथमास्थाय तस्थौ नरवरान्तिके ॥
स्थितं तु कश्यपं दृष्ट्वा सहादित्या तदान्तरा ।
उभौ रथाभ्यां धरणीमवतीर्णौ महानलौ ॥
न्यस्तशस्त्रौ च तौ वीरौ ववन्दतुररिंदमौ ।

1395 ) T2 3 G3 4 5 M4 दिशो दाहेन सदेशा ( for ᵃ ) K1 संवृत्य , K2 3 D4 °त्ताद्, Ñ3 सधूमाद्; V2 B3 D2 सं भृताद्, G3 सवृत्ताद् ( for °ताद् ) — ( L. 1396 ) K3 भग्निइवाद् ( for गिरिवराद् ) Ñ2 D5 निपेतु ( for पेतुश्च ) — ( L. 1398 ) Ñ1 V2 B3 D6 [पु]व ( for [श्च]न्ये ) K3 तेन ( for तत्र ) — ( L. 1399 ) D3 श्रेष्ठा ( for मर्त्या ) — ( L. 1400 ) D3 तिर्यग्वाता ( for विष्व° ) Ñ1 V2 B2 D5 D6 च सप्रभा , B3 सहस्रश , D4 [श]तनिप्रभा ( for च निष्प्रभा ) — ( L. 1401 ) B2 D5 गणा ( for सघा ) K3 Ñ2 V1 B2 D5 D4 5 मुमुहुर्भूतसघाश्च V1 स्वर्गे मुहुर्भूतगणा ( for ᵃ ) B1 रण ( for रथ ) — D4 om ( hapl ) lines 1402 1403 — ( L. 1403 ) D2 विमर्दं ( for युयुधुश्च ) D2 ग्रहा कुर्वन्ति सर्वश ( for ᵇ ) — ( L. 1404 ) D2 च तदा ( for शतश ) Ñ2 उल्काश्च ( for स्वर्गाच्च ) Ñ1 V2 B D5 D7 3 6 T2 3 G1 3 5 M4 -तलम् ( for तल ) — D7 4 T2 3 G1 4 om ( hapl ) line 1405 — ( L. 1405 ) K4 दिग्ग जाश्च ( for दिशा गजा ) K2 Ñ1 V B D5 D6 6 प्र( B3 D6 सं )क्षुभिता , D3 प्रचलिता ( for प्रकुपिता ) K2 पतिता ( for नागाश्च ) — ( L 1406 ) V2 D2 G2 सकाशैस्त D1 संस्था भैरद ( for °नैश्छ ) D3 चित्राभैश्च , T1-3 G1 3-6 M4 मेघैश्चैव ( for छिन्नाभ्रैश्च ) K3 वृत नभ , D4 समन्तत ( for [आ]वृतं नभ ) — ( L. 1407 ) V1 तिनदद्भिर् ( for ॰द्भि° ) K2 B2 D21 D7 3 महानादान् , K3 Ñ1 Dn D1 4 5 T2 G1 °रावान्, K4 G3 °राव , Ñ2 B1 D31 M4 °नादा , T1 °रावास् ( for °रावैर् ) K1 4 Dn D3 D1 3 6 रूक्ष , V1 दल्का ; T1 3 G1 5 रक्त ( for उल्का ) Ñ3 वृष्टिभि ( for -वर्षिभि ) B1 रूक्षशोणितवृष्टिभि ( for ᵇ ) — ( L. 1408 ) K1 द्यौर्न भूर् ( for भूर्न द्यौर् ) T2 3 G1 भगणो ( T2 °ण ) ( for गगन ). K1 3 V1 3 B2 3 D1-6 G2 [अ]भवत् ( for °वन् ) Ñ3 नरेन्द्रवृषभानन , T1 2 G1 3 5 M4 नरे( G1 महे )न्द्र प्रबभौ तदा ( for ᵇ ) — ( L. 1409 ) V1 2 B3 T1 G3 4 स्वस्थाने ( for °नि ) D1 स्वस्थानानि च वीरौ तु , D2 °न च सुवीरौ तु ; D3 स्वस्थौ नृसुरवीरौ तु , T2 G1 4 स्वस्थाने कुरुवीरौ तु ( for ᵃ ) — ( L. 1410 ) V2 D6 मन्त्र ( for मन्त्रान् ) K4 जगतो ( for °तो ) — ( L. 1411 ) K1 3 4 Ñ1 V2 Dn D5 D7 व्यतिष्ठंस् ( for व्य° ) V2 B2 D5 तेन ( for तेषु ) K2 D2-5 व्यतिष्ठन्नथ( D2 °आप्य ; D4 °अप )तत्परा , Ñ2 श्रुति मन्तोऽथ सत्वरा , V1 जातिव-तोऽथ स° , D1 G3 व्य( G1 ह्य )तिष्ठन्नपतत्परा , T1, 2 G2 5 व्यतिष्ठस्तत्र( T2 °स्तेन ) सत्वरा ; T3 व्यतिष्ठन्नथ स° ( for ᵇ ) — ( L. 1412 ) T1 3 G1, 3 5 [अ]मरै साकं , T2 हरे साकं ( for महातेजा ) — ( L. 1413 ) T1 3 G1 3-5 M4 गच्छस्व सहसादित्या ( for ᵃ ) — ( L. 1414 ) M4 transp स and तथेति D1 चैवम् ( for देवम् ) K1 3 4 D1 3 पद्मभुवं ( for °भवं ) — ( L. 1415 ) V2 B2 D6 आरुह्य ( for आस्थाय ) K2 देव , G1 5 M4 गिरि ( for नर ) N3 वरान्तरे ( for °न्तिके ) D2 3 तस्थौ मुनिवरो ऽन्तिके , D6 तस्थौ वरस्यान्तिके ( for ᵇ ) — ( L. 1416 ) K3 D4 G3 तथाम्बरे , D6 M4 तदान्तरे T1 3 G1 3 4 तदन्तरे ( for तदान्तरा ) — ( L. 1417 ) Ñ1 V2 B3 D6 अवनीम् ( for धरणीम् ) T1 3 G1 3-5 M4 कृष्णशक्रौ तु धरणीम् ( for ᵃ ) — ( L. 1418 ) T1 -शस्त्रवरौ , G2 -शस्त्रौ वरौ , M4 -शस्त्रधरौ ( for -शस्त्रौ च तौ ) — ( L. 1419 ) K4 सुवशौ ( for तस्वज्ञौ ) V2 पितरौ सर्वधर्मज्ञौ ( for ᵃ ) — ( L. 1420 ) K2 D5 जग्राह , K3 N3 V2 B D32 D2-4 6 T1-3

पितरौ धर्मतत्त्वज्ञौ सर्वभूतहिते रतौ ॥
उभौ प्रह्वाय हस्ताभ्यामदितिस्त्वब्रवीद्वच ।
असोदराविवैवं किमन्योन्य हन्तुमिच्छथ ॥
स्वल्पमर्थं पुरस्कृत्य प्रवृत्तमतिदारुणम् ।
सदृशं नेति पश्यामि सर्वथा मम पुत्रयोः ॥
श्रोतव्यं यदि मातुश्च पितुश्चैव प्रजापतेः ।
न्यस्तशस्त्रौ स्थितौ भूत्वा कुरुतं वचनं मम ॥
तथेत्युक्त्वा च तौ देवौ स्नातुकामौ महाबलौ ।
गङ्गां जग्मतुरेवाथ प्रजल्पन्तौ परस्परम् ॥

शक्र उवाच ।

त्वं प्रभुर्लोककृत्कृष्ण राज्येऽहं स्थापितस्त्वया ।
स्थापयित्वा कथ नाम पुनर्मामवमन्यसे ॥
भ्रातृत्वमुपगम्यैव ज्येष्ठत्वं प्रतिपूज्य च ।
कथ कमलपत्राक्ष निर्वाणं कर्तुमर्हसि ॥
स्नातौ तु जाह्नवीतोये पुनरभ्यागतौ नृप ।
यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ ॥
प्रियसगमनं नाम न देशं मुनयोऽवदन् ।
यत्र तौ सगतौ चोभौ पितृभ्यां कमलेक्षणौ ॥
ततः शक्रस्य कौरव्य प्राप्ता वासाजिर तदा ।
यत्र देवगणाः सर्वे समेता धर्मचारिणः ॥
ततो ययुर्विमानैस्तु देवा. सर्वे त्रिविष्टपम् ।
ऋद्ध्या परमया युक्तास्तेषामेवानुरूपया ॥
कश्यपश्चादितिश्चैव तथा शक्रजनार्दनौ ।
विमानमेकमारुह्य गता राजंस्त्रिविष्टपम् ॥
ते शक्रसदनं प्राप्ता रम्यं सर्वगुणान्वितम् ।
ऊषुरेकत्र कौरव्य मुदिता धर्मचारिणः ॥
शची तु कश्यपं पत्न्या सहितं धर्मवत्सला ।
उपाचरन्महात्मानं सर्वभूतहिते रता ॥
ततस्तस्या प्रभाताया रजन्यामब्रवीद्धरिम् ।
अदितिर्धर्मतत्त्वज्ञा सर्वभूतहितंकरम् ॥

---

G M4 गृहीत्वा, V1 प्रगृह्य ( for प्रह्वाय ) Ñ1 ततः ( for वच ) — ( L 1421 ) T1 कथम्, T2 3 G1 3-5 M4 च किम् ( for [ए]व किम् ) K4 असोदरवदेव किम् ( for ° ) K2 V3 D8 T1-3 G1 3-5 M4 इन्द्रस्त°, K3 Ñ1 V1 2 B Dn D5 D7 4 6 G2 °थ ( for °थ ) — ( L 1422 ) Ñ1 V1 2 अल्पमर्थं, V3 अल्पार्थं च ( for स्वल्पमर्थं ) — ( L 1423 ) D3 [ए]व ( for [इ]ति ) — ( L 1425 ) K2 Ñ2 स्थिरौ, Ñ2 च तौ, D4 द्वतौ ( for स्थितौ ) G3 कुरुतं ( for °तं ) — Before line 1426, D6 ins वैशंपायन — ( L 1426 ) K4 Ñ2 D5 D2 3 च तौ वीरौ, T1 3 G1 3-5 M4 स्थितौ वीरौ ( for च तौ देवौ ) V2 स्नातुकामौ, D6 ( marg as above ) T1 G3 5 M4 भ्रातरौ तौ, T2 3 G1 4 तदा तौ तु ( for स्नातुकामौ ) — T1 3 G1 3-5 M4 om lines 1427-1433 — ( L 1427 ) D6 ( marg as above ) पङ्क्या ( for गङ्गां ) K4 सबाध ( for एवाथ ) V3 B3 D6 कथयन्तौ ( for प्रजल्पन्तौ ) — D4 6 इन्द्र ( for शक्र ) — ( L 1428 ) V3 B3 D1 6 त्वं प्रभु कृष्ण लोकस्य ( for ° ) — ( L 1430 ) K1 D1 [ए]व, K2 Ñ1 D3-6 [ई]श ( for [ए]वं ) Ñ2 भ्रातृत्वमवग म्यैव ( for ° ) K2 व्यतियुज्य, K3 Dn चाप्यपोह्य, B3 प्रतिगृह्य, D3 4 विनियुज्य, D4 च व्यपोह्य ( for प्रतिपूज्य ) — ( L 1431 ) K1-3 Ñ2 B2 Dn D3 D1-4 इच्छसि ( for अर्हसि ) — ( L 1432 ) V3 B3 D6 स्नात्वा तौ ( for स्नातौ तु ) D4 तीरे ( for तोय ) — ( L 1433 ) K3 माता ( for यत्र ) — ( L 1434 ) Ñ2 सगमज ( for °न ) Dn1 ते ( for न ) D2 जगु, D3 विदु, T2 3 G1 3-5 M4 गता ( for ऽवदन् ) — ( L 1435 ) T1-3 G1 3-5 M4 वीरौ ( for चोभौ ) — Before line 1436, D6 ins वैशंपायन — ( L 1436 ) D6 प्राप्तौ ( for प्राप्ता ) T1 मर्वेऽचिर, T2-3 G1 4 M4 सर्वे जितास, G3-5 सर्वेऽजिर ( for वासा° ) K1 2 4 Ñ2 V2 B1 Dn D3 D1-6 G2 दत्त्वा चैवा( Ñ2 V3 Dn वाचा )भय तदा, K3 D5 दृष्ट्वा वाचाभय तदा, V3 गत्वा वासाजिर तथा, D4 दत्त्वोवाचाभय तदा ( for ° ) — ( L 1437 ) D3 मह्य ( for धर्म ) — ( L 1438 ) V1 जग्मु, G5 सर्वे ( for ययुर् ) G5 ययुर्देवास ( for देवा सर्वे ) — ( L 1440 ) K2 शक्रश्चैव जनार्दन ( for ° ) — ( L 1441 ) B3 गजराज ( for गता राजस् ) — ( L 1442 ) V3 B3 प्राप्य ( for प्राप्ता ) K4 ते शक्रसदनं प्राप्त, Dn ते शक्रसदनप्राप्ता ( for ° ) — ( L 1443 ) K2 चैकत्र, T2 G1 5 एते तु ( for एकत्र ) G1 ऊषुस्ते तु कौरव्य ( for ° ) T2 3 G1 4 मुदा ते ( for मुदिता ) — ( L 1444 ) Ñ2 धर्मवत्सैना, T1 2 G1 3-6 M4 °वत्सलम् ( for °वत्सला ). — ( L 1445 ) D2 उवाच त, G1 4 5 M4 उपचारं, G2 उपाम च ( for °चरन् ) K1 3 4 Ñ1 V1 2 Dn D1 3 G1 4 हिते रतम्, K2 हितेप्सिता ( for हिते रता ) — D2 om line 1446-1447 — ( L 1446 ) K2 D1 2 गत ( for ततस् ) — ( L 1447 ) K2 4 तत्त्वज्ञ ( for °ज्ञा ) K1 2 D1 2 हिते रता K4 Dn G4 हिते रतम्, B1 D3 हित वच, B2 D1 2 G5 हितकरी ( for °करम् ) V2 सर्वभूताभयकरम् ( for ° ). — ( L 1448 ) T1-3 G1 3 4 M4 हरस्व ( for नयस्व )

को भवान्कस्य वा मर्त्य पुनश्चागम्यते त्वया ।
किमर्थमिह संप्राप्तो वने घोरमृगाकुले ॥
निर्मनुष्ये द्वीपिवृते पिशाचगणसेविते ।
श्वापदैः सेव्यमाने च विपिने व्याघ्रसंकुले ॥
स कुमारोऽनवद्याङ्गः साक्षाद्विष्णुरिवापरः ।
पद्मपत्रेक्षणः श्यामः पद्माभः श्रीपतिः स्वयम् ॥
अस्मत्प्रीतिकरः साक्षात्प्राप्तो विष्णुरिवापरः ।
देवो वा यदि वा यक्षो गन्धर्वः किंनरोऽपि वा ॥
इन्द्रो वा धनदो वापि यमोऽथ वरुणोऽपि वा ।
एकाकी विपिने घोरे ध्यानार्पितमना इव ॥
ब्रूहि मर्त्य यथातत्त्वं ज्ञातुमिच्छामि मानद ।
एवं पृष्टः पिशाचाभ्यामाह विष्णुरुरुक्रमः ॥
क्षत्रियोऽस्मीति मां प्राहुर्मनुष्याः प्रकृतिस्थिताः ।
यदुवंशे समुत्पन्नः क्षात्रं वृत्तमनुष्ठितः ॥
लोकानामथ पातास्मि शास्ता दुष्टस्य सर्वदा ।
कैलासं गन्तुकामोऽस्मि द्रष्टुं देवमुमापतिम् ॥
इत्येवं मम वृत्तान्तः कथ्यतां कौ युवामिति ।
युवामिह समायातौ किमर्थं ब्राह्मणाश्रमम् ॥
एषा हि बदरी पुण्या नानाविप्रनिषेविता ।
बदरीयं समाख्याता न क्षुद्रैराश्रिता क्वचित् ॥

तपस्विभिस्तपोयुक्तैर्जुष्टा सिद्धनिषेविता ।
श्वगणा नात्र दृश्यन्ते पिशाचा मांसभोजनाः ॥
न हन्तव्या मृगाश्चात्र मृगया नात्र वर्तते ।
न तु क्षुद्रैः प्रवेष्टव्या न कृतघ्नैर्न नास्तिकैः ॥
अहमस्य तु देशस्य रक्षिता नात्र संशयः ।
व्यतिक्रमो यदि भवेत्तस्य शास्तास्मि यत्नतः ॥
कौ भवन्तौ क्व नु युवां कस्येयं महती चमूः ।
नातः परं प्रवेष्टव्यमृषयस्तत्र संस्थिताः ॥
विघ्नस्तत्र प्रवर्तेत तपःसु च तपस्विनाम् ।
इहैव स्थीयतां तावद्गम्यतां च ततः सुखम् ॥
अन्यथाहं निषेद्धा स्यां बलाद्वाक्यैस्तथैव च ।
एवं पृष्टौ पिशाचौ तु वक्तुमेवं प्रचक्रतुः ॥
तयोरेको महाघोरः पिशाचो दीर्घबाहुकः ।
उवाच वचनं तत्र यथा हृदि समर्पितम् ।
श्रूयतामभिधास्यामि समाहितमना भव ॥
नमस्कृत्य जगन्नाथं हरिं कृष्णं जगत्पतिम् ।
आदिदेवमजं विष्णुं वरेण्यमनघं शुचिम् ।
वक्ष्यामि सकलं यद्वत्तथा शृणु यदीच्छसि ॥
घण्टाकर्णोऽस्मि नाम्नाहं पिशाचो घोरदर्शनः ।
मांसादो विकृतो घोरः साक्षान्मृत्युरिवापरः ॥

---

हरि (for [b]) — (L. 434) Dn1 T1.3 G1.3-5 M3 दृष्ट्वा लोके श्वरेश्वरम् (for [a]) — (L. 435) M1.3 तमुद्देश (for समु°) — (L. 436) D6 अन्तरीकृतकेशवौ (for [a]) — (L. 438) Dn Ds1 T1 G1.3 M1.3 घोरे (for घोर°) D6 वने घोरे महाकुले (for [b]) — (L. 439) D6 द्वीपिवने (for °वृते) — M4 om lines 440–444 — (L. 443) T1 पद्मनाभ श्रिय पति, G1 °नाभो हरिः स्वयम् (for [b]) — G1 om line 443 — (L. 444) G3 रक्षो (for यक्षो) — (L. 446) M1 विजने (for विपिने) — (L. 447) D6 T3.4 G1-3 M1.3 सत्त्वं, T1 त्वं च (for मर्त्य) D6 T1.3 G1 M1-3 यथा मर्त्य; T4 यथा मर्त्य (for यथातत्त्वं) Dn Ds1 G2 M1.3 इच्छाम, D6 T2 G1.4 M3.4 °व (for °मि) G3 मानव (for °द) — (L. 448) T4 कुरूत्तम (for उरुक्रम) D6 T2 G1-3 आह कृष्ण कुरूत्तम (D6 °दुह) (for [b]) — (L. 449) Dn Ds1 T4 G4 M1 (D6 °दुह) (for [b]) प्राहुर्, D6 T1.3 G1.3 M4 ब्रुवते (for प्राहुर्) T1 प्राकृता प्राहुर्, D6 T1.3 G1.3 M4 नृपुर (for प्राहुर्) T1 प्राकृता (for प्रकृति) — (L. 450) G3 क्षात्रवृत्तिम् (for क्षात्रं वृत्तम्) G3 M3 अनुष्ठितम् — (L. 453) M1.3 [यु]व (for [यु]वा) — (L. 455) Dn Ds1 D6 T1.3.4 G1.3.5 M महती (for बदरी) — Ds1 om lines 456–457 — (L. 456) M1 [इ]ति (for [इ]य) — (L. 457) G4 M4 विप्र (for सिद्ध) — (L. 458) D6 T1 G2.3 M1-3 वर्तन्ते (for दृश्यन्ते) — (L. 459) G2 न गन्तव्या मृगैरेषा (for [a]) — (L. 460) T2 कृतघ्नैः (for तु क्षुद्रैः) — (L. 461) D6 G3 गतभावैर्, T2 न तु क्षुद्रैर् (for न कृतघ्नैर्) — (L. 461) Dn1 देवस्य (for देशस्य) — (L. 464) G2 प्रवेष्टव्या (for °व्यम्) — (L. 465) T2 तपसश्च, G2 तपस्विषु (for तपःसु च) D6 M1.3 तपस्विषु (for °नाम्) — (L. 467) M3 [अ]स्मि (for स्यां) T1.4 M4 वाक्यैस् (for वाक्यैस्) — Before line 468, Dn Ds1 G4 M ins वैशंपायन उवाच — (L. 468) T2 G1.3 उक्तौ (for पृष्टौ) G4 M1-3 प्रचक्रतुः (for °क्रतुः) — Before line 471, Dn Ds1 T1.3.4 G1.3.5 M ins पिशाच उवाच — (L. 472) D6 T2 च न विष्णुं

धनदस्यानुगन्ताहं साक्षाद्रुद्रसखस्य च ।
ममायमनुजः साक्षादन्तकस्यान्तको ह्ययम् ॥
मृगयायां समायाता विष्णोः पूजार्थमित्युत ।
ममेयं वर्तते सेना श्वगणोऽपि ममैव नु ॥
आगतोऽयं महाशैलात्कैलासाद्भूतसेवितात् ।
अहं पिशाचवेषेण संस्थितः पापकर्मकृत् ॥
सततं दूषयन्विष्णुं घण्टामाबध्य कर्णयो ।
मम न प्रविशेन्नाम विष्णोरिति निश्चिन्तयन् ॥
अहं कैलासनिलयमासाद्य वृषभध्वजम् ।
आराध्य तं महादेवमस्तुवं सततं शिवम् ॥
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसंनिधौ ॥
मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ॥
तस्माद्गत्वा च बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे ॥
इत्युक्तो देवदेवेन शूलिना ज्ञातवानहम् ।
तमेव परमं मत्वा गोविन्दं गरुडध्वजम् ।
तस्मात्प्रार्थयमानः सन्मुक्तिदेशमिमं गतः ॥
अन्यच्च शृणु मे कार्यं यदि कौतूहलं तव ।

पुरी द्वारवती नाम पश्चिमस्योदधेस्तटे ॥
यदुवृष्णिसमाकीर्णा सागरोर्मिसमाकुला ।
अध्युवास हरिर्विष्णुस्तां पुरीं पुरुषोत्तमः ॥
द्रष्टुं लोकहितार्थाय वसन्तं द्वारकापुरे ।
निर्गताः सांप्रतं मर्त्ये वयमेतैः सहानुगैः ।
विष्णुः सर्वेश्वरः साक्षाद्द्रष्टव्योऽस्माभिरद्य हि ॥
लोकानां प्रभव पाता कर्ता हर्ता जगत्पतिः ।
आदेरादिः समस्तस्य प्रभवं कारणं हरिः ॥

कर्ता समस्तस्य हरिः पुरातनः
प्रभुः प्रभूणामपि यः सदात्मकः ।
तमादिदेवं वरदं वरेण्य
द्रष्टुं हरिं संप्रति संयताः स्मः ॥
यस्य प्रसादाज्जगदेवमासी-
त्सप्राणिगन्धर्वमहोरगौघम् ।
देवं जगद्योनिमजं जनार्दनं
द्रष्टुं हरिं संप्रति संयताः स्मः ॥
यस्योदराद्विश्वमिदं प्रभूत
लय च यस्मिन्समुपैति कल्पे ।
यस्यैव साक्षाद्वशवर्ति विश्वं
द्रक्ष्याम देवं पुरुषोत्तमं हरिम् ॥

---

( for जगत्स्रार्थं ) M₄ त्रिष्णुं ( for कृष्णं ) — ( L 473 ) G₂ om lines 473ᵇ–477ᵃ G₂ शुभम् ( for शुचिम् ) — ( L 474 ) D₆ T₄ यत्तन् ( for यद्दन् ) — ( L 478 ) Dn Ds₂ T₁ ₃ ₄ G₁ ₃–₅ [अ]हम् ( for [अ]यम् ) D₆ [अ]न्तकाद्धय ( for °को ह्ययम् ) — ( L 479 ) Dn Ds₂ T₁ ₄ G₁ ₄ M₄ मृगयेय सुमहती ( for ° ) G₁ त्रिष्णु ( for विष्णो ) — ( L 481 ) G₁ कालरसभूतसेवितात् ( for ᵈ ) — D₆ T₄ G₂ M₁–₃ om lines 482–495 — ( L 484 ) T₃ G₁ सं ( for न ) — ( L 492 ) T₃ गोविन्द ( for °न्दात् ) T₁ नरनारायणाश्रमम् ( for ᵇ ) — ( L 495 ) M₄ इहागत ( for इम गत ) — ( L 498 ) G₃ ₃ समाकीर्णा ( for °र्णा ). G₂ M₄ समाकुलाम् ( for °ला ) — ( L 499 ) Dn Ds₂ G₂ ₃ M₄ अध्यास्ते स ( for अध्युवास ) — ( L 501 ) Ds₂ D₁ T₂ ₃ G₁ ₃–₅ M₄ निर्गत ( for °ता ) T₂ G₁ ₄ M₄ मर्त्यं ( for मर्त्ये ) G₂ निर्गता सम वर्तन्ते ( for ° ) D₅ T₂ G₂ समाहितै ( for सहानुगै ). — ( L 502 ) G₂ M₄ अद्य ( for अद्य ) — ( L 503 ) D₆ कर्ता ( for पाता ) G₂ D₆ भर्ता ( for कर्ता ) — ( L 504 ) Bom Poona eds G( ed ) आदिर स हि ( for आदेरादि ) — ( L 506 ) Dn₁ सदात्मक , G₄ सदात्मकम् ( for °त्मक ) — ( L 508 ) M₄ दृष्ट्वा ( for द्रष्टु ) M₁ ₃ वय ( for हरिं ) T₂ G₄ संयतात्मा ( for °ता स्म ) — ( L 509 ) M₁ ₃ प्रभावात् ( for प्रसादात् ) — ( L 510 ) M₄ -महोरगोरगम् ( for °गौघम् ) — ( L 511 ) D₆ G₂ अहं ( for अजं ) — ( L 512 ) D₆ संयतोऽस्मि ; G₄ °तात्मा ( for °ता स्म ) M₁ ₃ द्रष्टुं समस्ति ययमुपगता स्म. — G₂ om lines 513–515 — ( L 513 ) T₂ यस्योदरं ( for °दरात् ) M₄ प्रसूत ( for प्रभूतं ) — ( L 514 ) G₁ लयाय ( for लयं च ) M₄ तस्मिन् ( for य° ) M₃ काले ( for कल्पे ). — ( L 516 ) D₆ T₂ G₁ द्रक्ष्यामि ( for °म ) ; D₆ T₂ विश्वं ( for देवं ) — G₂ om lines 517–519 — ( L 517 ) D₆ [अ]पि च ( for च यो ) — ( L 518 ) G₂ भर्ता ( for हर्ता ) — ( L 519 ) D₆ द्रक्ष्याम , T₂ G₂ °मि ( for °म ) T₂ G₁ ₄ पुरुषेश्वरं ( for पुरुषो° ). — ( L 520 ) M₃ ₃ ईदृशम् ( for

स्रष्टा च योऽसौ सकलस्य देवः
पाता च हर्ता च हरिः स एव ।
द्रक्ष्याम नित्यं भुवनेश्वरं हरिं
पुराणमाद्यं प्रभविष्णुमव्ययम् ॥
अजस्य कर्ता भुवनस्य गोप्ता
भुवश्च कर्ता हरिरेक एव ।
तं योगिनं योगविशुद्धबुद्धिं
लभेम केनेति मतिः समाकुला ॥
निगीर्य विश्वं सकलं जगत्पतिः
शेते शिशुत्वं समवाप्य साक्षात् ।
वटस्य पत्रे जगतां निवासः
पादौ च विक्षिप्य करौ च धून्वन् ॥
यस्योदरे देवमुनिः पुरातनो
ददर्श लोकानखिलान्स्वमायया ।
प्रविश्य विश्वं सकलं यथाव-
द्बहिर्यथाभूतमभूदिदं महत् ॥
निगीर्य विश्वं जगदादिकाले
शेते महाहौ जलधेर्जलौघे ।
देव्या श्रिया चामरलोलहस्तया
निषेव्यमाणः पुरुषोत्तमस्तदा ॥
नाभेश्च यस्याविरभूत्सपत्रं
पद्मं महत्काञ्चनसप्रभं प्रभो ।
जन्मास्पदं लोकगुरोर्यदासी-
द्विस्तारि पद्मं जगदादिसृष्टौ ॥
दधार यो भूतपतिर्महान्महीं
दंष्ट्राग्रसंस्थापितरूढमूलाम् ।
नदन्महामेघ इवादिकाले
पुनर्वराहो मुनिगीतकीर्तिः ॥
हरिः पुराणः पुरुषोत्तमः प्रभुः
कर्ता समस्तस्य समस्तसाक्षी ।
यज्ञात्मको यज्ञपतिर्जगत्पति-
र्द्रष्टुं तमीशं वयमुद्यताः स्मः ॥
केचिद्बहुत्वेन वदन्ति देव-
मेकात्मना केचिदिमं पुरातनाः ।
वेदान्तसंस्थापितसत्त्वयुक्तं
द्रष्टुं तमीशं वयमुद्यताः स्म ॥
अनेकमेकं बहुधा वदन्ति
श्रुतिस्मृतिन्यायनिविष्टचित्ताः ।
आहुर्यमात्मानमजं पुराविदो
द्रष्टुं तमीशं वयमुद्यताः स्मः ॥

अव्ययम्) — After line 520, G3 ins
5** द्रष्टुं हरिं सम्प्रति संयता स्म ।
— (L 522) भवस्य (for भुवश्च) — (L 523) T4
G1 4 5 योगिनो (for °न) — M4 सत्त्व (for बुद्धिं).
— (L. 524) Dn Ds2 D6 T2 G6 M4 तेनैव; G3 तेनैव (for
केनेति) T1 2 G1 3 4 transp मति and समाकुला — (L. 527)
525) D6 उदीर्य, M3 उद्गीर्य (for निगीर्य) — (L. 528) M2 त्रि (for
M3 निवास (for °स) — D5 T2 4 G1 5 विधुन्वन् (for च धू°).
च) Dn Ds2 D6 T2 4 G1 5 निखिलान् (for अखि°) Dn2
— (L. 530) T2 G1 5 M1 निखिलान् (for अखि°) Dn2
— (L. 533) D6 निस्तीर्य;
D6 G2 4 M4 स (for स्व) — (L. 534) Dn2 T1 3 4 G1-4
M1-3 उद्गीर्य (for निगीर्य) — (L. 535)
M4 महात्मा (for °हौ) G3 जलोधै (for °घे) — (L. 537) D6 G3
M3 -हस्तलोलया (for लोलहस्तया) — (L. 538) Dn T1 4
सपद्मं; M2 सुपत्रं (for सपत्र) — (L. 540)
G1 4 5 M1 3 4 प्रभो, D6 विभो (for प्रभो)

G3 M4 विस्तार्य (for °रि) — (L. 541) Dn1 Ds2 T1 G3
M4 महामहीं, T2 G1 4 महात्मा महीं (for महान्महीं)
— (L. 542) Ds2 -गूढमूलाम्, G3 मूलरूढा (for रूढमू
लाम्) — (L. 543) D6 M2 3 नाद (for नदन्) D6 T2
G3 पद्मादि (for इवादि) — (L. 544) Dn Ds2 T2 4 G1
3 4 5 M4 -मूर्ति (for कीर्ति) — (L. 547) D6 पुराण
(for जगत्पतिर्) — (L. 548) G1 इच्छतास्मा (for °ता स्म°)
— T2 G1 3 4 (hapl) om lines 549 556 D6 om.
(hapl) lines 549 552 — (L. 549) G3 बहुत्वेऽपि (for
°त्वेन) — (L. 550) T4 M1 अमु (for इम) Dn Ds2 T1
G5 M4 पुरातनम्, Bom Poona Cal. eds G(ed) पुराणम्
(for पुरातना) — (L. 551) T1 सत्ययुक्तं, M1 3 -सत्त्वयुक्ता
(for °युक्त) G3 य सर्वगं देवमयं पुरातनं — (L. 552) G3 द्रष्टुं
हरिं सम्प्रति संयता स्म — (L. 553) T1 4 G3 एके (for एकं)
M1 3 वदन्त (for °न्ति) — (L. 554) T1 विशिष्ट- (for
निविष्ट) — (L. 557) G3 स- (for य) — (L. 558)

यं प्राहुरीड्यं वरदं वरेण्य-
मेकान्ततत्त्वं मुनयः पुरातनाः ।
यं सर्वगं देवमजं जनार्दनं
द्रष्टुं हरिं संप्रति सयताः स्मः ॥
यस्मिन्सर्वमिदं प्रोतमादिकाले जगत्पतौ ।
तं द्रष्टुमद्य संवृत्ताः किं नु वक्ष्याम सांप्रतम् ॥
गच्छामो वयमन्यत्र गच्छ त्वं काममन्यतः ।
नियमोऽप्यस्ति नो मर्त्य यथेष्टं गच्छ सांप्रतम् ।
रात्रिमध्यमनुप्राप्तं नात्र कार्या विचारणा ॥
इत्युक्त्वा घोररूपोऽसौ पिशाचो विकृताननः ।
तस्मिन्नेव समे देशे पीत्वा च रुधिरं बहु ॥
भक्षयित्वा यथाकामं मांसराशिं विचक्षणः ।
अपः संस्पृश्य तत्रैव पार्श्वे संस्थाप्य साधनम् ॥
आम्रपार्श्व महाघोरं संस्थाप्य विपुलं महत् ।
आसनं कुशसंयुक्तं कृत्वा चाभ्युक्ष्य वारिणा ॥
उत्सार्य श्वगणान्सर्वान्यत्नेन महता तदा ।
सुखासनं समास्थाय समाधौ यतते स्वपः ॥
एकचित्तस्तदा भूत्वा नमस्कृत्य च केशवम् ।
इमं मन्त्रं पठन्घोरः पिशाचो भक्तवत्सलम् ॥
नमो भगवते तस्मै वासुदेवाय चक्रिणे ।
नमस्ते गदिने तुभ्यं वासुदेवाय धीमते ॥
ॐ नमो नारायणाय विष्णवे प्रभविष्णवे ।
मम भूयान्मनःशुद्धिः कीर्तनात्तव केशव ॥
जन्मेदमीदृशं घोरं मा भून्मम दुरासदम् ।
देवभूतो भविष्यामि स्मरणात्तव गोपते ॥
तव चक्रप्रहारेण कायो नश्यतु मामकः ।
मम भूयो भवो मा भूदेषा मे प्रार्थना तव ॥
अर्थिना कल्पवृक्षोऽसि दाता सर्वस्य सर्वदा ।
यत्र यत्र भवेज्जन्म तत्र तत्र भवान्हदि ॥
वर्ततां मम देवेश प्रार्थनैषा ममापरा ।
नमस्तुभ्यं नमस्तुभ्यं भवत्वेवं सदा मम ॥
निर्विघ्ना प्रार्थना देव नमस्तेऽस्तु सदा मम ॥
यदा मे मरणं भूयात्तदा मा भूत्स्मृतिभ्रमः ॥
दिने दिने क्षणं चित्तं त्वयि सम्यं भजत्विति ।
एवं प्रेरय मां देव मा भूत्ते चित्तमीदृशम् ॥
नृशंसोऽयं पिशाचोऽयं दया कस्मिन्भवेदिति ।
एवं चिन्तय मां देव भृत्यो मद्यमिति प्रभो ॥
परपीडा न मत्तोऽस्तु नमस्ते भगवन्प्रभो ।
इन्द्रियाणीन्द्रियार्थेषु मा भूवन्सांप्रतं हि मे ॥
अन्तकाले ममाप्येवं प्रसादात्तव केशव ।

---

T1 G4 M1 एकान्ततत्त्व, M2 °त्मकरं (for °न्ततत्त्वं) G3 पुराविद (for °तनाः) —(L 559) M1 स (for य) —(L 560) M1-3 वय (for हरिं) —(L 561) Dn Ds1 D5 T1 2 4 G2-4 M2 4 विश्वम् (for सर्वम्) T4 जगत्पिता (for °त्पतौ) —(L 562) T1 अभि (for अद्य) M1 संयुक्ता (for संवृत्ता) D5 T1 2 G2-4 वक्ष्यामि (for °म) —(L 567) M2 समुद्देशे (for समे देशे) —(L 568) G3 मांसाशी स (for मांसराशिं) M3 मांसानि सुबहूनि च (for °) —(L 570) G1 अश्वपार्श्व; G2 आर्द्रपार्श्व (for आम्रपार्श्वं) —(L 573) Ds2 च य (for स्वपः) —(L 574) T2 एकधीस्तत्पत भूत्वा (for °) G3 नमश्चक्रे (for °स्कृत्य) —(L 575) T1 महाघोरं, M2 पठन्घोरं (for °न्घोरः) M1 2 4 वत्सलः. —(L 578) T1 प्रभविष्णवे (for प्रभ°) —(L 579) D5 T1 G1 M1-3 भूयान्मम मनःशुद्धं (for °). —(L 580) D5 भूयात्, G2 मोर्घ (for मा भूत्) —(L 581) Dn Ds1 T2 4 G1-4 M4 देवदूतो, T1 G1 °पूतो, M2 तव पूतो; M3 भवभूतो (for देवभूतो) G2 केशव (for गोपते). — After line 581, D5 ins

581* अद्य पूतो भविष्यामि स्मरणात्तव केशव ।

—(L. 582) D5 प्रहरणात् (for प्रहारेण) T2 M1 नश्यति (for °तु) —(L. 583) Dn Ds1 T1 2 G1 2 M4 त्रिभो; M2 हरे (for तव) —(L. 584) Ds2 भयार्त्तो (for अर्थिना). —(L. 587) M1 नमस्तुभ्य (for the first °स्तुभ्यं). G1 सदात्मनि (for सदा मम) — T2 G1 4 om (hapl.) line 588 —(L 588) T1 M1 निर्विघ्न (for °घ्ना) M1 4 हरे (for मम) —(L. 589) D5 मति (for स्मृति) T2 तदाभूत्स्मृतिविभ्रम (for °) —(L. 590) D5 सुखं (for सम्यं) T2 G2 4 भजिष्यति (for भजत्विति) —(L. 591) T1 चिन्तय (for प्रेरय) T1 om (hapl.) lines 591b–593a M2 ईदृशं मन (for चित्तमीदृशम्). —(L. 592) Dn Ds1 D5 T2 4 G2-4 M (न)शिष्यन्ति (by transp.) M4 इह (for इति) — T2 G1 om line 593 —(L. 595)

पृथिवी पातु मे घ्राणं रसना पातु मे पयः ॥
सूर्यश्च पातु मे चक्षुः स्पर्शं पातु च मारुतः ।
श्रोत्रमाकाशमप्येतु मनः प्राणं च गच्छतु ॥
जलं मां रक्षतान्नित्यं पृथिवी रक्षतां हरे ।
सूर्यो मां रक्षता विष्णो नमस्ते सूर्यतेजसे ॥
वायुर्मां रक्षतां दुःखादाकाशं च जनार्दन ।
न मनः सर्वगं देव रक्षता विषयाद्धरे ॥
मनोविपर्ययं घोरं पुरुषान्हन्ति नित्यशः ।
पापेषु योजयेत्पुंसः परपीडादिकेषु च ॥
मनस्त्वद्रक्षता देव भूयो भूयो जनार्दन ।
मा भून्मनसि कालुष्यं मनो मे निर्मलं भवेत् ॥
कलुषं यस्य तच्चित्तं नरके पातयत्यमुम् ।
बाह्यानि निर्मलान्येवमिन्द्रियाणि भवन्ति चेत् ।
न तानि कार्यवन्तीह मनश्चेत्कलुषं भवेत् ॥
तथा हि मुष्टिनामेध्यं गृहीत्वा यो व्यवस्थितः ।
बहिः प्रक्षालनं कुर्वन्नि भवेत्तस्य केशव ।
व्यर्थो हि केवलं तस्य प्रग्रहो बाह्यगोचरः ॥
तस्मात्सर्वप्रयत्नेन चित्तं रक्ष जनार्दन ।
बलवानिन्द्रियग्रामो वारयैनं जनार्दन ॥
परिवादाज्जगन्नाथ वाचं रक्ष दुरुद्वहाम् ।
परद्रव्यान्मनो रक्ष परदाराज्जनार्दन ।
सर्वत्र मे दया भूयात्प्रसादात्तव केशव ॥
त्वय्येव भक्तिरचला भूयाद्भूतेषु मे दया ।
बहुनात्र किमुक्तेन शृणुष्वेदं वचो मम ॥
सुखे दुःखे च रागे च भोजने गमने तथा ।
जाग्रत्स्वप्नेषु सर्वत्र त्वय्येव रमता मनः ॥
मामकं देवदेवेश नमस्तेऽस्तु जनार्दन ।
इति ब्रुवन्घोरतमो जात्या हीनो न चित्ततः ॥
पिशाचो भगवद्भक्तः समाधिं समपद्यत ।
दृढं बध्वात्मनः कायमाम्रपाशेन मांसप ॥
निश्चलेनैव मनसा सुखमास्ते स मांसपः ।
ध्यायन्हरिं जगद्योनिं विष्णुं पीताम्बरं शिवम् ॥
कुन्दाभमादिपुरुषमेकाकारमनामयम् ।
नित्यं शुद्धं ज्ञानगम्यं कारणं सर्वदेहिनाम् ॥
नासिकाग्रं समालोक्य पठन्ब्रह्म सनातनम् ।
निवातस्थो यथा दीपः प्रोच्चरन्प्रणवं सदा ॥

---

M3 भून्य ( for भूयो ) — G3.4 om line 594 — ( L 594 ) T1 नमो देव, T2 G1 च मे मास्तु ( for न मनोऽस्तु ) — ( L 595 ) M2 प्रभो ( for हि मे ) — ( L 597 ) Dn D6 T1.4 G1.2.4 पृथिवीं ( for °वी ) T1.4 G3.5 M4 रसनां ( for °ना ) D5 M1.2 पातु मे रसना मया ( for ᵇ ) — ( L 598 ) Dn Ds2 D6 T1.4 G3 M1.5 सूर्य, G2 भार्यो ( for सूर्यश्च ) Dn Ds2 D6 T1.2 G2.4 M मारुतम् ( for °त ) — ( L 599 ) G3 om from मध्येतु up to मनस्त्वद्रक्ष ( in line 606 ) D6 मभ्येतु ( for अप्येतु ) T1 पुन ( for मन ) D6 रक्षतु ( for गच्छतु ) — ( L 600 ) T2 M3 पृथिवीं ( for °वी ) T3 हरि ( for हरे ) — ( L 601 ) D6 सूर्यो रक्षतु मां नित्य ( for ᵃ ) T2 -सत्रुये ( for तेजसे ) — ( L 602 ) M1.2 मा ( for मा ) — T2 G1 om lines 603 606 — ( L 603 ) D6 T1 G5 M1-5 मन ( D6 °म ) सर्वग देव, G4 मम सर्वजगद्देव ( for ᵃ ) Dn Ds2 T1.4 G3.4 M4 विषयान्तरे ( for °द्धरे ) — ( L 604 ) Dn Ds2 T1.4 G3.5 M4 विपर्यये ( for °यं ) Dn2 T1 G3-6 M4 घोरे ( for घोर ) — ( L 605 ) D6 पापेषु येषु परस्य ( for ᵃ ) Dn Ds2 T1.4 G3.6 M4 परपीडात्मकेषु च ( for ᵇ ) — ( L 608 ) Dn2 T4 कालुष्य ( for कलुष ) — ( L 609 ) Dn Ds2 T1.2.4 G1.2.5 M4 [उ]त, D6 M2 च ( for चेत् ) — ( L 611 ) Dn Ds2 नाङ्गानि, D6 M1.2 यथा हि ( for तथा हि ) — ( L 613 ) M4 प्रग्रह ( for केवलं ) M4 केवल ( for प्रग्रहो ) — G4 om lines 614 617 — ( L 616 ) T1.2.4 G1.3 M2 परवादान्, G2 M1 परीवादान् ( for परि° ) D6 T4 यदूद्वह ( for दुरुद्वहाम् ) T2 वाच रक्षतु दुर्वहाम् ( for ᵇ ) — D6 om ( hapl. ) lines 618 623 — ( L 621 ) M4 भाग्ये ( for रागे ) — ( L 624 ) D6 घोरतनुर्, M4 °तरे ( for °तमो ) M4 om lines 624ᵇ-628ᵃ T4 तत्त्वत ( for चित्तत ) D6 जात्या तु न तु चित्तत ( for ᵇ ) — ( L 625 ) M1.3 समाधौ ( for °धिं ) — T2 G4 ( hapl ) om line 627 — ( L 627 ) G2 स सयत ( for स मांसप ) — ( L 628 ) G6 जगन्नाथ ( for °योनिं ) — ( L 630 ) Dn Ds2 T1.2.4 G1.2.5 M4 मुकुन्दम् ( for कुन्दाभम् ) M1 एकाक्षरम् ( for °कारम् ) — ( L 630 ) M1.3 नित्य ( for नित्यं ) — ( L 631 ) T2 पर- ( for पठन् ) — ( L 632 ) T2 निवासस्थो, T4 निर्वातस्थो ( for निवा° ) G1.2.4 प्रणव ( for °वं ) — ( L 634 ) D6 M1.3 सयत, M2 स्वयत ( for सयत ) — ( L 636 ) M2 शुभ्र- ( for शुभ ) — ( L 637 ) T4 पिशितादम्, G4 वशी ध्यानस्, M4 विगतादास् ( for पिशि° ) — ( L 638 ) D6 M1.3 विशरीरं

प्रणवं वाचकं मत्वा वाच्यं ब्रह्मेति निश्चितः ।
एकाग्रं सततं कृत्वा चित्तं विष्णौ समर्पितम् ॥
विकल्परहितं चित्तं हृदि मध्ये न्यवेशयन् ।
पुण्डरीके शुभदले समावेश्य जगत्पतिम् ॥
आस्ते सुखं महायोगी पिशिताशस्तदा महान् ।
त्रिधामानं जपंस्तत्र स्मरन्विष्णुं सनातनम् ॥

Colophon

वैशंपायन उवाच ।

ततः स भगवान्विष्णुः पिशाचं दृष्टवांस्तदा ।
चिन्तयन्तं स्वमात्मानं शुद्धं बुद्धिसमन्वितम् ॥
आत्मन्येव स्थितं साक्षात्पठन्तं प्रणवं सकृत् ।
प्रार्थयन्तं स्वमात्मानमेकान्ते नियतं हरिः ।
अचिन्तयज्जगन्नाथः कारणं पुण्यसंचये ॥
ध्यात्वा तु सुचिरं विष्णुः कारणं पुण्यकर्मणः ।
धनदस्योपदेशेन पठन्सुमनदृशः क्षितौ ।
वासुदेवेति कृष्णेति माधवेति च मां सदा ॥
जनार्दन हरे विष्णो भूतभावनभावन ।
नरकारे जगन्नाथ नारायण परायण ॥
इति मा नामभिर्नित्यं पठत्येष दिवानिशम् ।
स्वपञ्जाग्रत्तथा तिष्ठन्भुञ्जन्गच्छंस्तथा वदन् ॥
भक्षयन्मांसपिटकं पिबञ्शोणितमेव च ।
बाधमानं च सुचिरं हत्वापि च मृगान्बहून् ॥
हनने भोजने चैव जाग्रत्स्वप्ने तथैव च ।
सर्वेष्वपि च कार्येषु कर्तादिमिति मन्यते ॥
एतस्य कर्मणः पाकः एष घोरस्य सर्वतः ।
निश्चित्यैवं जगन्नाथः प्रीतिमानस्य बभूव ह ॥
अदर्शयत्स्वमात्मानमनन्यस्य जगत्पतिः ।
शुद्धेऽन्तःकरणे तस्य पिशाचस्याथ भूमिप ॥
स च घोरः पिशाचोऽपि ददर्शात्मनि केशवम् ।
पीतकौशेयवसनं पद्माक्षं श्यामलं हरिम् ॥
शङ्खिनं चक्रिणं विष्णुं खड्गिनं गदिनं विभुम् ।
किरीटिनं कौस्तुभिनं श्रीवत्साच्छादितोरसम् ॥
नीलमेघनिभं शान्तं गरुडस्थं प्रभञ्जनम् ।
चतुर्भुजं शुभगिरं निश्चलं सर्वगं शुभम् ॥
अनादिमजरं नित्यं मायाविनममायिनम् ।
सत्ययुक्तं सदा शुद्धं बुद्धिगम्यं सदामलम् ॥
मनसैव जगन्नाथं दृष्ट्वा विष्णुमनेनरथा ।
अनिमील्यैव नयने कृतार्थोऽस्मीत्यमन्यत ॥
अथ दृष्टो हरिर्विष्णुः साक्षात्सर्वगतः शुभः ।
प्रसन्नो हि हरिर्मध्ये तेनाहं दृष्टवान्हरिम ॥

(for त्रिधामान) T₁ हरिं (for जपंस्) G₂ जपन् (for स्मरन्)

COLOPHON — *Mention of the Epic* Ds₁ — *Mention of Khila* Dn Ds T₁ G M — *Sub parvan* Dn Ds₁ Ds T₁ G₁ M वैशम्पायन — *Adhy name* Dn Ds₂ T₁ G₂ M₁ घण्टाकर्णचित्तसमाधि, G₂ घण्टाकर्णसमाधि विधानम्, M₁₋₃ पिशाचदर्शनम् — *Adhy no* Dn 265; Ds₁ 264, T₁ G₁ 191, T₂ G₂ 193, T₃ 100; G₃ 197, G₄ 190; G₅ M₁ 192, M₂ ₃ 165

(L. 640) Ds शुद्धि, T₁ G₁ ₃ M₃ शुद्धि; G₁ शुद्धि (for शुद्ध) Dn शुद्धि (for बुद्धि) M₁ चित्तशुद्धिसमन्वितम् (for °) — (L. 641) T₁ G₁ M₁ आत्मन्यपि, G₁ °न्येवं (for °न्येव) — (L. 642) Ds T₁ G₁ M₁₋₃ एकान्ते; T₁ ₂ G₁ °न्तं, G₁ °न्ते (for °न्ते) T₁ ₂ हरिम् (for हरिः) — (L. 643) T₁ ₂ G₃ चिन्तयन्तं जगन्नाथं (for °) Ds संचयम्, G₁ संचये (for संचये) — (L. 644) T₁ G₁ °कर्मणाम् (for °णः) — (L. 645) T₁ G₁ नरकार, M₁ नरकारे, Dn ed नमस्कारी (for नरकारे) — (L. 649) T₁ पठति (for पठति) — (L. 650) Dn Ds₁ T₂ G M₁ जाग्रन् (for जाग्रत्) T₁ M₁ ₃ गच्छन् (for तिष्ठन्) Ds T₂ M₁₋₃ तिष्ठन् (for गच्छन्) G₁ वदन् (for वदन्) — (L. 651) T₁ पिबन् (for पिबञ्) T₂ पिबन् (for पिबन्) — (L. 652) Ds G₁ बध्यमानं, M₁ ₂ बध्यमानस्, M₃ वधमानं (for बाधमानं), M₃ मृगमगान् (for [ह]त्वि च मृगान्) — (L. 653) M₁ गमने (for हनने) — (L. 655) T₁ पाकम् (for पाक), G₁ घोरेषु (for घोरस्य) Dn Ds₁ G₁ कर्मणः; M₁ ₂ सर्वेषु; M₁ °त (for °त) — (L. 658) Ds G₁ M₁ शुद्धान्तःकरणे तस्य (for °) T₁ G₁ भूपते (for भूमिप) — (L. 663) G₁ प्रभुं हरिम् (for प्रभञ्जनम्) — (L. 664) Dn Ds₁ G₁ ₂ M₁ ₃ शिवम् (for शुभम्) — M₁ om. line 665 — (L. 665) T₁ G₁ M₁ अनादिनिधनं नित्यं G₁ °मध्यनिधनं (for °) M₁ ₃ अप्रमेयम् (for °विनम्) — (L. 674) Ds सत्ययुक्तः G₁ निरवद्यं (for सत्ययुक्तं) Ds

पृथिवी पातु मे घ्राणं रसना पातु मे पयः ॥
सूर्यश्च पातु मे चक्षुः स्पर्शं पातु च मारुतः ।
श्रोत्रमाकाशमप्येतु मनः प्राणं च गच्छतु ॥
जलं मा रक्षतान्नित्यं पृथिवी रक्षतां हरे ।
सूर्यो मा रक्षतां विष्णो नमस्ते सूर्यतेजसे ॥
वायुर्मां रक्षतां दुःखादाकाशं च जनार्दन ।
न मनः सर्वगं देव रक्षतां विषयाद्धरे ॥
मनोविपर्ययं घोरं पुरुषान्हन्ति नित्यशः ।
पापेषु योजयेत्पुंसः परपीडादिकेषु च ॥
मनस्त्वद्रक्षतां देव भूयो भूयो जनार्दन ।
मा भून्मनसि कालुष्यं मनो मे निर्मलं भवेत् ॥
कलुषं यस्य तच्चित्तं नरके पातयत्यमुम् ।
बाह्यानि निर्मलान्येवमिन्द्रियाणि भवन्ति चेत् ।
न तानि कार्यं कुर्वन्तीह मनश्चेत्कलुषं भवेत् ॥
तथा हि सुष्ठिनामेध्यं गृहीत्वा यो व्यवस्थितः ।
बहिः प्रक्षालनं कुर्वन्किं भवेत्तस्य केशव ।
व्यर्थो हि केवलं तस्य प्रग्रहो बाह्यगोचरः ॥
तस्मात्सर्वप्रयत्नेन चित्तं रक्ष जनार्दन ।
यत्नान्निन्द्रियग्रामो वारयेनं जनार्दन ॥
परिवादाज्जगन्नाथ वाचं रक्ष दुरुद्वहाम् ।
परद्रव्यान्मनो रक्ष परदाराज्जनार्दन ।
सर्वत्र मे दया भूयात्प्रसादात्तव केशव ॥
त्वय्येव भक्तिरचला भूयाद्भूतेषु मे दया ।
बहुनात्र किमुक्तेन शृणुष्वेदं वचो मम ॥
सुखे दुःखे च रागे च भोजने गमने तथा ।
जाग्रत्स्वप्नेषु सर्वत्र त्वय्येव रमतां मनः ॥
मामकं देवदेवेश नमस्तेऽस्तु जनार्दन ।
इति ध्रुवन्घोरतमो जात्या हीनो न चित्ततः ॥
*पिशाचो भगवद्भक्तः समाधिं समपद्यत ।*
दृढं बध्वासनं कायमाश्रपाशेन मासपः ॥
*निश्चलेनैव मनसा* सुरसमास्ते स मासपः ।
ध्यायन्हरिं जगद्योनिं विष्णुं पीताम्बरं शिवम् ॥
कुन्दाभमादिपुरुषमेकाकारसनातनम् ।
नित्यं शुद्धं ज्ञानगम्यं कारणं सर्वदेहिनाम् ॥
नासिकाग्रं समालोक्य पठन्ब्रह्म सनातनम् ।
निवातस्थो यथा दीपः प्रोच्चरन्प्रणवं सदा ॥

---

M3 भूत्यं (for भूत्यो) — G3 4 om line 594 — (L 594) T3 नमो देव, T2 G1 च मे मास्तु (for न मत्तोऽस्तु). — (L 595) M3 प्रभो (for हि मे) — (L 597) Dn D6 T1 4 G1 2 4 पृथिवीं (for °वी) T1 4 G3 3 M3 रसना (for °ना) D6 M1 3 पातु मे रसना मया (for ᵇ) — (L 598) Dn Ds2 D6 T1 4 G3 M1 3 सूर्यं, G2 आर्यो (for सूर्यश्च) Dn Ds2 D6 T1 3 G2-4 M मारुतम् (for °त) — (L 599) G3 om from मप्येतु up to मनस्त्वद्रक्ष (in line 606) D6 भ्येतु (for अप्येतु) T2 तुन (for मन) D6 रक्षतु (for गच्छतु) — (L 600) T3 M3 पृथिवीं (for °वी) T2 हरि (for हरे) — (L 601) D6 सूर्यो रक्षतु मा नित्य (for ᵃ) T3 -चक्षुषे (for तेजसे) — (L 602) M1 3 मा (for मा) — T2 G1 om lines 603–606 — (L 603) D6 T1 G3 M1-3 मन (D6 °म) सर्वत्रगं देव, G4 मम सर्वजगद्देव (for ᵃ) Dn Ds2 T1 4 G3 5 M4 विषयान्तरे (for °द्धरे) — (L 604) Dn Ds2 T1 4 G3 5 M4 विपर्यये (for °यं) Ds2 T1 G3-5 M4 घोरे (for घोरं) — (L 605) D6 पापेषु येषु यस्य (for ᵃ) Dn Ds2 T1 4 G3 5 M4 परपीडात्मकेषु च (for ᵇ) — (L 608) Ds2 T4 कालुष्य (for कलुष) — (L 609) Dn Ds2 T1 2 4 G1 3 5 M4 [उ]त, D6 M3 च (for चेत्) — (L 611) Dn Ds2 नाह्यानि, D6 M1 3 यथा हि (for तथा हि) — (L 613) M4 प्रग्रहं (for केवलं) M4 केवलं (for प्रग्रहो) — G4 om lines 614–617 — (L 616) T1 2 4 G1 3 M2 परवादात्, G2 M1 परीवादात् (for परि°) D6 T4 यदूद्वह (for दुरुद्वहाम्) T2 वाचं रक्षतु दुर्वहाम् (for ᵇ) — D6 om (hapl) lines 618–623 — (L 621) M4 भाग्ये (for रागे) — (L 624) D6 घोरतनुर, M4 °तरं (for °तमो) M4 om lines 624ᵇ–625ᵃ T4 तस्तत्त (for चित्तत) D6 ज्ञात्या तु न तु चित्तत (for ᵇ) — (L 625) M3 3 समाधौ (for °धिं) — T2 G4 (hapl) om line 627 — (L 627) G2 स संयत (for स मासप) — (L 628) G6 जगत्स्वार्थं (for °योनिं) — (L 629) Dn Ds2 T1 2 4 G1 3 6 M4 सुकुन्दम् (for कुन्दाभम्) M1 एकाक्षरम् (for °कारम्) — (L 630) M1 3 नित्य (for नित्यं) — (L 631) T3 पर (for पठन्) — (L 633) T3 निवासस्थो; T4 निर्वातस्थो (for निवा°) G1 3 6 प्रणत (for °व) — (L 634) D6 M1 3 संयत, M2 सयन (for सतत) — (L 636) M1 शुभ (for शुभ) — (L 637) T4 विदितादस; G2 वशी स्नानस, M4 विगतावस (for पिशि°) — (L 639) D6 M1 3 त्रिशरीरं

प्रणवं वाचकं मत्वा वाच्यं ब्रह्मेति निश्चितः ।
एकाग्रं सततं कृत्वा चित्तं विष्णौ समर्पितम् ॥
विकल्परहितं चित्तं हृदि मध्ये न्यवेशयन् ।
पुण्डरीके शुभदले समावेश्य जगत्पतिम् ॥
आस्ते सुखं महायोगी पिशिताशस्तदा महान् ।
त्रिधामानं जपंस्तत्र स्मरन्विष्णुं सनातनम् ॥

Colophon

वैशंपायन उवाच ।

ततः स भगवान्विष्णुः पिशाच दृष्टवांस्तदा ।
चिन्तयन्तं स्वमात्मानं शुद्धं बुद्धिसमन्वितम् ॥
आत्मन्येव स्थितं साक्षात्पठन्त प्रणव सकृत् ।
प्रार्थयन्तं स्वमात्मानमेकान्ते नियतं हरिः ।
अचिन्तयज्जगन्नाथः कारणं पुण्यसंचये ॥
ध्यात्वा तु सुचिरं विष्णुः कारण पुण्यकर्मणः ।
धनदस्योपदेशेन पठन्सुबहुशः क्षिनी ।
वासुदेवेति कृष्णेति माधवेति च मां सदा ॥
जनार्दन हरे विष्णो भूतभावनभावन ।
नरकारे जगन्नाथ नारायण परायण ॥
इति मा नामभिर्नित्यं पठत्येप दिवानिशम् ।
स्वपञ्जाग्रत्तथा तिष्ठन्भुञ्जन्गच्छंस्तथा वदन् ॥

भक्षयन्मांसपिटकं पिबञ्शोणितमेव च ।
बाधमानं च सुचिरं हत्वापि च मृगान्बहून् ॥
हनने भोजने चैव जाग्रत्स्वप्ने तथैव च ।
सर्वेष्वपि च कार्येषु कर्ताहमिति मन्यते ॥
एतस्य कर्मणः पाक एप घोरस्य सर्वतः ।
निश्चित्यैवं जगन्नाथः प्रीतस्तस्य बभूव ह ॥
अदर्शयत्स्वमात्मानमनन्यस्य जगत्पतिः ।
शुद्धेऽन्तःकरणे तस्य पिशाचस्याथ भूमिप ॥
स च घोरः पिशाचोऽपि ददर्शात्मनि केशवम् ।
पीतकौशेयवसनं पद्माक्षं श्यामलं हरिम् ॥
शङ्खिनं चक्रिणं विष्णु स्रग्विणं गदिनं विभुम् ।
किरीटिनं कौस्तुभिनं श्रीवत्साच्छादितोरसम् ॥
नीलमेघनिभं कान्तं गरुडस्थं प्रभञ्जनम् ।
चतुर्भुजं शुभगिरं निश्चलं सर्वगं शुभम् ॥
अनादिमजरं नित्यं मायाविनममायिनम् ।
सत्ययुक्तं सदा शुद्धं बुद्धिगम्यं सदामलम् ॥
मनसैव जगन्नाथं दृष्ट्वा विष्णुमनेकधा ।
अनिमील्यैव नयने कृतार्थोऽस्मीत्यमन्यत ॥
अद्य दृष्टो हरिर्विष्णुः साक्षात्सर्वजगः शुभः ।
प्रसन्नो हि हरिर्मेऽद्य तेनाहं दृष्टवान्हरिम् ॥

( for त्रिधामान ) T₁ हरिं ( for जपम् ) G₁ जपन् ( for स्मरन् )

COLOPHON — *Mention of the Epic* Ds₁ — *Mention of Khila* Dn D₅ T₁ ₄ G M — *Sub-parvan* Dn Ds₂ D₅ T₁ ₂ G₁ M कैलासयात्रा — *Adhy name* Dn Ds₂ T₁ ₂ G₁ M₄ घण्टाकर्णचित्तसमाधि, G₂ घण्टाकर्णसमाधिविधानम्, M₁-₃ पिशाचदर्शनम् — *Adhy no* Dn 265, Ds₂ 264, T₂ G₃ 191, T₃ G₄ 193, T₄ 160, G₂ 187, G₄ 190, G₅ M₁ 192, M₁ ₅ 165

( L. 640 ) D₅ शुद्धिं, T₁ ₄ G₁ ₃ M₄ शुद्धिं, G₁ शुचिं ( for शुद्ध ) Dn शुद्धि ( for बुद्धि ) M₄ चित्तशुद्धिसमन्वितम् ( for ° ) — ( L. 641 ) T₁ G₃ M₄ आत्मन्यपि, G₂ °न्येव ( for °न्येव ) — ( L. 642 ) D₅ T₁ G₃ M₁-₃ एकान्ते°, T₂ ₂ G₁ °न्ते, G₁ °न्तं ( for °न्ते ) T₂ ₄ हरिम् ( for हरि ) — ( L. 643 ) T₁ ₂ ₄ G₃ चिन्तयन्से जगन्नाथं ( for ° ) D₂ संचयम्, G₃ संश्रये ( for संचये ) — ( L. 644 ) T₁ G₃ °कर्मणाम् ( for °ण ) — ( L. 648 ) T₁ G₁ नरकार, M₄ नराहते, Bom ed नमस्कारी ( for नरकारे ) — ( L. 649 ) T₁ पठति ( for पठति ). — ( L. 650 ) Dn Ds₂ T₂ G M₄ जाग्रंस्तु ( for जाग्रत् ) T₄ M₁-₃ गच्छन् ( for तिष्ठन् ) D₅ T₄ M₁-₃ तिष्ठंस् ( for गच्छंस् ) G₁ पठन् ( for वदन् ) — ( L. 651 ) T₁ पिबं ( for पिटकं ) T₁ पिबंश्च ( for पिबन् ) — ( L. 652 ) D₁ G₂ धर्ष्यमानं, M₃ ₄ धर्ष्यमानस्तु, M₁ वधमाने ( for बाधमानं ) M₁ मृगगणान् ( for [ह]त्वापि च मृगान् ) — ( L. 653 ) M₄ गमने ( for हनने ) — ( L. 655 ) T₁ पाकम् ( for पाक ). G₁ घोरेषु ( for घोरस्य ) Dn Ds₂ G₂ कर्मण ; M₁ ₃ सर्वशः ; M₄ °दा ( for °त ) — ( L. 659 ) D₅ G₂ M₁ शुद्धात्मकरणे यस्य ( for ° ) T₂ G₁ भूपते ( for भूमिप ) — ( L. 663 ) G₁ प्रभुं हरिम् ( for प्रभञ्जनम् ) — ( L. 664 ) Dn Ds₂ G₂ ₃ ₄ M₁ ₄ निश्चलम् ( for शुभम् ) — M₁ om. line 665 — ( L. 665 ) T₂ G₃ M₄ अनादिनिधनं नित्य ; G₁ °मध्यनिधनं ( for ° ) M₂ ₃ मायाकरम् ( for °विनम् ). — ( L. 666 ) D₅ सत्यपुण्यः ; G₂ विशुद्धं ( for सत्ययुक्तं ) D₅

यो धेनुकं तालवने तत्फलैः सममच्छिनत् ।
हत्वा दानवमुग्रं तं गोपान्विस्मापयन्निव ॥
दधार यो गोधरमुग्रपौरुषो
महाम्बुनिर्मेघसमागमे सति ।
विडम्बयञ्शक्रबलं प्रमोदय-
न्गोपांश्च गोपीश्च सगोकुलं हरिः ॥
गोपीनां स्तनमध्ये तु क्रीडते काममीश्वरः ।
योऽसौ पिबंस्तदधरं मायामानुषदेहवान् ॥
गोपीभिरास्वाद्य सुखं विविक्ते
शेते स्म रात्रौ सुखमेव केशवः ।
स्तनान्तरेष्वेव तदा च तासां
कामीव कान्ताधरपल्लवं पिबन् ॥
अक्रूरेण समाहूतस्तेन गच्छन्हि यामुने ।
जले योऽभ्यर्चितस्तेन नागलोके स एव हि ॥
ततश्च गच्छन्नवराजनार्दनो
हत्वा तमुग्रं रजकं बलात्पथि ।
हृत्वा च वस्त्राणि यथेष्टमीश्वरो
ययौ सरामो मथुरां पुरीं हरिः ॥
लब्ध्वा च दामानि बहूनि कामदो
दत्त्वा वरं माल्यकृते महान्तम् ।
लब्ध्वानुलेपं सुरभिं च यादवः
कुब्जां चकाराशु महार्हरूपाम् ॥
योऽसौ चापं समादाय मध्ये छित्त्वा महद्धनुः ।
सिंहनादं महच्चक्रे कल्पान्ते जलदो यथा ॥
हत्वा गजं घोरमुदग्ररूपं
विषाणमादाय ततोऽनु केशवः ।
ननर्त रङ्गे बहुरूपमीश्वरः
कंसस्य दत्त्वा भयमुग्रवीर्यः ॥
योऽसौ हत्वा महामल्लं चाणूरं निहतद्विपम् ।
यादवेभ्यो ददौ प्रीतिं कंसस्यैव तु पश्यतः ॥
जघान कंसं रिपुपक्षपातिनं
पितृद्विषं यादवनामधेयम् ।
संस्थाप्य राज्ये हरिरुग्रसेनं
सांदीपनिं काश्यमुपागमत्ततः ॥
विद्यामवाप्य सकलां दत्त्वा पुत्रं महामुनेः ।
सामजोऽथ जगामाशु मथुरां यादवीं पुरीम् ॥
हत्वा निशुम्भं नरकं महामतिः
कृत्वा सुघोरं कदनं जनार्दनः ।
ररक्ष विप्रान्मुनिवीरसंघा-
न्देवांश्च सर्वाञ्जगतो जगत्पतिः ॥
स एष भगवान्विष्णुरत्र दृष्टो जनार्दनः ।
कृतकृत्योऽस्मि संजातः सायुज्यं प्राप्नुयामहम् ॥

Ms नागफणौ ; D6 °फणां (for °फणो) — (L. 749) G3 निक्षिप्यमाण (for निपेत्य°) D6 गोपबालैः (for °दारकैः) — (L. 752) T4 M1 s आचिनोत् (for अच्छिनत्) T3 s G3 प्राच्छिनत्तत्फलैः सह (for °) — (L. 753) M1. 3 कोकान् (for गोपान्) — (L. 754) T1 G1 s -पौरुषान् (for °षो) — (L. 756) G3 शत्रुबलं (for शक्र°) — (L. 757) M3 समाकुलं (for सगो°) — (L. 759) T1 s G1 s स्तनं तासां (for तदधरं) — (L. 760) D6 T3 G1 विविक्त°, T1 °क्त (for °क्ते) — (L. 761) T1 G1 योऽसौ (for रात्रौ) T3 G1 s स्वयम् (for सुखम्) — (L. 762) D6 G3 रात्रौ (for तासां) T3 G3 क्षणान्तरेषु क्षणदासु तासां, T3 G1 स्तनान्तरे च क्षणदासु तासां — (L. 764) D6 M1 गच्छति (for °न्हि) T1 s G M3 तेन गच्छति यामुनम् (for °) — (L. 765) T1 यत्रैव (for स एव) — (L. 767) M3 s हित्वा, M1 छित्त्वा (for हत्वा) D6 यथेष्टम् (for °ष्टम्)

— (L. 769) T3 G1 योऽसौ (for ययौ) M1-3 मधु (M3 °धु)-रायां हरि°, M1 मथुरां महापुरीम् (for °रां पुरीं हरिः) — (L. 770) M1 दत्त्वा (for लब्ध्वा) D6 T1 M3 कामगो (for °दो) — (L. 771) D6 माल्यवते (for °कृते). — G1 om lines 772–777 — (L. 772) M1 च (for [त्व]नु°) — (L. 773) D6 G3 महार्घरूपाम्; T6 महार्घ्य°; M1 s महार्घ्य° (for महार्ह°) — (L. 774) G4 छित्त्वा मध्ये (by transp.) — (L. 776) D6 उग्रतर (for °दग्र) — (L. 779) D6 T1 G3 M1 s कंसमीश्वर (for °वीर्यः) — (L. 781) D6 तु स (for [ए]व तु) — (L. 782) D6 पातिनं (for °पा°) — (L. 785) G4 उपागमो (for °गमत्) — (L. 786) D6 G3 महामते; G1 °मुनि° M1 s °मन (for °मुने) — (L. 789) D6 M1 s निशुम्भं; T1 s निशुम्भं; G1 s 4 M1 निशुम्भं (for निशुम्भं) — (L. 789) D6 T1 च T1 G1-3 s M1 स (for सु°), G3 नरकं (for कदनं) — (L. 790) D6 सुनि°

येन दृष्टो हरिः साक्षात्तस्य मुक्तिः करस्थिता ।
सोऽयमेष हरिः साक्षात्प्रत्यक्षमिह वर्तते ॥
को नु जन्मान्तरे पूर्वं धर्मः सचित एव मे ।
यस्य पाकः समुत्पन्नो येनासौ दृश्यते मया ॥
सर्वथा पुण्यवानस्मि नष्टसंसारबन्धनः ।
किमस्मै दीयते वस्तु किं नु वक्ष्यामि साम्प्रतम् ।
करिष्ये किमहं विष्णो यदस्याद्य यथेप्सितम् ॥
इत्युक्त्वा विरसं नादं ननाद बहुशस्तदा ।
जहास विकृतं भूयो ननर्त पिशिताशनः ॥
नमो नमो हरे कृष्ण यादवेश्वर केशव ।
प्रत्यक्षं च हरेस्तत्र ननर्त विविधं नृप ॥

Colophon

वैशंपायन उवाच ।

विहस्य विकृतं भूयः प्रनृत्य च यथाबलम् ।
ब्राह्मणस्य हतस्याथ शवमादाय सत्वरम् ॥
द्विधाकृत्य महाघोरं पिशितं केशशाड्वलम् ।
सत खण्डं समादाय अद्भिरभ्युक्ष्य यत्नतः ॥
निधाय पात्रे सुशुभे नमस्कृत्य जनार्दनम् ।
इदं प्रोवाच देवेशं प्राञ्जलिः प्रणतः स्थितः ॥

गृहाणेदं जगन्नाथ भक्ष्यं योग्यं तव प्रभो ।
भवद्भिर्जगन्नाथ ग्राह्यं सर्वात्मना हरे ॥
भक्तिमात्रं यत्र विष्णो नात्र कार्या विचारणा ।
दत्तं यद्भक्तिमात्रेण ग्राह्यं तत्स्वामिना हरे ॥
नवं सुसंस्कृतं भक्ष्यं ब्राह्मणं शवमुत्तमम् ।
अस्माकं पिशिताशानां शास्त्रे नियतमेव हि ।
ततो गृहाण भगवन्यदि दोषो न विद्यते ॥
इत्युक्त्वा विकृतं भूयो विहस्य स तु कामतः ।
दातुमैच्छत्तदा खण्डमस्पृश्यस्य शवस्य ह ॥
ततः प्रीतो हरिस्तस्मै मनसापूजयच्च तम् ।
अहोऽस्य स्नेहकारुण्यं मयि सर्वत्र वर्तते ॥
इति संचिन्त्य मनसा प्रोवाच यदुपुंगवः ।
अलमेतेन सर्वत्र पिशाच पिशिताशन ।
अस्पृश्य मादृशैरेतद्ब्राह्मणं शवमुत्तमम् ॥
ब्राह्मणः सर्वथा पूज्यो जन्तुभिर्धर्मकाङ्क्षिभिः ।
पिशाचा घोरकर्माणो यतन्ते ब्रह्महिंसने ॥
न हन्तव्याः सदा विप्रास्तद्धिंसा नरकावहा ।
तस्मादस्पृश्यमस्माभिर्नात्र कार्या विचारणा ॥
तस्मात्प्रीतोऽस्मि भद्रं ते मनोनिर्मलता यथा ।

संघांश्च सर्वान्, M3 °वर्यसंघान् (for °वीरसंघान्) — (L. 793) Dn Ds2 T2 G1 2 3 M4 प्रासगान् (for प्रामुयाम्) — (L. 794) Dn T1 2 G2 3 M1 करे स्थिता, D3 G3 पुरे दधे, T3 पुर स्थिता (for करस्थिता) — (L. 796) T4 G3 M4 नूनं (for को नु) — Before line 801, Dn Ds2 G4 M4 ins वैशंपायन उवाच — (L. 801) T1 4 G1 3 M2 4 विस्तरं; G4 विस्वन (for °रं) Dn Ds2 T1 G3-5 M1 ननर्द (for ननाद) — (L. 803) M2 विष्णो (for कृष्ण) — (L. 804) D6 विविधम् (for विविध)

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G1 3 5 M — *Subparvan* Dn Ds2 D6 T2 4 कैलासयात्रा — *Adhy name* Dn Ds2 T1 2 4 G1 2 4 घण्टाकर्णस्तुति — *Adhy no* Dn 167, Ds2 269, T1 G3 193, T2 G1 195; T4 162; G4 M4 191; M2 3 185

(L. 805) Cal ed प्रहस्य (for प्रनृत्य) G3 यथाकथम् (for °बलम्) — (L. 806) Dn Ds2 T1 2 G1 2 4 M1 सत्वर (for °रम्) D3 om (hapl) lines 805b–811a. — (L. 807) M4 पिशाचं (for पिशितं) — (L. 808) M1 2 खड्ग (for खण्ड) T2 G2 3 4 खादिर (for अद्भिर्) G3 अभ्यर्च्य (for अभ्युक्ष्य) — (L. 811) Dn Ds2 T2 G2 4 4 M4 मे, T1 G3 [इ]म (for [इ]दं) Dn2 भोज्य; T1 भोज्यं (for योग्यं) — (L. 815) T4 च (for सु) Dn2 G1 ब्राह्मण्य (for ब्राह्मण) — After line 815, T1 G1 M4 ins:

7** सर्वेषामेव वर्णानां शव ब्राह्मणमुत्तमम् ।

— D6 om lines 816–820 — (L. 816) M1 2 नियमितम् (for नियं°) T1 G3 शास्त्रेनियमितमेव हि (for °) — (L. 819) Dn Ds2 G1 3 M1 अस्पृश्यं तु (for °इयस्य) — (L. 820) Dn Ds2 T1 2 4 G M1 हरिस्तम् (for हरिस्) — (L. 821) T2 G1 विद्यते (for वर्तते) — (L. 822) D6 G1 M1 2 यदुनन्दन (for °पुंगव) — (L. 824) T3 G1 ब्राह्मणैः; M1 2 मानुषैर् (for मादृशैर्) G1 ब्राह्म (for एतद्) D6 G1 M1 3 मानुषं, G4 5 ब्राह्मण्यं (for °णं) — (L. 825) D6 T3 M1 3 ब्राह्मणः सर्वथा पूज्यः; G (ed.) °ैन सदा पूज्यो (for °) G1 M3 सर्व (for धर्म) — (L. 827) D6 (also

को न्वत्र समयो भूयादिति ते मेनिरे गणाः ॥
ततः समाप्ते सकले जगत्क्षते
ध्रुवे समूले सकलेश्वरः शिवः ।
द्रष्टुं हरिं लोकहितैषिणं प्रभुं
ययौ भवान्या सह भूतसङ्घैः ॥
सार्धं कुबेरेण सगुह्यकेन
प्रियेण सख्या प्रभुरीश्वरः शिवः ।
स्वयं जटी भूतपिशाचसंवृतः
शरी च खड्गी शशिशेखरः शिवः ॥
करेण बिभ्रत्सह दर्भकुण्डिकां
करेण साक्षादपरेण दीपिकाम् ।
अन्येन बिभ्रन्महतीं सडिण्डिमां
शूलं च बिभ्रत्परेण बाहुना ॥
गुणान्सरुद्राक्षकृतान्समुद्वह-
ञ्जटाभिरापिङ्गलताम्रमूर्तिभिः ।
विराजमानः प्रभुरिन्दुशेखरो
वृषेण युक्तः सुसितेन शङ्करः ॥
उमास्तनद्वंद्वसमर्पिताननं-
न्तया समाश्लिष्य निपीडिताधरः ।
गङ्गाम्बुनिक्षालितचन्द्रशेखर-
स्तां चापि वीक्षन्बहुशस्तदा शिवः ॥
भस्माङ्गरागैरनुलेपिताननो
महोरगैर्बद्धजटः सनातनः ।
शिरःकपालैः परिशोभितस्तदा
द्रष्टुं हरिं केशवमभ्ययाच्छिवः ॥
यमाहुरग्र्यं पुरुषं महान्तं
पुरातनं सांख्यनिबद्धदृष्टयः ।
यस्यापि देवस्य गुणान्समग्रा-
न्तत्त्वाश्चतुर्विंशतिमाहुरेके ॥
यमाहुरेकं पुरुषं पुरातनं
कणादनामानमजं महेश्वरम् ।
दक्षस्य यज्ञं विनिहत्य यो वै
विनाश्य देवांश्च पुरा पुरातनः ॥
यं विदुर्भूततत्त्वज्ञं भूतं भूतेशभावनम् ।
वामदेवं विरूपाक्षमाहुस्तत्त्वविदो जनाः ॥
महादेवं सहस्राक्षं कालमूर्तिं चतुर्भुजम् ।
रुद्रं रोदननामानमाहुर्विश्वेश्वरं शिवम् ॥
अप्रमेयमनाधारमाहुर्माहेश्वरा जनाः ।
नग्नं नग्नपरीतं तु नागिनं नग्नवेषम् ।
आहुर्विश्वेश्वरं शान्तं शिवमादिं सनातनम् ॥
तस्य मूर्तिरिमाः सर्वा धरायाः सकला नृप ॥
भूमिरापोऽनलो वायुः खं सूर्यश्च तथा शशी ।
अग्निश्च यजमानश्च प्रकृतिश्चैवमष्टधा ॥
महादेवो महायोगी गिरीशो नीललोहितः ।

तपस्यति तदा विष्णौ पर्वते भूतसेविते ।
गरुडस्तस्य तनय इन्धनानि समाचिनोत् ।
होमार्थं वासुदेवस्य चरतस्तप उत्तमम् ॥
चक्रराजोऽथ पुष्पाणि सचिनोति तदा हरेः ।
दिक्षु सर्वासु सर्वत्र ररक्ष जलजस्तदा ॥
खड्ग आहृत्य यत्नेन कुशान्सुबहुशस्तदा ।
गदा कौमोदकी चैव परिचर्यां चकार ह ॥
धनुःप्रवरमत्युग्रं शार्ङ्गं दानवभीषणम् ।
स्थितं हि पुरतस्तस्य यथेष्टं भृत्यवत्स्वयम् ।
जुहोति भगवान्विष्णुरेधोभिर्बहुभिः सदा ॥
आज्यादिभिस्तदा हव्यैरग्निं संपूज्य माधवः ।
सप्तार्चिषः समाप्तिं च समस्तव्यस्ततः कृती ॥
एकस्मिन्नेकदा मासे भुञ्जानो नियतात्मवान् ।
द्वितीये त्वथ पर्याये भुञ्जन्नेकेन केनचित् ॥
एकस्मिन्वत्सरे भुञ्जंस्त्वेकैकेन केनचित् ।
समाप्य वत्सरं सर्वमेवमेव जगत्पतिः ॥
द्वादशाब्दे तथा पूर्णे ऊनमासे जगत्पतिः ।
जुह्वन्नग्निं समाध्यायन्पठन्नथ जनार्दनः ॥
आरण्यकं पठन्विष्णुः साक्षात्सर्वेश्वरो हरिः ।
आस्ते ध्यानपरस्तत्र पठन्प्रणवमुत्तमम् ॥

Colophon.

वैशंपायन उवाच ।

ततः इन्द्रः स्वयं तत्र आरुह्य गजमुत्तमम् ।
द्रष्टुं सर्वेश्वरं विष्णुं तपस्यन्तं समाययौ ॥
ततो यमस्तु भगवानास्थाय महिषं परम् ।
विरिञ्चश्च स्वयं साक्षादाययौ नगमुत्तमम् ॥
प्रचेता हंसमारुह्य वारुणैश्च समन्वितः ।
श्वेतच्छत्रसमायुक्तः श्वेतव्यजनवीजितः ।
ययौ कैलासशिखरं द्रष्टुं केशवमव्ययम् ॥
अन्येऽपि च तथा देवा आदित्या वसवस्तथा ।
रुद्राश्चैव तथा राजन्द्रष्टुं केशवमाययुः ॥
सिद्धाश्च मुनयश्चैव गन्धर्वा यक्षकिंनराः ।
सर्वाश्चाप्सरसो राजन्नृत्तगीतविशारदाः ॥
ततो देवगणाः सर्वे कैलासं समरुहन् ।
पर्वतो नारदश्चैव तथान्ये मुनिसत्तमाः ।
विस्मयोत्फुल्लनयनाः सर्वे देवगणास्तथा ॥
आश्चर्यं खलु पश्यामः न भूतं न भविष्यति ।
योगिध्येयः स्वयं कृष्णो यत्तप्यति तपः परम् ।

को न्वत्र समयो भूयादिति ते मेनिरे गणाः ॥
ततः समाप्ते मख्ते जगत्पते-
श्रैते समूले सस्लेश्वरः शिवः ।
द्रष्टुं हरिं लोकहितैषिणं प्रभुं
ययौ भवान्या सह भूतसंघैः ॥
सार्धं कुबेरेण सगुह्यकेन
प्रियेण सख्या प्रभुरीश्वरः शिवः ।
स्वयं जटी भूतपिशाचसङ्गतः
हरी च खड्गी शशिशेखरः शिवः ॥
करेण बिभ्रत्सह दर्भकुण्डिकां
करेण साक्षादपरेण दीपिकाम् ।
अन्येन बिभ्रन्महता सडिण्डिमा
शूलं च बिभ्रन्नपरेण बाहुना ॥
गुणान्सरुद्राक्षकृतान्समुद्वह-
न्नद्याभिरापिङ्गलताग्रमूर्तिभिः ।
विराजमानः प्रभुरिन्दुशेखरो
वृषेण युक्तः सुसितेन शंकरः ॥
उमास्तनद्वंद्वसमर्पिताननः
स्वया समाश्रित्य निपीडिताधरः ।
गङ्गाम्बुविभ्राजितचन्द्रशेखर-
स्ता चापि वीक्षन्बहुनन्दया शिवः ॥
भस्मानुरागैरनुलेपिताननो
महोरगैर्नद्धजटः सनातनः ।
शिरःकपालैः परिशोभितस्तदा
द्रष्टुं हरिं वैष्णवमभ्ययाच्छिवः ॥
यमाहुरग्र्यं पुरुषं महान्तं
पुरातनं सांख्यनिबद्धदृष्टयः ।
यस्यापि देवस्य गुणान्समग्रा-
स्तत्त्वाश्चतुर्विंशतिमाहुरेके ॥
यमाहुरेकं पुरुषं पुरातनं
कणादनामानमजं महेश्वरम् ।
दक्षस्य यज्ञं विनिहत्य यो वै
विनाश्य देवांश्च पुरा पुरातनः ॥
यं विदुर्मुनयस्त्र्यक्षं भूतं भूतेशभावनम् ।
वामदेवं विरूपाक्षमाहुस्तत्त्वविदो जनाः ॥
महादेवं सहस्राक्षं मान्मूर्तिं चतुर्भुजम् ।
रुद्रं रोदननामानमाहुर्विश्वेश्वरं शिवम् ॥
अप्रमेयमनाधारमाहुर्मादीश्वरा जनाः ।
नग्नं नग्नपरीतं तु नागिनं नागवेष्टितम् ।
आहुर्विश्वेश्वरं शान्तं निगमादिं सनातनम् ॥
तस्य मूर्तिरिमाः सर्वा धराद्याः सप्त नृप ॥
भूमिरापोऽनलो वायुः खं सूर्यश्च तथा शशी ।
अग्निश्च यजमानश्च प्रकृतिर्भवमष्टधा ॥
महादेवो महायोगी गिरिशो नीललोहितः ।

तपस्यति तदा विष्णौ पर्वते भूतसेविते ।
गरुडस्तार्क्ष्यतनय इन्धनानि समाचिनोत् ।
होमार्थं वासुदेवस्य चरतस्तप उत्तमम् ॥
चक्रराजोऽथ पुष्पाणि सञ्चिनोति तदा हरेः ।
दिक्षु सर्वासु सर्वत्र ररक्ष जलजस्तदा ॥
खड्ग आहृत्य यत्नेन कुशान्सुनहुशस्तदा ।
गदा कौमोदकी चैव परिचर्यां चकार ह ॥
धनुःप्रवरमत्युग्रं शार्ङ्गं दानवभीषणम् ।
स्थितं हि पुरतस्तस्य यथेष्टं भृत्यवत्स्वयम् ।
जुहोति भगवान्विष्णुर्होमैर्बहुभिः सदा ॥
आज्यादिभिस्तदा हव्यैरग्निं संपूज्य माधवः ।
सप्तार्चिषः समाप्तिं च समस्तव्यस्ततः कृती ॥
एकस्मिन्नेकदा मासे भुञ्जानो नियतात्मवान् ।
द्वितीये त्वथ पर्याये भुञ्जन्नेवेन केनचित् ॥
एकस्मिन्वत्सरे भुञ्जंस्तथैवेन केनचित् ।
समाप्य वत्सरं सर्वमेवमेव जगत्पतिः ॥
द्वादशाब्दे तथा पूर्णे ऊनमासे जगत्पतिः ।
जुह्वन्नग्निं समाध्यायन्पठन्मन्त्राञ्जनार्दनः ॥
आरण्यकं पठन्विष्णुः साक्षात्सर्वेश्वरो हरिः ।
आस्ते ध्यानपरस्तत्र पठन्प्रणवमुत्तमम् ॥

Colophon.

वैशंपायन उवाच ।

तत इन्द्रः स्वयं तत्र आरुह्य गजमुत्तमम् ।
द्रष्टुं सर्वेश्वरं विष्णुं तपस्यन्तं समाययौ ॥
ततो यमस्तु भगवानास्थ्य महिषं परम् ।
विरूढश्च स्वयं साक्षादाययौ नगमुत्तमम् ॥
प्रचेता हंसमारुह्य वारणैश्च समन्वितः ।
श्वेतच्छत्रसमायुक्तः श्वेतव्यजनवीजितः ।
ययौ कैलासशिखरं द्रष्टुं केशवमञ्जसा ॥
अन्येऽपि च तथा देवा आदित्या वसवस्तथा ।
रुद्राश्चैव तथा राजन्द्रष्टुं केशवमाययुः ॥
सिद्धाश्च मुनयश्चैव गन्धर्वा यक्षकिंनराः ।
सर्वाश्चाप्सरसो राजन्नृत्तगीतविशारदाः ॥
ततो देवगणाः सर्वे कैलासं समभ्ययुः ।
पर्वतो नारदश्चैव तथान्ये मुनिसत्तमाः ।
विस्मयाविष्टलोचनाः सर्वे देवगणास्तथा ॥
आश्चर्यं खलु पश्यध्वं न भूतं न भविष्यति ।
योगिभ्येयः स्वयं कृष्णो यत्स्यति गुरुः स्वयम् ।

T1 तत स गरुडस्तार्क्ष्यम्, G1 गरुडस्तार्क्ष्यतो याग (for °) —(L. 909) Dn1 D6 T3 G1 [illegible] M1 जलदस्य (for °अम्). — T1 om. line 910 —(L. 915) D6 T2 हुत्वैद (for हुत्वैद्) G2 अर्द्ध (for °ग्निं) —(L. 916) D6 समाप्तिस्य (for °प्तिं) G2 तन (for कृती) D6 समस्तव्यस्तदाकृती (for °) —(L. 918) T1 मरवाद्; Cal. ed. पर्याने (for पर्याये). Dn D5 T3 G1 [illegible] केशव (for केनचित्) M1 भुञ्जानो येन केनचित् (for °) —(L. 919) D1 M1 वत्सरे (for वत्सरे) G1 केशव (for केनचित्) —(L. 920) Dn D5 T1 [illegible] G1 [illegible] तमन; Cal. ed. तु तम (for सर्वं) D6 सम्यग् (for सर्वम्) — T1 [illegible] G1 [illegible] om. line 921 —(L. 921) D6 मासमासे (for ऊन°) —(L. 923) G1 सर्वे ध्यायन् M1 सदा ध्यायन्; Bom. Poona eds. (G1 ed.) समाध्याय (for °ध्यायन्) D6 T3 G1 [illegible] M1 मन्त्रं (मन्त्राम्). —(L. 923) M1 लोके (for साक्षात्), D6 M1-2 लोकेश्वरो (for सर्वे°) G1 सर्वलोकेश्वरो हरि (for °) —(L. 924) G1 [illegible] (for ध्यानपरस्)

Colophon. — Mention of the Fyn. D6 — Mention of Khila. Dn D5 D6 T1 [illegible] G M. — [illegible] D6 D1 G1 M1-4 [illegible] — [illegible] Dn 273, D6 278, T3 G1 197, T3 G1 197, T3 161, G1 190, G1 191, G1 M1 196, M1 [illegible] 161

(L. 925) D6 T1 [illegible] G1 [illegible] M इन्द्र (for इन्द्रः) —(L. 927) D6 तु भगवान् T1 तु भगवान्; G1 M1 [illegible] (for तु भगवान्) —(L. 928) D6 T1 G1 [illegible] M1-4 [illegible] (for स्वयं) —(L. 929) T3 G1 [illegible] (for [illegible]). (L. 933) [illegible] (for श्वेत) T1 [illegible]; G1 [illegible] (for [illegible]) — T1 G1 [illegible] (hap.) lines 932 933 [illegible] om. lines 933 934 —(L. 933) D6 [illegible] (for [illegible]) —(L. 934) Cal. ed. [illegible] (for °) (L. 9[illegible]) Dn1 D6 T1 [illegible] G1 [illegible] सर्वे (for [illegible]) — [illegible] om. lines 53[illegible]-93[illegible] —(L. 939) T1 G1 [illegible] (for [illegible]) Dn D6 T1 [illegible] M1 सर्वे (for सर्वे) After line 93[illegible] T1 G1 ins. :

9[illegible] [illegible]

— M. om. 13 -940 (L. [illegible]) T1 [illegible] (for [illegible])

को न्वत्र समयो भूयादिति ते मेनिरे गणाः ॥
ततः समाप्ते सकले जगत्पते-
र्व्रते समूले सकलेश्वरः शिवः ।
द्रष्टुं हरिं लोकहितैषिणं प्रभुं
ययौ भवान्या सह भूतसंघैः ॥
सार्धं कुबेरेण सगुह्यकेन
प्रियेण सख्या प्रभुरीश्वरः शिवः ।
स्वयं जटी भूतपिशाचसंवृतः
शरी च खड्गी शशिशेखरः शिवः ॥
करेण बिभ्रत्सह दर्भकुण्डिकां
करेण साक्षादपरेण दीपिकाम् ।
अन्येन बिभ्रन्महतीं सडिण्डिमां
शूलं च विभ्रत्नपरेण बाहुना ॥
गुणान्सरुद्राक्षकृतान्समुद्वह-
ञ्जटाभिरापिङ्गलताम्रमूर्तिभिः ।
विराजमानः प्रभुरिन्दुशेखरो
वृषेण युक्तः सुसितेन शंकरः ॥
उमास्तनद्वंद्वसमर्पिताननं
स्तया समाश्लिष्य निपीडिताधरः ।
गङ्गाम्बुनिक्षालितचन्द्रशेखर-
स्तां चापि वीक्षन्बहुमन्यदा शिवः ॥
भस्माङ्गरागैरनुलेपिताननो
महोरगैर्बद्धजट. सनातनः ।
शिर कपालैः परिशोभितस्तदा
द्रष्टुं हरिं केशवमभ्ययाच्छिवः ॥
यमाहुरग्र्यं पुरुषं महान्तं
पुरातनं सांख्यनिबद्धदृष्टयः ।
यस्यापि देवस्य गुणान्समग्रां-
स्त्रयांश्चतुर्विंशतिमाहुरेके ॥
यमाहुरेकं पुरुषं पुरातनं
कणादनामानमजं महेश्वरम् ।
दक्षस्य यज्ञं विनिहत्य यो वै
विनाश्य देवांश्च पुरा पुरातनः ॥
यं विदुर्भूततत्त्वज्ञं भूतं भूतेशभावनम् ।
वामदेवं विरूपाक्षमाहुस्तत्त्वविदो जनाः ॥
महादेवं सहस्राक्षं कालमूर्तिं चतुर्भुजम् ।
रुद्रं रोदननामानमाहुर्विश्वेश्वरं शिवम् ॥
अप्रमेयमनाधारमाहुर्माहेश्वरा जनाः ।
नग्नं नग्नपरीतं तु नागिनं नग्नवर्चसम् ।
आहुर्विश्वेश्वरं शान्तं शिवमादिं सनातनम् ॥
तस्य मूर्तिरिमाः सर्वा धराद्याः सकला नृप ॥
भूमिरापोऽनलो वायुः खं सूर्यश्च तथा शशी ।
अग्निश्च यजमानश्च प्रकृतिश्चैवमष्टधा ॥
महादेवो महायोगी गिरीशो नीललोहितः ।

T4 हरिः G2 गिरौ (for गुर ). — T1 G2 om. line 941. — (L. 941) D3 M विस्मये (for समयो.) — (L. 942) D5 M1-3 सकले जगत्पतेर्, T4 वृहति शंकरस्य (for सकले जगत्पतेर्). — (L. 943) T1 रत (for व्रते) D3 वृतः स शौरिः सकलेश्वरेश्वर. — G3 om (hapl) lines 944-949 — (L. 944) T1 G1.3 हितं; T4 सदा (हरिं) — (L. 945) T2 G1 सिद्धसंघैः (for भूत°). — (L. 947) Dn Ds3 T1 G1.3 सख्या प्रियेण (by transp) — G2 om (hapl) lines 948-949 — (L. 949) T3 चर्मी (for शरी). Dn1 Ds1 G1 शशिखण्डशेखरः (G1 °खण्डन) (for °शेखरः. शिव). — (L. 950) G1 दण्ड- (for दर्भ-). — (L. 951) D3 सपरे प्र (for अपरेण) — (L. 953) M1.3 बिभ्रद् (for विभ्रन्). G1 पाणिना (for बाहुना). — (L. 954) D3 गणान् (for गु°). — (L. 955) T1.3 G1.3-4 ताम्रमूर्ति, (for °र्तिभि ) — (L. 957) T1 सुगौरेन (for सुसि°). — (L. 961) M1.4 तथा निरीक्षन् (for तां चापि वीक्षन्) D3 G2 सदा (for तदा). — (L. 964) D3 बहु- (for परि ). — (L. 965) D3 ययौ; M1.3 द्रष्टुं (for हरिं). — G3 om lines 966-969 — (L. 967) M3 पुरातनं (for °तनं ) — (L. 968) G3 तस्य (for यस्य). — (L. 970) M3 एके (for एकं) — (L. 973) Dn Ds1 T2 G2.4 समुद्रान्सनातनः; D3 T1.2 G1.3 M1.3 समुद्रात्पुरातनम् (T3 G1.3 °म) (for च पुरा सनातन) — (L. 979) Dn Ds1 T1.2.4 स्तुवन्ति (for नग्न). — (L. 980) T2 शंभुं (for शान्तं). — (L. 981) D3 तस्य (for तस्य). — (L. 982) G1 क्षितिर् (for भूमिर्) Dn1 ऽग्निस्तो (for ऽनलो). — (L. 983) M3 तथैव (for अग्निश्च). — (L. 985) Dn1 T1.4 G2.4 M2 महात्मनो;

आदिकर्ता महीभर्ता शूलपाणिरुमापतिः ।
द्रष्टुं विश्वेश्वरं विष्णुं भूतसंघैः समाययौ ॥

Colophon

वैशंपायन उवाच ।

तस्मिन्समपतन्त भूतसंघाः सहस्रशः ।
घण्टाकर्णो विरूपाक्षः कुण्डभानुः कुमुद्वहः ॥
दीर्घलोमा दीर्घशिरो दीर्घबाहुर्निरञ्जनः ।
उरुवक्त्रः शतमुखः शतग्रीवः शतोदरः ॥
कुण्डोदरो महाग्रीवः स्थूलजिह्वो त्रिबाहुकः ।
पार्श्ववक्त्रः सिंहमुख उन्नतासो महाहनुः ।
निबाहुः पञ्चबाहुश्च व्याघ्रवक्त्रः सितानन ॥
एते चान्ये च बहवो दीर्घास्या दीर्घलोचनाः ।
नृत्यन्तः प्रहसन्तश्च स्फोटयन्तः परस्परम् ॥
तथान्ये घोररूपाश्च तथान्ये विकृतानना ।
प्रेतभक्षाः प्रेतवहा मांसशोणितभोजनाः ॥
शवानि सुबहून्याशु भक्षयन्तस्ततस्ततः ।
पिबन्तो रुधिरं घोरं खण्डयन्तः शवं बहु ॥
कराला वितता दीर्घा धमनिस्नायुसंतताः ।
नग्नाश्चैव सचीराश्च शूलाग्रप्रोतमानुषा ॥
शिरोमाल्यवृताः केचिदान्त्रपाशावपाशिताः,
डिण्डिमैरट्टहासैश्च नादयन्तो वसुंधराम् ।
कपालिनो भैरवाश्च जटिला मुण्डिनस्तथा ।
एवं बहुविधा घोराः पिशाचा विकृताननाः ॥
तथान्ये मुनिवीराश्च ध्यायन्तः परमेश्वरम् ।
पठन्तो वेदशास्त्राणि साङ्गानि विविधानि च ॥
कुण्डिकाक्षधराः केचित्केचित्कपिशचीरिणः ।
केचित्कौपीनवसनाः केचित्कर्पटसंवृताः ॥
स्तुवन्तः शंकरं भक्त्या स्तोत्रैर्माहेश्वरैस्तथा ।
एकत्र ते मुनिगणा अपरत्र गणास्तथा ॥
अन्यत्र सिद्धगन्धर्वाः प्रियाभिः सह संगताः ।
नृत्यन्ति नृत्यकुशला गायन्ति स्म च कन्यकाः ॥
विद्याधरास्तथान्यत्र स्तुवन्त शंकरं शिवम् ।
ननृतुस्तस्य पुरतो गच्छन्तोऽप्सरसां गणाः ॥
एवमेतैर्महाघोरैः पिशाचैर्भूतकिंनरैः ।
मुनिभिश्चाप्सरोभिश्च सह शर्वः समाययौ ॥
यत्र विश्वेश्वरो विष्णुस्तपस्तेपे सुदारुणम् ।
यत्र ते लोकपालाश्च तिष्ठन्ति स्म दिदृक्षया ।
उमया लोकभाविन्या गङ्गया चन्द्रशेखरः ॥

M1 2 महीकर्ता (for भर्ता) — (L. 986) M2 सहाययौ (for समा°)

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds1 D6 T1 2 4 G M — *Sub-parvan* Dn Ds2 M3 4 कैलासयात्रा — *Adhy name* Dn 270, Ds1 259 T1 G2 196, T2 G1 198, T4 165, G3 189, G4 165, G5 195, G6 M1 197 M2 3 161

G3 om lines 987 1024 T4 om the ref — (L 988) Dn D6 G1 2 4 5 कुण्डधार T1 कुमरश्च (for कुण्डभानु) T4 कुरूढह (for कुमु°) T2 कुन्दर सङ्कुमुद्वह (for °) — (L 989) Dn Ds2 T4 G2 4 दीर्घभुजो, T1 2 °शिरा, G1 °शिरो (for °शिरो) — G4 om lines 990 993 — (L 990) Dn1 G2 उरुनेत्र, D6 उग्रवक्त्र (for उरु°) M4 शितोदर (for शतो°) — (L. 992) G1 सिंह मुखी (for °मुख) — (L 994) G2 द्विबाहु (for त्रि°) D6 शतानन, T1 2 G1 4 समानन (for सितानन°) — (L. 996) M1 2 पिशाचा (for the second तथान्य) D6 तथान्ये सुकृतानना (for °) — (L. 997) G2 प्रेतसधा; M4 °रक्षा (for °भक्षा) Dn1 T1 2 G1 3 4 5 प्रेतवाहा (for °वहा) — (L 998) T2 G1 शवान्सुबहुदाश्लत्र (for °) — G4 om line 999 — (L 999) Dn Ds2 T1 2 G1 5 शवान्बहून् (for शवं बहु) — (L. 1000) D6 T4 M2 4 विकृता (for वितता) T2 घोरा (for दीर्घा) — (L. 1001) Dn Ds1 T2 G 3 4 नानाविधा, D6 भग्नाश्चैव (for नग्ना°) Dn Ds1 D6 T2 4 G1 5 M4 सुचीराश्च (for सची°) T1 नग्नाश्च सुचिराश्चैव (for °) — (L. 1002) T3 M2 शिला (for शिरो°) D6 मान्त्रपाशैश्च पाशिता, M3 4 °पाशविपाशिता (for °) — (L. 1004) M1 कपालिनो (for कपालिनो) G4 जटिनो (for जटिला) — (L 1005) T1 2 G1 5 M3 4 एवं बहुविधाकारा (for °) — (L 1007) Dn Ds1 G2 4 -वाक्यानि (for -शास्त्राणि) — (L 1008) T1 कुण्डिकान्तकरा केचित्, G1 °स्थिकरा केचित् (for °) Dn Ds1 D6 T1 2 G1 3 5 केचिद्रकुशचिर्चीरिण (for °) — (L 1009) T4 G2 4 कार्पास- (for कर्पट) — (L. 1011) D6 T1 2 G1 4 5 M मुनिवरा (for °गणा) — (L 1012) Ds2 D6 T1 4 M2 सिद्धा (for सिद्ध) — (L. 1013) Cal ed नृत्येऽपि कुशला सर्वे

दो नव समयो स सर्वलोकप्रभवो हरिः शिवो
जटी च साक्षात्प्रणवात्मकः कृती ।
द्रष्टुं हरिं विष्णुमुदारविक्रमो
ययौ यथेष्टं पिशिताशनैर्वृतः ॥

Colophon.

वैशंपायन उवाच ।

एवं बहुविधैर्भूतैः पिशाचैरुरगैः सह ।
आगत्य भगवान्रुद्रः शंकरो वृषवाहनः ॥
ददर्श विष्णुं देवेशं तपन्तं तप उत्तमम् ।
जुह्वानमग्निं विधिवद्धव्यैर्मध्यैर्जगत्पतिम् ॥
गरुडाहृतकाष्ठं तु जटिलं चीरवाससम् ।
चक्रेणानीतकुसुमं खड्गानीतकुशं तथा ॥
गदाकृतसमाचारं देवदेवं जनार्दनम् ॥
इन्द्राद्यैर्देवसंघैश्च वृतं मुनिगणैः सह ।
अचिन्त्यं सर्वभूतानां ध्यायन्तं किमपि प्रभुम् ॥
अवरुह्य वृषाच्छर्वो भगवान्भूतभावनः ।
ततः प्रीतः प्रसन्नात्मा ललाटाक्ष उमापतिः ।
ततो भूतपिशाचाश्च राक्षसा गुह्यकास्तथा ।
मुनयो विप्रवर्याश्च जयशब्दं प्रचक्रिरे ॥
जय देव जगन्नाथ जय रुद्र जनार्दन ।
जय विष्णो हृषीकेश नारायण परायण ॥
जय रुद्र पुराणात्मन्नव्यय देव हरेश्वर ।
आदिदेव जगन्नाथ जय शंकर भावन ॥
जय कौस्तुभदीप्ताङ्ग जय भस्मविराजित ।
जय चक्रगदापाणे जय शूलिन्त्रिलोचन ॥
जय मौक्तिकदीप्ताङ्ग जय नागविभूषण ।
इति ते मुनयः सर्वे प्रणाम चक्रिरे हरिम् ॥
तत उत्थाय भगवान्दृष्ट्वा देवमवस्थितम् ।
वृषध्वजं विरूपाक्षं शंकरं नीललोहितम् ।
ततो हृष्टमना विष्णुरुवाच हरमीश्वरम् ॥

भगवानुवाच ।

नमस्ते शितिकण्ठाय नीलग्रीवाय वेधसे ।
नमस्ते अस्तु शोचिषे नमस्ते उपनामिने ॥
नमस्ते अस्तु मीढुषे नमस्ते गदिने हर ।
नमस्ते विश्वमूर्तये वृषाय वृषरूपिणे ॥
अमूर्ताय च देवाय नमस्तेऽस्तु पिनाकिने ।

---

(for °) — (L 1017) T4 मुनिभिश्चैव प्रमथैः (for °) — (L 1021) D5 T2 3 G2 2M2 3 4 हर शिवो, T2 भवो विभुः (for हरिः शिवो) — (L 1022) T1 प्रणवात्मकं, M1 4 °वाकृति ((for °वात्मकः) — (L 1023) D6 G1 बिभ्रद् (for विष्णुम्) D6 उदारविभ्रम, T1 2 M °विक्रम (for °विक्रमो)

Colophon — *Mention of the Epic* D32 — *Mention of Khila* Dn Ds2 D6 T1 3 4 G1 3 4 5 M — *Sub-parvan* Dn Ds2 D6 M कैलासयात्रा — *Adhy no* Dn 271; Ds2 270 T1 197, T2 199, T4 G1 166, G2 193, G4 196, G5 M4 198, M1 3 163

(L 1025) D6 असुरैः (for उरगैः) — (L 1028) D6 G2 जुह्वन्तम् (for जुह्वानम्) Dn T1 3 G1-4 M1 3 4 द्रव्यैर् (for मेध्यैर्) — T4 om lines 1029-1032 — (L 1029) G1 पीत (for चीर) — (L 1030) D6 G2 चक्रानीतकुशासनम् (G2 °दिकम्) (for °) — (L 1032) T2 गन्धर्वैर् (for सर्वैश्च) G3 यथा (for सह) — M4 om line 1033 M1 3 om line 1034 — (L 1037) M2-3 4 सपार्षद् (for °पर्षदः) — (L 1040) M1 रुद्र (for देव) T2 G1 3 4 M1 हरे हर, G2 M1 3 हरे हरे (for हरेश्वर) — (L 1043) D6 T3 G2 M1 3 कपर्दिने (for त्रिलोचन) — (L 1045) T2 [इ]मे (for ते) — (L 1046) M2 3 देवेशो (for भगवान्) D6 उमापतिम्, G2 उपस्थितम् (for अवस्थि°) — (L 1048) D6 ईश्वर (for °रम्) — D6 कृष्ण (for भगवान्) — (L 1049) D6 नीलकण्ठाय (for शिति°) G3 नीलकण्ठाय (for °ग्रीवाय) — (L 1050) G3 नमस्ते गदिने तुभ्य, G4 नमोऽस्तु शोचिषे तुभ्य, Bom Poona eds G (ed) °स्ते शोचिषे अस्तु (for °) D6 T4 अस्तु मीढुषे, G3 विश्वमूर्तये (for उपनामिने) — G3 om line 1051 — (L 1051) T1 नमस्ते हरये तुभ्यं; Bom Poona eds G (ed) °स्ते मीढुषे अस्तु (for °) T2 G2-3 हरे (for हर) D6 T4 नमस्ते विश्वमूर्तये (for °), — (L 1052) Dn Ds2 G2 त्रिपुरघ्ने, T1 °वर्षे ते, T2 °मूर्ताय (for °मूर्तये) T4 नमस्ते जटिने तुभ्य (for °) D6 वृषाय वृषविहाय वृषरूपाय ते नमः; G4 नमस्ते गदिने तुभ्यं नमस्ते विश्वमूर्तये — After line 1052, G2 ins

10** उपनिर्धाय च नमो वृषाय वृषरूपिणे ।

— (L 1053) M1 3 अरूपाय (for अमूर्ताय) T2 मूर्ताय (for देवाय) — After line 1053, T2 ins

पिशाचौ द्वौ महाघोरौ वदन्तौ मामिकां कथाम् ॥
मृगयां चरन्तुस्तौ तु चिन्तयन्तौ तु मा सदा ।
दृष्ट्वा मां तौ तु राजेन्द्र प्रीतिमन्तौ तपस्विनौ ।
भक्तिनम्रौ महात्मानौ प्रणामं चक्रतुस्तदा ॥
ततोऽहं सर्वथा प्रीतस्तौ दृष्ट्वा स्वर्गमुत्तमम् ।
तोषयित्वा महादेवमह्ना चाहं ततो गतः ॥
ततस्ते वृष्णयः सर्वे देवदेवं प्रशंसिरे ।
सर्वथा कृतकृत्यास्ते वृष्णयः केशवाश्रयाः ।
यादवाः सर्व एवात्र स्वं स्वं जग्मुर्यथालयम् ॥
अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः ।
रुक्मिणीसत्यभामाभ्यामाचचक्षे यथाभवत् ॥
ते प्रीते प्रीतियुक्तेन केशवेन समन्विते ।
एतत्ते सर्वमाख्यातं केशवस्य च चेष्टितम् ॥
शशास पृथिवीं कृत्स्नां दुष्टान्हत्वा महाबलः ।
नरकं घोरकर्माणं पौण्ड्रं च नृपसत्तमम् ॥
हयग्रीवं निशुम्भं च तथा सुन्दोपसुन्दकौ ।
ररक्ष विप्रान्देवेशो मुनीन्मुनिवरार्चितः ॥
विप्रेभ्यश्च ददौ वित्तं गाश्च रत्नानि केशवः ।
अग्निहोत्रं प्रयुञ्जानो ब्राह्मणांश्च सुतर्पयन् ॥
मुनींश्च ब्रह्मचर्येण देवान्यज्ञेन केशवः ।
स्वधया च पितॄन्सर्वान्प्रीणयत्येव सर्वदा ॥
तस्मिञ्शासति देवेशे राज्यं निष्कण्टकं वशी ।
मुदमेव प्रजाः सर्वा जीवन्ति ब्राह्मणोत्तराः ॥

Colophon

जनमेजय उवाच ।
भूय एव द्विजश्रेष्ठ शङ्खचक्रगदाभृतः ।
चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ।
न हि मे तृप्तिरस्तीह शृण्वतः केशवीं कथाम् ॥
को नु नाम हरेर्विष्णोर्देवदेवस्य चक्रिणः ।
शृण्वन्कथां स्मरन्वापि तृप्तिं याति दिवानिशम् ॥
पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः ॥
कथमासीज्जगद्धेतोर्हंसस्य डिभकस्य च ।
समितिः सर्वभूतानां सदा विस्मयदायिनी ॥
विचक्रस्य कथं युद्धं दानवस्य महात्मनः ।
स तयोर्मित्रतां यात इत्येवमनुशुश्रुम ॥
तौ नृपौ वीर्यसंपन्नौ शिष्यौ भृगुसुतस्य ह ।
सर्वास्त्रकुशलौ वीरौ द्वावप्यस्त्रधरौ किल ॥
संग्रामः सुमहानासीदित्युक्तं भवता पुरा ।

T1 G3 ‑ M1 ‑ इष्ट (for दृष्ट) Dn Ds2 G3 इष्ट कैलासशिखर (for °) —(L. 2071) T2 यथा (for ददौ) —(L 2073) Dn Ds2 शङ्करस्य (for °रं) G5 प्रीत° स्तुत्वा समाययौ (for °) —(L. 2075) पठन्तौ (for वदन्तौ) D6 G3 वदन्तौ मामिका कथा (for °) —(L. 2076) D6 प्रीणयन्तौ (for चिन्त°) —(L 2077) T2 G1 ‑ राजेन्द्र —(L 2078) D6 भक्तिमन्तौ (for °नम्रौ) —(L 2079) Dn Ds2 नीतौ (for दृष्ट्वा) —(L. 2080) D6 T1 ‑ G3 ‑ M प्रेषयित्वा (for तोष°) T1 G1 ‑ महामानात् T2 °रमानम् (for महादेवम्) T1 आत्मा, T2 वशी (for अह्ना) Dn Ds2 मया चाद्य समागतम् (for °) — Before line 2081, some Mss ins वैशंपायन उवाच —(L 2081) Dn Ds2 M शशंसिरे (for प्रशं°) — G3 om lines 2082-2084 —(L 2082) D6 T4 G2 M1-3 केशवाश्रयात् (for °श्रया) —(L. 2083) G4 ‑ यथागतम् (for °लयम्) —(L 2086) M तनये (for ते प्रीते) — After line 2086 G(ed.) ins an irrelevant narrative, not connected with the topic —(L. 2087) Ds2 D6 T1 ‑ G1 ‑ M हि (for च) —(L. 2088) D6 T1 ‑ G2 ‑ सर्वां (for कृत्स्नां) Dn Ds2 G2 M महाबलान् (for °बल) —(L 2089) Dn Ds2 पौण्ड्रकं (for पौण्ड्रं च) —(L 2092) D6 T3 G2 तदा, G1 यथा (for ददौ) G4 ‑ रत्न (for वित्तं) Dn Ds2 G2 दत्त्वा स, G5 वित्त च; M1-3 रत्नानि (for °नि) —(L 2094) Dn Ds2 देवान्यज्ञैरनेकधा (for °) —(L 2095) D6 T1 G5 M प्रजया (for स्वधया) Dn Ds2 D6 T4 G2 M प्रीणयन् (for °यति) D6 केशव (for सर्वदा) —(L 2096) Dn Ds2 D6 T4 G2 M प्रभो (for वशी) —(L. 2097) Dn Ds2 M1 ‑ ब्राह्मणादय, D6 °णोत्तमा (for °णोत्तरा)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 ‑ G M — *Adhy name* Dn Ds2 M पौण्ड्रकवध, T1 ‑ G1 ‑ एकलव्यपराजय — *Adhy no* Dn Ds2 286, T1 G2 213, T2 G3 215, T3 188; G4 112, G5 214, M1-3 178, M4 284

(L 2102) T4 G3 M4 तथा (for कथां) Bom Poona eds G(ed) शृण्वंस्तथा स्मरन्वापि (for °) —(L 2104) D6 T2 G1 ‑ जगद्धातुर, G2 °स्यातु (for °द्धेतोर) —(L.

तयोश्च नृपयोर्विप्र केशवस्य जगत्पतेः ॥
कस्य पुत्रौ समुत्पन्नौ किंवीर्यौ किंपराक्रमौ ।
सर्वमेतद्द्विजश्रेष्ठ वक्तुमर्हसि सुव्रत ॥

वैशंपायन उवाच ।

शृणु राजन्महाबाहो कथां पापप्रणाशिनीम् ।
यथा संग्राम आसीत्तु तयोश्चक्रधरस्य च ॥
यथा च तौ समुत्पन्नौ यथाभूद्विग्रहो महान् ।
अष्टाशीतिसहस्राणि दानवानां महात्मनाम् ॥
बलान्यथ विचक्रस्य शितशूलधराणि च ।
आसन्युद्धे महाराज दानवस्य महात्मनः ॥
यदूनामन्तरं प्रेप्सुर्विचक्रो युद्धकाङ्क्षया ।
देवासुरे महायुद्धे देवाञ्जयदनन्तरे ।
तद्वधार्थं सदा यत्नमकरोच्चैव केशवः ॥

Colophon.

वैशंपायन उवाच ।

आसीत्सात्त्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः ।
नाम्ना राजन्स भूतात्मा सर्वभूतदयापरः ॥
पञ्चयज्ञपरो नित्यं जितामित्रो जितेन्द्रियः ।
ब्रह्मविद्वेदविच्चैव सदा यज्ञपरः शिवः ॥
तस्य भार्ये महीपाल रूपौदार्यगुणान्विते ।
बभूवतुः सुसपत्न्ये अनपत्ये नृपोत्तम ।
स ताभ्यां मुमुदे राजा शच्या शक्र इवाम्बरे ॥
नाम्ना मित्रसहो नाम सखा चासीद्द्विजोत्तमः ।
तस्य राज्ञो महायोगी वेदवेदाङ्गपारगः ।
अनपत्यः स विप्रेन्द्रो यथा राजा बभूव ह ॥
स राजा सहितस्ताभ्यामर्चयामास शंकरम् ।
*पुत्रार्थं शूलिनं शर्वं दश वर्षाण्यनन्यधीः ।*
स विप्रो वैष्णवं सत्रं पुत्रार्थं समयोजयत् ॥
अर्चितस्तेन राजेन्द्र शंकरो नीललोहितः ।
आत्मानं दर्शयामास स्वप्ने राजानमब्रवीत् ।
प्रीतोऽस्मि तव भद्रं ते वरं वरय सुव्रत ॥
अथ राजा जगन्नाथमुवाचेदं स्वपन्नपि ।
पुत्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः ।
अन्तर्धानं गतः शंभुः स च प्रीतोऽभवन्नृपः ॥
सोऽपि मित्रसहो विद्वान्देवं केशवमव्ययम् ।
पञ्चरूपं जगन्नाथमर्चयामास भक्तितः ॥
अर्चितस्तेन विप्रेण देवदेवो जनार्दनः ।

---

2105) M3 तदा (*for* सदा) —(L 2107) G2 तत्त्वरो विरक्ता यान्ति (for °) —(L 2108) Dn Ds2 सुतौ (for नृपौ) —(L 2109) Dn Ds2 T1 2 3 G M5 द्विरेद् (*for* हराल्) —(L 2110) M3 स (for सु) —(L 2111) T1 2 G1 3–5 वीर (for विप्र) — Dn Ds2 om (hapl) 2112b–2116a —(L 2113) T4 एव (for एतद्) —(*L* 2117) Dn Ds2 T1 G2 3 M1 3 4 तरस्विनाम् (for महात्म°) —(L 2118) G4 5 शत (for शित) G2 धरस्य (for धराणि) —(L 2119) M1 3 दुरात्मन, Cal ed जयैषिण (for महात्मन) —(L 2120) Dn D6 M2 3 अन्तरं, M1 अन्तरे (for अन्तर) Dn Ds2 T1 M1 यदूना (for विचक्रो) —(L 2121) Dn Ds2 M1 देवाञ्जयति दुर्धर (for b) —(L 2122) T2 G3 4 तदा (for सदा) — D5 [ए]व (for [प]व)

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Adhy name* Dn Ds2 T1 2 4 G M इन्द्रडिम्भकोपाख्यानम् — *Adhy no* Dn Ds2 287, T1 G3 214, T2 G1 216, T4 183, G2 209, G5 215, M1 3 179, M4 215

(L 2123) Dn1 वलदत्तो (for ब्रह्म°) —(L 2124) Dn Ds2 पूतात्मा (for भू°) —(L 2125) D5 M1 3 जितामात्यो (for °मित्रो) Dn Ds2 T1 2 4 G जितात्मा विजितेन्द्रिय (for b) —(L 2126) Bom Poona eds G(ed) यज्ञमय (for °पर) D6 T4 शिवं (for शिव) —(L 2127) M1 3 महाराज (for महीपाल) —(L 2128) G2 समुत्पन्ने, Cal ed सुमध्यते (for °पत्ने) — G1 om lines 2129–2132 T1 om (hapl) lines 2129–2130 —(L 2130) D6 G3 मित्रसखो (for °सहो) Cal ed महामते (for द्विजोत्तम) —(L 2131) Dn1 T4 तत्पर (for -पारग) Dn1 D6 T1 G2 4 5 वेदवेदान्ततत्पर (for b) —(*L* 2134) G2 शत (for दश) M1 3 [अ]नन्यभाक् (for °धीः) —(L 2135) M1 3 समकल्पयत् (for °योजयत्) —(L 2137) M1 3 दर्शयित्वा तु (for °यामास) —(*L* 2139) *Dn Ds2* स्वपन्निव, *T1 2 G1 3–5* स्वयन्निव (for स्वपन्नपि) —(L 2140) D6 T4 M1–3 भवेयाताम् (for °तां हि) —(L 2141) Dn Ds2 M1 3 प्रतिबुद्धस्ततो नृप (for a) —(L 2142)

पुत्रमेकं ददौ तस्मै स्वात्मना सदृशं हरिः ॥
ते भार्ये गर्भमाधत्तां तेजसा शंकरस्य ह ।
विप्रभार्या महाराज वैष्णवं तेज आदधात् ॥
महिष्यौ ते महावीर्यौ पुत्रौ शंकरसमितौ ।
असूयेतां महीपाल क्रमेणैव नृपस्य ह ॥
स तयोश्च महाराज जातकर्मादिकाः क्रियाः ।
चकार विधिवत्सर्वा विप्रसाद्य महद्धनम् ॥
स च विप्रो विनीतात्मा पुत्रमेकं प्रजज्ञिवान् ।
साक्षादिव जगन्नाथं स्थितं पुत्रात्मना नृप ॥
जातकर्मादिकं सर्वं करणं स चकार ह ।
तौ कुमारावयं चैव त्रयः समवयसोऽभवन् ॥
वेदानधीत्य ते सर्वाञ्श्रुत्वा चान्वीक्षिकीं तथा ।
धनुर्वेदे तथास्त्रे च निपुणास्तेऽभवंस्तदा ॥
हंसो ज्येष्ठो नृपसुतो डिभकोऽनन्तरोऽभवत् ।
स च विप्रसुतो राजञ्जनार्दन इति स्मृतः ॥
अन्योन्यं मित्रतां याताः सर्वे चैव कुमारकाः ॥

Colophon.

वैशंपायन उवाच ।

हंसश्च डिभकश्चैव तपश्चर्तुं महामती ।
मनश्चक्रतुरात्मांशौ शंकरस्य नृपोत्तम ॥
गत्वा तु हिमवत्पार्श्वं तपश्चक्रतुरञ्जसा ।
उद्दिश्य शंकरं शर्वं नीलग्रीवमुमापतिम् ॥
वीर्याब्धि चैव तौ स्नातामिलाधाय तु मानसे ।
एकाग्रौ प्रयतौ भूत्वा वाय्वम्बुशशिनौ नृप ॥
नमस्ते देवदेवेश शंकरेति दिवानिशम् ।
हर शर्व शिवानन्द नीलग्रीव उमापते ॥
वृषध्वज विरूपाक्ष त्र्यक्ष जगतां पते ।
भक्तप्रिय गिरीशेश वामदेव शिवाच्युत ॥
सद्योजात महादेव देवदेव गुहाशय ।
भूतभावन भूतेश प्रणतात्मन्सदाशिव ॥
इत्यादिनामभिर्नित्यं स्तुवन्तौ शंकरं भवम् ।
हृदि कृत्वा विरूपाक्षं तपस्तेपतुरञ्जसा ॥
निर्ममौ निरहंकारौ मौनव्रतसमाश्रितौ ।
वर्षाणीह तदा राजन्पञ्च चक्रतुरोजसा ॥

D5 एवं (for देव) — (L. 2145) G2 शिव॰ (for हरि) — (L. 2147) Dn Ds1 T1.2.4 M4 आदधत् (for ॰धात्) — (L. 2148) Dn T1.2.4 G1.3.5 M3.4 महावीर्ये (for ॰वीर्यौ) M1-3 ते राजभार्ये गर्भिण्यौ (for ॰) Dn Ds1 T1.2.4 G1.2.3 M4 निर्मितौ (for समितौ) — (L. 2149) T3 G1 असुवातां (for असूयेतां) G2 कर्मणा (for क्रमेण) — (L. 2150) D5 स तयो परयो राजा; T4 स तयोः पुत्रयो राजन् (for ॰) Dn D5 T1.2 G M3 नाम (for तात) — (L. 2151) D5 T2.4 G3 सर्वं (for सर्वा) Dn Ds1 M1.2 विप्रेभ्योऽददात्; G2 विप्रेभ्यश्च (for विप्रसाद्य) — (L. 2152) G3 पुत्रो (for विप्रो) Dn Ds1 M1.3 हि लब्धवान्; M2.4 मलब्धवान् (for प्रजज्ञिवान्) — (L. 2153) M विप्रात्मना (for पुत्रा॰) — (L. 2154) Dn Ds1 T1.2.4 G1.3-5 M4 ब्राह्मण (for करणं) D5 G2 अकरोद्द्विजसत्तम (for ॰) — (L. 2155) G1 तौ कुमारद्वय सोऽपि (for ॰) M1.2 क्रमेण (for त्रय स) Cal. ed. त्रय सुतपुत्रोऽभवन् (for ॰) — (L. 2157) T4 तथास्त्रेषु M1.2 तथा शास्त्रे (for तथास्त्रे च) — (L. 2158) G1 द्वीरिको (for डिभको) — (L. 2159) M सुत (for स्मृत) — (L. 2160) D6 T4 M3 अन्योन्य (for ॰यं)

Colophon — Mention of the Epic D51 — Mention of Khila Dn Ds1 D5 T1.2.4 G1-5 M — Adhy name Dn Ds1 T1.2.4 G1-5 M हंसडिभकोपाख्यानम् — Adhy no Dn 207; Ds1 208, T1 G3 215, T2 G2 217; T4 184; G1 214, G5 216, M1-3 180, M4 216

— (L. 2161) D5 मही मतौ (for महामती) G (ed.) हंसश्चैव तपश्चर्तुं तथा डिभको महामतिः — (L. 2162) Dn1 D5 आत्मांशौ, T2 आत्मेशौ (for आत्मांशौ) — (L. 2163) G2 M1.2 गत्वा हिमवतः पार्श्वं (for ॰) Dn2 चक्रतुः (for चक्र॰) — (L. 2165) T1 दिव्यास्थे (for वीर्याब्धि) G1 om. lines 2166b–2171a — (L. 2168) D5 G2 शिवेशान; T4 शिवेशान, M1.2 शिव शान्त (for शिवानन्द) — (L. 2170) Dn2 भक्तिप्रिय (for भक्त॰) D5 T2 G3 वासुदेव (for वाम॰) — (L. 2171) G1 गुहाच्युत (for ॰शय) — (L. 2172) Bom. Poona eds. G (ed.) देवेश (for भूतेश) — G2 om. lines 2173–74 — (L. 2173) M1.2 हरम् (for भवम्). — (L. 2175) M1.2 समन्वितौ, M3.4 ॰परायणौ (for ॰समाश्रितौ) — G2 M1.2 om. line 2176 — (L. 2176) D5 महाराज (for तदा राजन्) G2 तत्रश्च पञ्च वर्षाणि (for ॰) D5 पञ्च चक्रतुरभ्यसा (for ॰) — G1 om. lines 2177–2181 — (L. 2178) G1 वाम्यां (for नैऋ॰) D5 तत्र (for स्नाता)

ततः प्रीतोऽभवच्छर्वस्ताभ्यां संयमनेन च ।
स ददौ दर्शनं नैजं व्याघ्रचर्माम्बरो हरः ।
त्रियक्षः शंकरः शर्वः शूलपाणिरुमापतिः ॥
अग्रतः संस्थितं शर्वं चन्द्रार्धकृतशेखरम् ।
तौ दृष्ट्वा प्रीतमनसौ नमश्चक्रतुरञ्जसा ॥
भगवानुवाच ।
वरं वरयतं भद्रौ यथेच्छा वां तथास्तु वै ॥
तावूचतुस्तदा राजन्प्रीतस्त्वं भगवन्यदि ।
देवासुरमनुष्यैर्वा रक्षोगन्धर्वदानवैः ।
आवामजेयौ सर्वास्मिन्नेष नौ प्रथमो वरः ॥
द्वितीयो नौ विरूपाक्ष रौद्राणां च समदः ।
माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत् ॥
अभेद्यं कवचं दिव्यमच्छेद्यं चापि कार्मुकम् ।
परशुं च तथा शर्व सदा रक्षार्थमेव च ॥
सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छतोः ।
एवमस्त्विति देवेश आह भृङ्गिरिटी हरः ॥
कुण्डोदरं विरूपाक्षं सर्वप्राणिहिते रतम् ।
युवामथ च भूतेशौ सहायौ सततं रणे ॥
संग्रामं गच्छता घोरमेतयोर्बलशालिनोः ।
इत्युक्त्वा भगवाञ्शर्वस्तत्रैवान्तरधीयत ॥

ततस्तौ वीर्यसंपन्नौ हंसो डिभक एव च ।
कृतास्त्रौ शस्त्रसंपन्नौ चापिनौ वीर्यवत्तरौ ॥
आमुक्तकवचौ वीरावजेयौ देवदानवैः ।
अत्यन्तभक्तौ देवेशे शंकरे नीललोहिते ॥
नित्योत्सवकरौ देवे भस्मोद्धूलनशोभिनौ ।
कृतत्रिपुण्ड्रकौ नित्यं जटायुक्तशिरोधरौ ।
रुद्राक्षार्पितसर्वाङ्गौ व्याघ्रचर्माम्बरावृतौ ॥
नमः शिवाय शान्ताय महादेवाय धीमते ।
इत्यादिभिः सदा देवं स्तुवन्तौ नामभिः शिवम् ।
साक्षादिव महादेवौ रेजतुः शूलधारिणौ ॥
ततः स्वभवनं गत्वा पितुः पादावगृह्णताम् ।
पितुश्च सख्युर्नलिनौ मातुश्च चरणौ तदा ॥
जनार्दनोऽपि धर्मात्मा कालेन महता नृप ।
विद्यापारं महाबुद्धिर्यत्नेनासावुपेयिवान् ॥
स च विष्णुं हृषीकेशं पीतकौशेयवाससम् ।
ब्रह्मतत्त्वपरो नित्यमुपास्ते विजितेन्द्रियः ॥
हंसश्च डिभकश्चैव कृतदारौ बभूवतुः ।
जनार्दनश्च धर्मात्मा कृतदारो बभूव ह ॥
सर्वे ते यज्ञपरमाः पञ्चयज्ञपरास्तथा ।
स्वदारनिरताः सर्वे गुरुशुश्रूषणे रताः ।

—(L 2179) D6 T2 G2 त्र्यक्ष स, T4 त्र्यक्षर (for त्रियक्ष) —(L 2181) T1 2 G2 4 M3 प्रीति (for प्रीत) — D6 ईश्वर (for भगवान्) —(L 2182) T1 2 G1 3 4 वरयतं D6 T2 4 G1-4 भद्र (for भद्रौ) Dn Ds2 वर वरय भद्र वा (for °) T4 G2 यथेच्छेता, M4 °च्छेद (for °च्छा वा) D6 T4 G2 M1-3 वाम् (for वै) —(L 2184) D6 मुरगौ (for मुरगैर्) M4 यक्ष (for रक्षो) M1 2 सत्तमै (for दानवै) —(L 2185) D6 M1-3 अजय्यौ, D6 नो समौ (for एष नौ) —(L 2188) D6 T4 M3 देव (for दिव्यम्) —(L 2189) G4 6 शार्व (for शर्व) — T2 om (hapl) lines 2190-2123 —(L 2190) M1 3 युद्ध तु, M4 युद्धस्य (for युद्धे हि) Dn Ds2 T1 G1 3-5 M2 4 गच्छताम् (for °तो) —(L 2191) M1 3 सर्वेश, M2 4 भूतेश (for देवेश) D6 G3-6 M भृङ्गिरिटिं, T4 °रिट, G1 °रिटी (for °रिटी) —(L 2192) D6 द्वितीयो नौ (for कुण्डोदरं) D7 T1 G2 M1 3 विरूपाक्ष (for °पाक्ष) D6 T1 2 G2 4 M1-3 रत (for रतम्). —(L 2194) D6 T1 G2 M1 गच्छतोर्, T2 G1 3 6 °त, M2 4 °तो (for °ता) —(L 2194) D6 कृताख (for °स्त्रौ) Dn1 Ds2 दास्त्र, M सत्त्व (for शस्त्र) G3 वीर्यवत्तमौ (for °त्तरौ) — T4 om lines 2198-2201 —(L 2198) Dn Ds2 T2 G1-4 M4 अजय्यौ (for अजेयौ) —(L 2199) D6 T1 G2 6 M4 देवेन (for °शे) —(L 2200) M1 3 नित्योपासकरौ (M3 °करे) देवे (for °) D6 भस्मोद्धूलितशोभितौ (for °) —(L 2201) T4 कृतत्रिपुण्ड्रौ नित्य च (for °) G4 6 शिरोरुहौ (for °धरौ) —(L 2203) G3 शम्भवे (for धीमते) —(L 2204) Dn Ds2 महादेवं (for सदा देवं) —(L 2205) Dn Ds2 T1 G5 M3 जय (for शूल) T2 G1 3 पाणिनौ (for धारिणौ) —(L 2206) T1 G2 3 अगृह्णताम्, T2 G1 अवन्द° (for अगृह्ण°) — D6 om (hapl) lines 2208b-2213a —(L 2209) Dn G2 3 6 M1 4 युक्तेन, Cal ed योगेन (for यत्नेन) T1 यत्नेन समुपेयिवान् (for b) G3 विद्यासार (for °पार) —(L 2210) M1 3 पीतवाससमच्युतम् (for b). —(L

धर्म एव परं श्रेय इति ते मेनिरे नृप ॥

Colophon.

वैशंपायन उवाच ।

ततः कदाचित्तौ वीरौ मृगयां चक्रतुः किल ।
जनार्दनेन सहितौ रथैरश्वैर्गजैरपि ॥
वनं गत्वा तु तौ वीरौ सिंहव्याघ्रांश्च जघ्नतुः ।
शितैर्बाणैर्महाराज वराहानथ सर्वशः ।
व्यालानन्यान्मृगान्हिंस्राञ्श्वभिश्च सहितौ नृप ॥
एष आयाति विपुलो वराहो दीर्घलोचनः ।
एनं बाणेन सञ्छिन्धि याति चायं मृगाधिपः ।
अयमन्योऽथ महिषः शृङ्गप्रोतसरीसृपः ॥
एते खलु मृगाः सार्धं शावैर्धावन्ति सर्वतः ।
एतद्भ्रमति सर्वत्र भीतं शशकुलं महत् ॥
शावैस्तदन्वयैः सार्धं न हन्तव्यमिदं शुभम् ।
ग्रहीतव्यमिदं सर्वं निरुध्य श्वगणैरिह ॥
इत्यादिशब्दः सुमहान्मृगया कुर्वतां नृप ।
क्षत्रियाणां नृपश्रेष्ठ व्याघ्राणां चैव धावताम् ॥
हत्वा मृगान्सुबहुशो व्याघ्रान्सिंहान्नृपोत्तमौ ।
श्रमं च जग्मतुर्वीरौ मध्यं गच्छति भास्करे ॥
अलं हि मृगयास्माकं श्रमः समुपजायते ।
इत्यूचतुर्महाराज पुष्कर जग्मतुः सरः ॥
सरःसमीपमागम्य मुनिसिद्धनिषेवितम् ।
वीजन्मारुतसानूपं श्रमात्तत्र सुखं स्थितौ ॥
ततो जनाः सरः सर्वे विगाह्य श्रमकर्शिताः ।
बिसान्प्रवालान्पद्मानां भक्षयामासुरार्तवत् ॥
जनार्दनेन सहितौ हंसो डिभक एव च ।
सरः क्वचित्समाश्रित्य श्रमं सत्यज्य तिष्ठतः ॥
विश्रम्य सरसस्तीरे तदासाते सुखं नृपौ ।
अशृण्वतां परं ब्रह्म मुनिभुख्यैः समीरितम् ।
माध्यंदिनं तथा सर्वैः सवन सस्वरं नृपौ ॥
ततः प्रीतौ नृपौ भूत्वा श्रुत्वा वेदध्वनिं तदा ।
ऐच्छेतां तौ तदा द्रष्टुं यज्ञं मुनिकृतं सदा ॥
स्थापयित्वा ततः सेना सर्वां मृगसमन्विताम् ।
आदाय च महाचापे शरान्कतिचिदेव च ॥
जनार्दनसहायौ वीरौ हंसो डिभक एव च ।
पद्मातिनौ महाराज जग्मतुश्चाश्रमं किल ॥

2211) G2 नियतेन्द्रिय, M संयते° (for विजिते°) —(L. 2213) Dn Ds2 T1 G2 3 5 ऽपि (for च) (L. 2214) Dn Ds2 निरता (for परमा) D6 M1 3 पाक (for यज्ञ) G2 -परायणा, M4 रतास्तथा (for -परास्तथा) —(L. 2216) M3 ज्ञेय (for श्रेय) G4 नृपा

COLOPHON — Mention of the Epic Ds2 — Mention of Khila Dn Ds2 D6 T1 2 4 G M — Adhy name Dn Ds2 G4 हंसडिभकोपाख्यानम् T1 G3 हंसडिभको पाख्याने वरप्राप्ति, T2 G1 हंसडिभकवरप्राप्ति, M4 हंसडिभकम् — Adhy no Dn 288, Ds2 299, T1 G3 216, T2 G1 218, T4 185, G2 211, G4 215, G5 217, M1 3 181, M4 217

T3 om the ref —(L. 2217) Dn2 Ds2 T1 2 G1 3 4 भ्रमतु; Dn1 भ्रमत; D6 G3 जग्मतु (for चक्रतु) G5 तदा (for किल) —(L. 2218) Poona ed अश्व (for अश्वैर्) —(L. 2219) M1 सिंहान् (for सिंह) —(L. 2220) M1 शरैर् (for शितैर्) D6 T4 G2 च सहस्रश (for [अ]थ सर्वश) —(L. 2221) D6 सिंहान् (for हिंस्रान्) —(L. 2223) T1 2 G1 3 4 M पृथुलो, G2 वेगेन (for विपुलो) G5 विपुलो (for वराहो) —(L. 2223) D6 G2 पार्श्वतो, T4 यात्यतो; M1 3 धावतो, M4 अन्यतो (for याति च) —(L. 2224) D6 शृङ्गेतर (for °प्रोत) —(L. 2225) Ds2 बाधन्ति (for धावन्ति) Dn Ds2 T1 G3 4 M3 4 सर्वशः (for °त) —(L. 2227) T1 2 तदन्वये (for तदन्वयै) Bom Poona eds G(ed) शावस्तन पिबत्साधु (for °) —(L. 2229) T1 3 G2 3 कुर्वतो, T4 °ते (for °ता) G4 5 सदा (for नृप) —(L. 2231) G1 G2 सर्वान् (for सिंहान्) —(L. 2232) M1 गच्छतुर् (for जग्मतुर्) Dn Ds2 G5 मध्यं याते दिवाकरे (for °) —(L. 2236) T1 व्रजन्, G4 कूजन् (for वीजन्) M1 3 सलील (for सानूपं) —(L. 2238) D6 सर्वान् (for बिसान्) D6 M पद्मांश्च (for पद्मानां). Dn1 विश्रम्य सरसस्तीरे (for °) —(L. 2239) — For line 2240, D6 T4 G2 subst

19** विगाह्य तत्सर स्वादु शीत पीत्वा जल च तौ।

—(L. 2241) D6 T4 G2 समाश्रित्य सरस्तीरे (for °) D6 T4 G2 नृपोत्तमौ (for सुखं नृपौ) —(L. 2243) D6 माध्यदिने (for माध्यंदिन) —(L. 2244) D6 ततः प्रीतो महाबाहु (for °) —(L. 2246) D6 T1 4 G1 5 M2 सर्वां सेना (by transp) Dn1 समन्वितौ (for °ताम्) —(L.

महर्षेः काश्यपस्याथ सत्रं वैष्णवसंज्ञितम् ।
यजतो मुनिभिः सार्धं जपहोमपरायणैः ॥

Colophon.

वैशंपायन उवाच ।

जनार्दनश्च धर्मात्मा हंसो डिभक एव च ।
सदः प्रविश्य सत्रस्य नमश्चक्रुर्मुनींस्ततः ॥
तानागतान्महात्मानो मुनयः शिष्यसंयुताः ।
अर्घ्यपाद्यासनादीनि चक्रुः पूजां च यत्नतः ॥
तौ नृपौ स च विप्रेन्द्रः समर्प्य प्रतिगृह्य च ।
प्रीतात्मानौ महात्मानौ आसते सुसुखं नृप ॥
ततो हंसो बभाषे तान्मुनीन्संयतवाङ् नृप ।
पिता हि नौ मुनिश्रेष्ठा यष्टुमैच्छत्ससाधनः ।
गन्तव्यं तत्र युष्माभिः सत्रान्ते मुनिसत्तमाः ॥
राजसूयेन यज्ञेन कृत्वा दिग्विजयं वयम् ।
याजयिष्यामहे विप्राः पितरं धार्मिकं नृपम् ।
आयान्तु तत्र विप्रेन्द्राः सशिष्याः सपरिच्छदाः ॥
वयमद्यैव सहिता दिशो जेष्यामहे ध्रुवम् ।
शक्ता हि वयमेवैतत्कर्तुं सैनिकसंचयैः ॥
आवयोः पुरतः स्थातुं न शक्ता देवदानवाः ।
कैलासनिलयाद्देवाद्वरं लब्धाः स्म यत्नतः ॥
अजेयाः शस्त्रसंघानामस्त्राणि विविधानि च ।
इत्युक्त्वा विररामैव हंसो बलमदान्वितः ॥

मुनय ऊचुः ।

यदि स्यात्तत्र गच्छामो वयं शिष्यैर्नृपोत्तम ।
आस्महे चान्यथा राजन्नित्यूचुः किल तापसाः ॥

वैशंपायन उवाच ।

ततो देशान्महाराज गन्तुं निश्चितमानसौ ।
पुष्करस्योत्तरं तीरं दुर्वासा यत्र तिष्ठति ॥
यतयो यतयो भूत्वा यत्र ब्रह्मनिषेविणः ।
ब्रह्मसूत्रपदे सक्तास्तदर्थालोकतत्पराः ॥
निर्ममा निरहंकाराः कौपीनवसनावृताः ।
तमात्मानं जगद्योनिं विष्णुं विश्वेश्वरं शिवम् ॥
ब्रह्मरूपं शिवं शान्तमक्षरं सर्वतोमुखम् ।
वेदान्तमूर्तिमव्यक्तमनन्तं शाश्वतं शिवम् ॥

2247) K6 T4 महाचाप; M °चापौ (for चापे) —(L. 2249) G6 महावीर (for °राज) —(L. 2250) Dn1 संज्ञकम्; T1 G3 -संहितम् (for संज्ञितम्). —(L. 2251) M1 3 यततो (for यजतो).

Colophon om in Ds2 — *Mention of Khila* Dn Ds T1, 2, 4 G M. — *Adhy name* Dn हंसडिम्भको-पाख्यानम्, T1 G1 हंसडिभकमृगयायां काश्यपदर्शनम्; T3 G3 काश्यपदर्शनम्; G3 मृगयाया काश्यपदर्शनम् — *Adhy no.* Dn 289; T1 G3 213; T3 G1 319; T4 116, G2 212; G4 216; G5 M1, 2, 4 218; M3 182.

Ds2 om lines 2252–2253. —(L. 2252) G3 सर्वात्मा (for धर्मात्मा). —(L. 2253) D6 प्रशस्य (for प्रविश्य) T2 सर्वत्र (for सत्रस्य). Dn G1, 4, 5 मुनीश्वरान् (for मुनींस्तत) —(L. 2254) D6 T4 G3 मुनयः संशितव्रता (for °). —(L. 2255) D1 अर्घ्यपाद्यासनाभ्यां हि, T4 °द्यां हि: M1, 2 °द्याभि, M3 °दीभि (for °). —(L. 2256) T1 ते नृपा (for तौ नृपौ). D6 M1, 2 संप्रयुज्य; T3 G1, 5 संप्रगृह्य; T4 M3 संप्रपूज्य, M4 प्रतिपूज्य (for °गृह्य). —(L. 2257) T4 स; Bom Poona eds G(ed) स (for तु). —(L. 2259) नृपश्रेष्ठ (for मुनि°). D6 प्रष्टुम् (for यष्टुम्). Dn Ds1 G3 M4 ससाधनम्; G3 सनातन (for ससाधन) —(L. 2262) G5 विप्रौ (for विप्रा) D6 पातयिष्यामहे विप्रा (for °). —(L. 2264) T3 G1, 4, 5 आवाम् (for वयम्) Dn Ds1 T1, 2 G1–4 M4 सहितौ (for °ता) D5 T4 G4, 5 स्वर्गे; T1 G2, 3 M1–3 स्वकं, T3 G3 स्वयम्, M4 वयम् (for ध्रुवम्). —(L. 2265) T1 G3, 5 शक्ता वयमिहैवैतत् (G3 °तं); T2 G1, 4, 5 शक्तौ हि वयमेवैतत् (for °) —(L. 2266) D6 शक्ता देवा न दानवा (for °) —(L. 2268) Dn Ds1 M4 अजय्यौ. D6 अयेथा; G3 अजेयं (for °या) —(L. 2269) Dn Ds1 T1, 2 G M1 हंसो मदबलान्वित (for °). —D5 T4 G1, 5 M om the ref —(L. 2270) G6 शिष्यैः सह (for वयं शिष्यैर्) —D6 T1, 2, 4 G1–4 M om. the ref —(L. 2272) G1 तस्माद् (for ततो). T1 G3 मानसा (for °सौ) —(L. 2273) G4 पुष्करस्योत्तरे तीरे (for °). —(L. 2274) D6 T4 यत्र ये (for the first यतयो). Dn Ds1 T1, 2 G1, 3–5 M4 नियता (for the second यतयो) Dn Ds1 T1 G3 M4 ब्रह्म (for यत्र) D6 ब्रह्मतत्त्वनिवेशना (for °) —(L. 2275) M1, 2 तदा-लोकनतत्परा (for °) —(L. 2276) Ds1 निर्मांना (for निर्ममा) Dn Ds1 T1, 2, 4 G1, 3–5 कौपीनाच्छादनावृता (T1 G3 °नाहृता) (for °) —(L. 2277) M1, 4 जगद्योनिं (for °ना°). Dn Ds1 G3 विभुम्; T1, 2 G1, 2, 4 प्रभुम् (for

नित्ययुक्त निरूपाक्ष भूताधारमनामयम् ।
ध्यायन्त सर्वदा देव मनसा सर्वतोमुखम् ॥
दुर्वासस सदोपास्य वेदान्तैकरस गुरुम् ।
तर्कनिश्चिततत्त्वार्थज्ञाननिर्मलचेतस ॥
हसा परमहसाश्च शिष्या दुर्वासस प्रभो ।
गत्वा तत्र महात्मानौ दृष्ट्वा तानूर्ध्वरेतस ॥
दुर्वासस महाबुद्धि विचिन्वान पर पदम् ।
क्रुद्धो यदि स दुर्वासा दग्धु लोकानिमान्क्षम ॥
देवा अपि च य दृष्ट्वा क्रुद्ध चेन्न क्षमा सदा ।
रोषमूर्ति सदा यस्तु विश्वात्मा विश्वरूपधृक् ॥
रक्तकौपीनवसनो हस परम एव च ।
दृष्ट्वैन च तयोरेव बुद्धिरासीन्महामते ॥
को नामासौ महाभूत कापायी वर्णवित्तम ।
कश्चायमाश्रमो नाम विहाय च गृहाश्रमम् ॥
गृहस्थ एव धर्मात्मा गृहस्थो धर्मवित्तम ।
गृहस्थो धर्मरूपस्तु गृहस्थ स्वर्ग एव च ॥
गृहस्थश्च सदा माता प्राणिना जीवन सदा ।
त विनान्येन रूपेण वर्तते यो हि मूर्खवत् ॥
उन्मत्तोऽय विरूपोऽयमथ वा मूर्ख एव च ।
ध्यायन्ति सदा चायमास्ते वञ्चयितापि वा ॥
किमेते प्राकृतज्ञाना ध्यायन्त इव किंचन ।
वयमेतान्दुरारोहानाश्रमान्तरकल्पितान् ॥
स्थापयिष्यामहे सर्वान्मन्दबुद्धीनिमान्गृहे ।
बलादेव द्विजानेनान्मूढविज्ञानतत्परान् ।
असद्ग्राहगृहीताश्च बालिशान्दुर्मतीनिमान् ॥
एषा शास्ता च को मूढो न विज्ञो वयमत्र ह ।
धर्म्ये वर्त्मनि सस्थाप्य पुनर्यास्याव निर्वृतौ ॥
इति सचिन्त्य तौ वीरौ विप्रेण सहितौ नृप ।
जनार्दनन राजानौ मोहाद्भाग्यक्षयान्नृप ॥
समीप तस्य राजेन्द्र यते सशितचेतस ।
गत्वा च प्रोचतुरुभौ दुर्वाससमतीन्द्रियम् ।
यतींश्च नियतान्क्रुद्धौ राजानौ राजसत्तम ॥

Colophon

शिवम्) — (L 2278) Dn Ds2 D6 T4 शुभ T1 2 G विभुं (for शिव) — T1 2 G1 3 5 om (hapl) lines 2279 2281 — (L 2279) D6 विभुम् (for शिवम्). — (L 2280) D6 T4 M1 3 विभु बभ्रु (for निरूपाक्ष) — (L 2281) Dn2 D6 M1-3 ध्यायन्त (for न्त) M1 2 अनन्त (for मनसा) — (L 2283) Dn Ds2 T1 2 G M4 दुर्वा सस्मा (for सस) Dn2 -पर (for रस) — (L 2283) Cal शुचि (for ज्ञान) — G4 om lines 2284–2285 G3 om line 2284 — (L 2285) T1 G2 M4 रेतसम् (for °स·) Dn Ds2 G 6 सौ दृष्ट्वा तूर्ध्वरेतसम् (for °) — (L 2288) Dn Ds2 T1 G1 3 वै (for चेन्न) — (L 2289) D6 T4 G2 लोक (for रोष) Dn Ds2 T1 रुद्रा सा (for विश्वात्मा) — (L 2291) D6 एक T4 देव (for एव) — (L 2292) G2 स M1 2 4 [अ]यं (for [अ]सौ) — (L 2295) Dn Ds2 T1 2 4 G1 2 5 वर्णं G4 धर्मं (for स्वर्ग) Ds2 स M3 4 हि (for च) — (L 2296) M1 3 नित्य- (for न) G4 धनम् (for सदा) — (L 2297) G4 तन (for [अ]न्येन) — (L 2299) T4 यत्र G3 सत्र (for [अ]पि वा) — (L 2301) Dn Ds2 T4 G1 M -कल्पकान् G3 -कर्शितान् (for कल्पितान्) — (L 2303) G2 विद्वानेतद् (for बलादव) — (L 2304) D6 T4 G2 असद्गृहीतास्तु सदा (for °) D6 बालस्कन्दमतीनिमान् T4 G2 M1 3 बाला-मन्दमतीनिमान् (for °) — (L 2305) G2 मूर्खा (for मूढो) Dn1 विप्रा (for विज्ञो) — (L 2306) Dn धर्मं Ds2 T1 G4 5 M1 4 धर्मे (for धर्म्ये) D6 G2 धर्मे ह्येता समास्थाप्य (for °) D6 T2 4 M1 2 4 यास्याम (for °व) D6 T2 4 G2 M1 3 4 निर्वृता (for तौ) — (L 2309) Dn Ds2 T1 G1 4 6 सयत (for सशित-) — (L 2310) D6 गत्वा विप्रो चतुर्भद्रौ T4 गत्वा च भूचतुर्भद्रौ (sic) G2 गत्वा प्रोचतुरेवाप्रे (for °) — (L 2311) D6 G4 सत्तमा T2 °मौ (for °म)

COLOPHON — *Mention of the Epic* Ds1 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Sub parvan* T2 भाविष्यपर्व — *Adhy name* Dn Ds2 T2 हसडिभकोपाख्यानम् T1 G2 मुनिसन्दर्शनम् T4 M2 4 हंसडिभकम् G1 हसडिभकोपाख्याने मुनिसदर्शनम् — *Adhy no* Dn Ds2 291 T1 G2 218, T2 107, T4 1 0 G1 220 G2 213, G4 217, G5 M4 219, M1-3 103

Before the ref., T1 4 G2 4 ins also वैशपायन G1 om lines 2312–2351 G3 reads line 2312 twice.—(L 2312) T1 ज्ञानलेश D6 M1 2 विनीतासन् (for विहीना)

पिबेयं वा विषं घोरं पतेयं वा महोर्मिषु ॥
आत्मानं वात्र संत्यक्ष्ये शृण्वतां पश्यतां नृपौ ।
इत्युक्त्वा विललापैवं मा मृतेति सदा वदन् ॥

Colophon

वैशंपायन उवाच ।

ततः क्रुद्धोऽथ दुर्वासा धक्ष्यन्निव तयोस्तनून् ।
एकेनाक्ष्णाथ दुर्वासा रौद्रेणाभियुजा सदा ॥
पश्यंस्तौ च दुरात्मानौ रोषव्याकुलितेन्द्रियः ।
कुर्वन्निव तदा लोकान्भस्मभूतानिमान्नृप ॥
ब्राह्मणं चक्षुषा पश्यन्सौम्येनान्येन केवलम् ।
उवाच वचनं राजन्ध्वसत ध्वंसतेति ह ॥
इतो गच्छत राजानौ किं विलम्बथ माचिरम् ।
न वां वचनसंभूतं रोषं धारयितुं क्षमः ॥
अन्यथा वो महीपालान्सर्वान्दग्धुमहं क्षमः ।
विस्मितः साहसं वक्तुं कश्च शक्नोति मत्पुरः ॥
दर्पं वा लोकविख्यातः शङ्खचक्रगदाधरः ।
व्यपनेष्यति मन्दज्ञौ किं वा वक्ष्यामि सांप्रतम् ॥
तत उत्थाय धर्मात्मा गन्तुमैच्छद्यतीश्वरः ।
ततो निषेद्धुं हंसस्तं यतते स्म यतीश्वरम् ॥
तस्य बाहुं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम ॥
यतयोऽन्ये पलायन्ति दिशो दश विचेतसः ॥
कष्टं हेति वदन्विप्रो मित्रभावाज्जनार्दनः ।
न्यवारयद्यथाशक्ति किमिदं साहसं त्विति ॥
दुर्वासाः सत्यधर्मस्तु हन्तुमीशोऽपि तं ततः ।
मन्दं मन्दगुणं चेदं हंसं डिभकमेव च ॥
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ ।
तथापि न करोम्येवं यतयो ह्यत्र ते वयम् ॥
यो हि देवो जगन्नाथः केशवो यादवेश्वरः ।
शङ्खचक्रगदापाणिर्गर्वं वां व्यपनेष्यति ॥
लोके तस्मिन्यदुश्रेष्ठे रक्षत्येव जगत्पतौ ।
युवयोः सर्वथा जीवः सुजीव इति मे मतिः ॥
जरासंधोऽपि वा बन्धुः स च वक्तुं न चेच्छति ।
ईदृशं लोकविद्विष्टं स हि धर्मपथे सदा ॥

---

$M_2$ यदिष्ट (for यथेष्ट) — (L 2347) $D_6$ $T_4$ $G_{2-4}$ $M_{1-2}$ कालस्य (for पापस्य) $T_{1\ 2}$ $G_{3\ 5}$ $M_{1.4}$ -पापम् (for रूपम्) — (L 2348) $D_6$ यास्यावो, $T_3$ यास्येऽह (for यास्ये वा) $Ds_2$ शिलातलम् (for °तलं) — (L 2350) Dn $Ds_2$ $G_2$ पुन, $T_{1\ 4}$ $G_4$ पुर, $G_3$ पुरा, $G_5$ तदा (for नृपौ) — (L 2351) $D_6$ ब्रुवन् (for वदन्) Dn $Ds_2$ $T_2$ $G_{3-5}$ मा मृतमिति तौ ($G_4$ त) वदन्, $T_1$ तूष्णीमास जनार्दन (for [b])

COLOPHON — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{2-5}$ M — *Adhy name* Dn $Ds_1$ $T_{1\ 2}$ $G_2$ हसडिभकोपाख्यनम्, $D_6$ M हसडिभकम् — *Adhy no* $Dn_2$ 291, $Ds_2$ 292, $T_1$ 219, $T_2$ 2?1, $T_3$ 181, $G_2$ 214, $G_3$ 219, $G_4$ 218, $G_5$ 220, $M_{1\ 2}$ 184, $M_3$ 204

(L. 2353) $D_6$ $M_{1-3}$ स (for [अ]थ) M रौद्रेणारणवर्चसा (for [b]) — (L 2355) $D_6$ $M_{1\ 2}$ भस्मीभूतान् (for भस°) — (L. 2356) $D_6$ $T_4$ $G_3$ सदा सौम्येन केवलम् (for (for [b]) — (L 2358) $Ds_1$ ततो (for इतो) $Dn_1$ $Ds_1$ $M_{2\ 3}$ विलम्बत (for °थ) — (L 2359) M भवद्वचनसंभूत (for [a]) Dn $Ds_1$ $G_3$ क्षमे, $T_3$ $G_{4\ 5}$ $M_4$ क्षमम् (for क्षम) — (L 2361) $G_3$ शक्तो हि (for शक्नोति) — (L. 2363) $D_6$ $T_4$ M मन्दात्मन् (for मन्दज्ञौ) $D_6$ वां, $T_{1\ 4}$ M वो (for वा) — $D_6$ om lines 2364–2366 — (L. 2364) $G_1$ मन्दात्मा (for धर्मात्मा) $G_2$ यतीश्वरम् (for °श्वर) — (L 2366) $M_1$ बाह्वो, $M_3$ बाहो (for बाहुं) $M_{1\ 2}$ -वरोत्तम (for °म) $T_2$ हसो वरनृपोत्तम (for [b]) — (L 2367) $T_4$ $G_{2\ 4}$ सत्तम — (L 2371) $D_6$ $M_{3\ 4}$ सत्यसधम् (for °धर्मस्) $G_2$ न तं जनम्; $G_3$ ऽपि सत्तम; $M_{1-3}$ न तत्कृतम् (for ऽपि त तत) — (L 2372) $D_6$ हसो (for हस) — (L 2373) $D_6$ $M_1$ ऽस्मि (for ऽपि) — (L 2374) Dn $Ds_1$ $T_1$ $G_{2\ 3\ 5}$ [अ]न्त, $T_4$ $M_{1\ 2\ 4}$ [ए]तद् (for [ए]वं) $M_3$ तथापि तत्क्षमे राजन् (for [a]) — (L 2376) $D_6$ $T_4$ M दर्पं (for गर्वं) $D_6$ $M_{1\ 2}$ वो, Cal. ed ते (for वां) — (L 2377) $T_{2\ 4}$ $G_{1\ 2\ 4\ 5}$ $M_{1-3}$ लोकं (for लोके) $D_6$ यदुश्रेष्ठो, $T_3$ $G_1$ नृपश्रेष्ठ, $G_{4\ 5}$ नृपश्रेष्ठे; $M_4$ यदुश्रेष्ठ (for °श्रेष्ठे) $D_6$ जगत्यमौ (for °त्पतौ). — (L 2378) $G_1$ सञ्जीव (for सुजीव) $M_3$ इति मे निश्चिता मति (for [b]) — (L 2379) $T_1$ om (hapl) $2379^b$–$2381^a$ $D_6$ $T_4$ $G_3$ $M_{1-3}$ स च नेच्छ($D_6$ °ष्य)ति केवलम् (for [b]) — $G_2$ om lines 2380–2384 $T_3$ $G_{1\ 2}$ om. line 2380 — (L 2380) $D_6$ $G_{4\ 5}$ धर्मं (for लोक) $D_6$ $T_4$ धर्मरत, $G_{4\ 5}$ M धर्मपथ (for °पथे) — (L. 2381) Dn $Ds_1$ $T_{1\ 2\ 4}$ $G_{1\ 3}$ न हि, $G_{4\ 5}$ स हि (for न स).

एतावता स वा बन्धुर्न स भूयो भविष्यति ।
विद्वेषो हास्तु वां तस्य मागधस्य महीपतेः ॥
श्रुत्वेद घोररूपं तु स हि बन्धुः सहेत चेत् ।
धर्मनाशो भवेत्तस्य नात्र कार्या विचारणा ॥
इत्युक्त्वा गच्छ गच्छेति हंसं प्राह पुनः पुनः ।
जनार्दनमुवाचेदं दुर्वासा यतिसत्तम ॥
स्वस्त्यस्तु तव विप्रेन्द्र भक्तिरस्तु जनार्दने ।
संगतिस्तत्र तस्यास्तु शङ्खचक्रगदाभृतः ।
अद्य श्वो वा परश्वो वा साधुरेव सदा भवान् ॥
न हि साधोर्विनाशोऽस्ति लोकयोरुभयोरपि ।
गच्छ सर्वं पितुर्ब्रूहि ज्ञात्वा वृत्तं यथाखिलम् ॥

Colophon.

वैशंपायन उवाच ।
ततस्तौ हंसडिभकौ क्रुद्धौ कालेन चोदितौ ।
शिक्यं कमण्डलु चैव विदलं दारुमेव च ॥
दण्डान्पात्रनिक्षेपांश्च छित्त्वा भित्त्वा च सर्वशः ।
तस्मिन्देशे महाराज व्याधिमांसान्प्रदीदहन् ।
भक्षयित्वा ततो देशात्स्वपुरं तौ प्रजग्मतुः ॥
जनार्दनश्च धर्मात्मा स्नेहादनुययौ तयो ।
नष्टाविमाविति तदा स मेने दुःखितः परम् ॥
गतेषु तेषु सर्वेषु दुर्वासा यतिसत्तमः ।
पलायनपरान्सर्वानिदमाह यतीश्वरान् ॥
इतो देशाद्विनिर्गत्य पुष्करात्पुण्यसंयुतात् ।
मन्दं मन्दं समाश्वस्य विश्रम्य च ततस्ततः ।
प्रविश्य द्वारकां देवं शङ्खचक्रगदाधरम् ।
दृष्ट्वा च तस्मै प्रभवे वक्ष्यामो यतिसत्तमा ॥
स हि रक्षश्रुगदिद धर्मवर्त्मनि संस्थितः ।
आद्यो लोकगुरुर्विष्णुर्यतात्मा तत्त्वविद्प्रियः ।
उद्धृत्य कण्टकान्सर्वाञ्शशास पृथिवीमिमाम् ॥
स च पापान्महाघोरान्सर्वान्पापकृतान्प्रभुः ।
रक्षेत्र. सकलान्सर्वाञ्ज्ञानेषु नियतात्मन. ।
इदमद्य क्षमं विप्रा यानमद्य विधीयताम् ॥
साहसं यत्कृतं ताभ्यां पात्रभेदादि सत्तमाः ।
एतत्सर्वमशेषेण दर्शयाम जनार्दनम् ॥
तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुष. ।
छिन्नास्ताभ्यां समादाय शिक्यं दारुमयं तथा ॥
द्विदलं रुपटं चैव कौपीनमथ वल्कलम् ।
कमण्डलुं तथा राजन्नर्धप्रोतकपालकम् ।

— (L 2383) D6 T4 M1 2 सहेर्यदि, M3 4 भवेयदि (for सहेत चेत्) — (L 2385) D6 हंस प्राहुर्मुनीश्वरा (for [b]) — (2391) Dn1 Ds2 सर्वे (for सर्वं) D6 T2 G1 बूया (for ब्रूहि) D6 T1 M ज्ञानमस्तु तवाखिलम् (for [b])

Colophon — *Mention of the* *b̥*. Ds2 — *Mention of Ahdla* Dn Ds1 T1 2 4 G M — *Adhy name* Dn Ds2 हंसडिभकोपाख्यानम्, T1 2 G1 3 हंसडिभकदुर्वासदर्शनम्, M हंसडिभकम् — *Adhy no* Dn 292, Ds2 293, T1 G3 220, T2 G1 222, T4 189, G2 215, G4 219, G5 M4 221, M1-3 185

(L 2393) Dn Ds1 T1 2 G1 3 5 द्विदलं, G2 वल्कलं (for विदलं) T1 2 G1 2-5 तरुम्; T4 धाम (for दारुम्) — (L 2395) D6 T4 G2 M1 3 मांसम् (for मांसानि) — (L 2396) Dn Ds2 G4 स्वपुरीं (for °रं) — (L 2397) G2 ताभ्याम् (for स्नेहाद्) — (L 2398) D6 दुःखित — (L 2399) G1 3 दुःखितो (for दुर्वासा) M2 4 मुनि (for यति) — (L 2400) T4 G1 2 प्राह (for आह) — (L 2401) G2 इदमाह (for इतो देशाद्) T2 G1 सत्त्वात् (for संयुतात्) T1 G3 M1 पुष्करात्पुण्यसंयुतात् (for [a]) — (L 2402) D6 T2 समाश्वास्य (for °श्वस्य) G2 5 विश्वस्य (for विश्रम्य) G5 स्थित (for तत) — (L 2405) Ds1 T2 4 M2 धर्मे, M3 धर्मैं (for धर्म) — (L 2406) G1 आर्यो (for आद्यो) D6 G2 साक्षात् (for विष्णुर्) D6 T2 4 G1-3 M स्वस्था मा (for यतात्मा) D6 M स्वस्थवित्, T4 सर्व° (for तत्त्व°) — (L 2407) T1 दुष्टकान् (for °कण्टकान्) — (L 2408) D6 M1 3 महाघोराद् (for °रान्) D6 अस्मादस्य, M1 3 अस्मात्क्षत्र, Cal ed पापकर्म (for सर्वान्पाप) D6 T4 G2 बहु (for प्रभु) — (L 2409) T2 G1 2 सत्यवान् (for सकलान्) G2 लोकान् (for सर्वाञ्) G2 एष निश्चितमात्मन, G3 ज्ञानेषु नियतात्मवान् (for [a]) — (L 2410) G1 क्षण (for क्षम) D6 T1 G2 सन्मयात्र, T1 M यानमत्र; T2 G1 3 यानामत्र (for यानमद्य) — (L 2411) M1 3 वस्त्र, M4 वस्तु (for पात्र) — (L 2412) D6 G2 जनार्दने — (L 2414) T2 G2 4 5 छिन्न, G1 भिन्न M4 भिन्नास् (for छिन्नास्) M1 3 महाराज (for समादाय) — (L 2415) D6 M1 3 विदलं (for द्विदलं) — (L 2417) D6

एतानन्यान्समादाय द्रष्टुं केशवमाययुः ॥
पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिम् ।
दुर्वाससं तपोयोनिमीश्वरस्यात्मसंभवम् ॥
अहोरात्रेण ते सर्वे द्वारकां कृष्णपालिताम् ।
ययुर्दान्ता महात्मानो लोमशाः केशवर्जिताः ॥
प्रातः प्रविश्य राजेन्द्र वापिकाया यतीश्वराः ।
स्नात्वोपस्पृश्य शुचयो यत्नेन महता तदा ॥
द्रष्टुमभ्युद्यता विष्णुं कण्टकोद्धूतितत्परम् ।
एकरूपं समास्थाय सुधर्माद्वारमाययुः ॥

Colophon

वैशंपायन उवाच ।

अथ सर्वेश्वरो विष्णुः पद्मकिञ्जल्कलोचनः ।
श्यामः पीताम्बरः श्रीमान्प्रलम्बाम्बरभूषणः ॥
किरीटी श्रीपतिः कृष्णो नीलकुञ्चितमूर्धजः ।
अव्यक्तः शाश्वतो देवः सकलो निष्कलः शिवः ॥
क्रीडाविहारोपगतः कदाचिदभवद्धरिः ।
कुमारैरपरैः सार्धं सात्यकिप्रमुखैर्नृप ॥
गोलक्रीडां सुधर्मायां मध्ये यादवसत्तमः ।
चकार प्रियकृत्कृष्णो युयुधानेन केशवः ॥
ममायं प्रथमो गोलस्त्वं पश्चाद्भविष्यति ।
इति ब्रुवंस्तदा विष्णुः सात्यकिं कमलेक्षणः ॥

पार्श्वस्था यादवास्तस्य वसुदेवपुरोगमाः ।
उद्धवप्रमुखा राजन्नासेदुः क्वचिदत्र वै ॥
अन्यव्यापाररहितो भूतात्मा भूतभावनः ।
विजहार यथा रामः सुग्रीवेण पुरा नृप ॥
मध्यंदिने महाविष्णुः शैनेयेन सहाच्युतः ।
विक्रीड्य सुचिरं कृष्ण उपारंसीत्ससयादवः ॥
द्वाःस्थेन वारिताः पूर्वं द्वार्येव च समास्थिताः ।
इदमन्तरमित्येव विविशुस्तां सभां नृप ॥
यतयो दीर्घतपसः पुरस्कृत्य तपोधनम् ।
दुर्वाससं सुमनसो ददृशुर्यादवेश्वरम् ॥
गोलक्रीडासमायुक्तं करसंस्थितगोलकम् ।
विक्षिपन्तं जगन्नाथं पादाङ्गुष्ठेन गोलकम् ॥
पद्मपत्रविशालाक्षं वीक्षन्तं सात्यकिं हरिम् ।
एकेनाक्ष्णा छादयन्त परेणालोक्य गोलकम् ॥
यतयश्च महाराज प्रत्यदृश्यन्त तत्पुरः ।
कृष्णाय पुण्डरीकाक्षः सात्यकिर्न्यलभत्स्वकः ।
वसुदेवस्तथाक्रूर उग्रसेनस्तथा नृपः ॥
अन्ये च यादवाः सर्वे सभ्रमं प्रतिपेदिरे ।
इदं किमिदमित्येव व्यासक्तमनसोऽभवन् ॥
पृष्टतोऽप्यनुगच्छन्त दिधक्षन्त जगत्त्रयम् ।
अर्धकौपीनवसनं स्मरन्त यमपि द्विजम् ॥

सर्वान् ( for अन्यान् ) — ( L. 2418 ) T4 पञ्च ( for चैव ). G4 5 नमस्कृत्य ( for पुर° ) Dn Ds1 T1 G2 महामुनीन्, G4 5 M3 °मुनि ( for °मुनीन् ) — ( L. 2421 ) T4 G5 5 M1-3 शान्ता, G3 क्लान्ता ( for दान्ता ) D6 केशवार्चिता ( for °वर्जिता ) — ( L. 2423 ) D6 [उ]पस्पृश्य, T4 G2 °सृत्य ( for °स्पृश्य ) — ( L. 2425 ) T1 G3-5 सुधर्मायामवस्थितम् ( for ° )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds1 D6 T1, 2 4 G M. — *Adhy name* Dn Ds1 हसडिम्भकोपाख्यानम्, T1 G3 यतीनां द्वारकाप्रवेशः. M हंसडिम्भकम्; — *Adhy no* Dn 293; Ds1 294, T1 G3 2.1; T2 G1 223, T4 190, G2 216, G4 220; G5 222, M1-3 196

( L. 2427 ) D6 श्याम पीताम्बरधर ( for ° ) — ( L. 2431 ) T2 G1 4 नृपे ( for नृप ) — ( L. 2433 ) D6 T4 G3 चकार प्रियवत्तुष्टो ( for ° ) — ( L. 2436 ) G4 सर्वे ( for तस्य ) — ( L. 2440 ) G2 M1 3 मध्यदिनान्त् ( for °दिने ) — ( L. 2442 ) D6 T4 [आ]वेदिता ( for वारिता ) D6 द्वारे चैव ( for द्वार्येव च ) M समाश्रिता ( for °स्थिता ) — ( L. 2446 ) Ds1 G3 M समासक्त ( for °युक्त ) — Dn Ds1 om line 2447 — ( L. 2448 ) Dn Ds1 M4 विष्णुं त ( for वीक्षन्त ) — ( L. 2449 ) D6 M3 छादयन्; T4 M1 2 °यता ( for °यन्त ) Dn T1 2 G [अ]न्येन, Ds2 [अ]नेन ( for [आ]लोक्य ) G2 प्रत्यदृश्यन्ततमन ( for ° ) — ( L. 2451 ) T4 G5 M4 वृष्णिप ( for कृष्णाय ) T1 2 4 G1 2 4 5 M4 पुण्डरीकाक्ष ( for °क्षः ) — ( L. 2452 ) D6 दृष्ट्वा, M1 2 कङ्क ( for [अ]क्रूर ) — ( L. 2453 ) T4 G5 तत्रे ( for अन्ये ) M1-3 संप्रपेदिरे ( for प्रति° ) — ( L. 2455 ) G1 T1 2 पृष्ठतोऽप्यनुसर्पन्ते ( G1 °न्ति ), G2 °तो प्यनुसर्पन्त, G4 5 °तो प्यवसर्पन्ति; M3 °तोऽप्यनुगच्छन्ति ( for ° ) G3 जनार्दनम् ( for जगत्त्र

अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिम् ।
अतिज्वलन्तं रोषेण हंसासादितकल्मषम् ॥
नेत्रोत्थितमहाग्निं प्रेक्षन्तं यादवेश्वरम् ।
दुर्वाससं ते ददृशुर्भीता यादवसत्तमाः ॥
किं करिष्यत्ययमौ क्रुद्धः किं वा वक्ष्यति नः प्रभुः ।
इति प्राञ्जलयः सर्वे यादवाः समपेदिरे ।
इदमासनमित्येवं किंचिदूचुश्च वृष्णयः ॥
ततः कृष्णो हृषीकेशः किंचिदुत्प्लुत्य सत्पुरः ।
इदमासनमित्येवं स्थीयतामिह निर्वृतः ।
अहमत्र स्थितो विप्र किं करोमीति चाब्रवीत् ॥
ततः किंचिदिवासीन आसने यतिविग्रहः ॥
आसने संस्थिते तस्मिन्यतयो वीतमत्सराः ।
आसनानि यथायोगं भेजिरे निर्वृताः किल ॥
अर्घ्यादिसमुदाचारं चक्रे कृष्णः किरीटभृत् ।
आह भूयो हृषीकेशो यतिं दुर्वाससं प्रभुम् ।
किमर्थं ब्रूहि विप्रेन्द्र अस्मिन्प्रत्यागमो हि वः ॥
दृष्टं वाप्यथ वा किंचित्कारणं योऽस्ति वा महत् ।
संन्यासिनो द्विजश्रेष्ठा यूयं विगतकल्मषाः ॥
निःस्पृहाश्च सदा यूयमसक्तो द्विजपुंगवाः ।
प्रार्थ्यं नाम न चैवास्ति स्पृहा नैवास्ति वो यत ॥
स्पृहाप्रेरितकर्माणः क्षत्रियान्यान्ति सुव्रताः ।
निरूप्यमाणमस्माभिर्विप्र किंचिन्न दृश्यते ॥
न जाने कारणं ब्रह्मन्युष्मदागमनं प्रति ।
एतावता चानुमेयं किंचित्कारणमस्ति हि ।
तद्ब्रूहि यदि विद्येत हंसतो ज्ञास्यामहे वयम् ॥
इत्युक्तवति देवेशे चक्रपाणौ जनार्दने ।
तस्यापि राजन्विप्रस्य भूयः कोपो महानभूत् ।
तस्मादभ्यधिकः पूर्वात्कोपः संजायते महान् ॥
दिधक्षन्निव लोकांस्त्रीन्भक्षयन्निव पश्यतः ।
रोषपर्यस्तेक्षणः क्रुद्धो हसन्निव दहन्निव ।
उवाच वचनं विष्णुं दुर्वासाः क्रोधमूर्छितः ॥
न जान इति कस्मात्त्वं ब्रूषे नो यादवेश्वर ।
जानामि त्वामहं देव वञ्चयन्निव भाषसे ।
पुरातना वयं विष्णो पूर्ववृत्तान्तवेदिनः ॥
तथा हि देवदेवोऽसि मायामानुषदेहवान् ।
निगूहसे प्रभुरतः कस्मान्नो जगतीपते ॥
सोऽसि ब्रह्मविदां मूर्तिस्तदेतत्परमं पदम् ।
यदव्यक्तं परं ब्रह्म यस्य ज्ञाता वयं पुरा ॥
यतो विश्वमिदं भूतं तदेतत्परमं पदम् ।
यच्च स्थूलं विजानन्ति पुरा तत्त्वेन चेतसा ॥
पुराविदोऽथ विश्वेश तदेतत्परमं वपुः ।
कर्मणा प्राप्यते यत्तु यत्स्मृत्वा निर्वृता वयम् ॥
प्रत्यक्षमपि यद्रूपं नैव जानन्ति मानुषाः ।
न हि मूढधियो देव न वयं तादृशा हरे ॥

षम्) —(L 2458) Dn Ds2 T1 3 4 G अन्तर्ज्वलन्तं (for अतिज्व°) D6 -कश्मलम् (for कल्मषम्) T1 G3 हंसस्यास्तिमकल्मषम्, T4 G5 हंससादित° (for °). —(L 2459) G3 नेत्रोद्भूत (for °त्थित) —(L 2461) D6 T4 संक्रुद्ध ; G2 [अ]संक्रुद्ध (for [अ]सौ क्रुद्ध). —(L 2463) Dn Ds2 T1 3 G1 3-5 प्रतिपेदिरे (for संप°) —(L 2464) D6 G1 उत्पत्य (for उत्प्लुत्य) T4 G2, 3 तत्पर (for तत्पुर) — (L. 2465) D6 G1 इति (for इद). — (L 2466) M3 4 अथ (for अत्र) Dn Ds2 D6 T1 2 4 [illegible] (L 2469) Ds2 यथा [illegible] (for कृष्ण) [illegible] —(L. 2472) M1 2 अस्मान् (for अस्मिन्) G2 नृप (for हि वः) —(L. 2473) D6 T3 G2 [अ]भवत् (for महत्). —(L. 2474) D6 M3 मत्सरा (for कल्मषा). —(L. 2475) D6 T4 M3-5 -पुंगव (for °वा) —(L 2476) D6 T4 G2 प्रार्थ्य (for प्रार्थ्यं). — D6 om lines 2477–2481. —(L 2477) M धर्माणि (for कर्माणि). —(L. 2478) G4 विद्यते (for दृश्यते). —(L 2479) G2 M1-3 मया (for प्रति). —(L 2484) D6 T4 G2 M स्म ह (for महान्). —(L 2486) M3 दुर्वासाय हसन्निव (for °) —(L. 2489) Dn Ds2 T1. 2. 4 G1, 3 4 देवं (for देव). —(L. 2491) T1 देवेशो (for देवोऽपि) —(L. 2493) T1 4 G1 4 5 सर्वेश (for तदे तत्) —(L. 2494) Dn यदा भाव्यं पुरा महा ; Ds2 T1. 2. 4 G M4 यदव्यक्तं पुरा (T1 परं) महा ; D6 यदव्यक्तं पुरा महा (for °). —(L. 2497) D6 T4 पदम् (for वपु). —(L.

सत्येनैव शपाम्यद्य मा रोषवशमन्वगाः ।
रक्षां वोऽहं करिष्यामि हत्वा तौ च नृपाधमौ ॥
जानामि तौ दुरात्मानौ युष्मद्द्रोषकरौ हि तौ ।
श्रुतं च पूर्वमस्माभिस्तीक्ष्णदण्डधराविति ॥
अत्यन्तबलिनौ मत्तौ गिरीशवरदर्पितौ ।
नाल्पप्रयत्नससाध्यौ जरासंधहितैषिणौ ॥
प्राणानपि तयो राजा दास्यत्येव न संशयः ।
जरासंधो महीपालो विनानेन यतेमहि ॥
जये तयोर्विप्रवर्य तत्र श्रेयो भवेत नः ।
यत्र यत्र च तौ गत्वा स्थितावित्यनुशुश्रुम ।
तत्र तत्र च हन्ताहं नात्र कार्या विचारणा ॥
गच्छध्वं यतयः स्वैरं निजकार्यपरायणाः ।
अचिरेणैव कालेन जेष्यामि रणपुंगवौ ॥
ततः प्रीतः प्रसन्नात्मा यादवेश्वरमाह सः ।
स्वस्त्यस्तु भवते कृष्ण जगतां स्वस्ति सर्वदा ॥
किं नु नाम जगन्नाथ दुःसाध्य तव केशव ।
त्रिलोकेश त्रिधामासि सर्गसंहारकारकः ॥
देवानामपि देवेश सर्वत्र समदर्शनः ।
विष्णो देव हरे कृष्ण नमस्ते चक्रपाणये ॥
नमः स्वभावशुद्धाय शुद्धाय नियताय च ।
शब्दागोचर देवेश नमस्ते भक्तवत्सल ।
अज्ञानादथ वा ज्ञानाद्यन्मयोक्तं क्षमस्व तत् ॥
त्वमेवाहं जगन्नाथ नावयोरन्तरं पृथक् ।
अतः क्षमस्व भगवान्क्षमासारा हि साधवः ॥

भगवानुवाच ।

क्षन्तव्यं भवता विप्र क्षमासारा वयं सदा ।
सन्यासिनः क्षमासाराः क्षमा तेषां परं बलम् ॥
क्षमा मोक्षकरी नित्यं तत्त्वज्ञानमिव द्विज ।
क्षमा धर्मः क्षमा सत्यं क्षमा दानं क्षमा यशः ॥
क्षमा स्वर्गस्य सोपानमिति वेदविदो विदुः ।
तस्मात्सर्वप्रयत्नेन क्षमां पालयत स्वकाम् ॥
प्रत्यक्षज्ञानसयुक्ता यूयं सर्वे यतीश्वराः ।
एते ते यतयो विप्राः पूजनीया मयाद्य वै ॥
भोक्तव्या यतयो विप्रा भिक्षुकाः सर्व एव हि ।
तथेति ते प्रतिज्ञाय भोक्तुमैच्छन्हरेर्गृहे ॥
ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः ।
चतुर्विधं तदाहारं कारयित्वा यथाविधि ।
भोजयामास तान्सर्वान्यतीन्यतिवरार्चितः ॥
छित्त्वा छित्त्वा च देवेशो दुकूलानि मृदूनि सः ।
ददौ तेभ्यस्तदा विष्णुः सर्वेभ्यो जनमेजय ।
ते च प्रीता यथायोग यतः पूर्वं ततो गताः ॥

Colophon

Dn Ds₂ क्षमापरो, G₁ शान्ति॰ (for क्षम॰) —(L 2573) D₆ T₃ G₃ ब्रह्मा वा चतुरानन (for ⁰) —(L. 2574) Ds₁ G₃ M₁ ₃ सानुजौ (for ॰गौ) —(L 2575) M₁ ₄ [अ]त्र (for [अ]द्य) Dn Ds₁ T₂ ₄ G₁ ₃₋₆ मा रोषवशगो भव (for ⁰) —(L. 2577) D₆ T₄ युष्मद्द्वेष (for ॰द्रोष-) D₆ T₄ वने; T₃ G₃ M₁₋₃ यते (for हि तौ) —(L. 2579) D₅ T₁ ₃ G₃₋₆ M -गर्वितौ (for दर्पितौ) —(L. 2580) M₁ -साध्यौ तौ (for ससाध्यौ) —(L. 2582) Dn D₆ T₄ G₃ M₁₋₃ तेन (for [अ]नेन) Bom Poona eds G(ed.) विना तौ जयते महीम् (for ⁰) —(L. 2583) D₅ G₃ ताभ्यां (for तयोर्) M₄ भविष्यति; Bom Poona eds G(ed.) भवेत्तत (for भवेत न) —(L. 2585) D₆ T₄ गत्वा (for हन्ता). —(L 2587) G₃ नर (for रण-) —(L 2588) G₃ प्रीतौ (for प्रीत) —(L. 2589) Dn Ds₂ T₁ ₃ G₁ ₃₋₆ M₄ कुर्वते (for सर्वदा). —(L 2591) D₆ T₃ G₃ सर्व- (for सर्ग) M₄ -कारण (for -कारक) —(L 2595) Dn Ds₂ D₆ T₁ ₃ G₃ ₄ ₆ M₁ शब्दगोचर (for शब्दा॰) — D₆ कृष्ण (for भगवान्) —(L. 2602) Cal ed कर्म (for सत्यं) and सत्यं (for दानं) —(L 2603) D₆ G₃ नित्यं यूयं (for यूयं सर्वे) —(L. 2606) Dn₁ Ds₂ त एते (by transp); Dn₂ Ds₂ M₄ य एते D₆ G₄ M₁ ₃ ₄ विप्र (for विप्रा). D₆ T₄ प्रमाद्य, T₁ G₄ ₆ ममाद्य (for मयाद्य) —(L. 2607) D₆ T₃ M₃ विप्र —(L. 2611) D₆ T₄ G₃ विप्रान् (for सर्वान्) Dn₂ सुरार्चित (for -वरा॰) —(L. 2612) T₃ G₁ ₄ भित्त्वा भित्त्वा; T₄ छित्त्वा भित्त्वा (for छित्त्वा छित्त्वा). D₆ बहूनि (for मृदूनि) —(L. 2614) T₃ G₁ ₄ ₃ M₁ ₃ यथा (for यथ-) G₃ यतयस्तत्र ते गता (for ⁰)

Colophon — *Mention of the Epic* Ds₂ — *Mention of Khila* Dn Ds₁ D₅ T₁ ₃ ₄ G M — *Adhy name* Dn Ds₁ T₁ हंसडिभकोपाख्यानम्, D₆ M₄ हंसडिभकम्; T₃

वैशंपायन उवाच ।

दुर्वासास्त्वथ तत्रैव नारदेन सहायवान् ।
चिन्तयन्ब्रह्मणस्तत्त्वं विजहार यथासुखम् ।
भगवानपि गोविन्दस्तयोर्वधमभन्यत ॥
ततस्तौ हंसडिभकौ तस्मिन्काले महीपते ।
ब्रह्मदत्तं महीपालं पितरं वीर्यशालिनम् ।
प्रावोचतामिदं वाक्यं सामन्तजनसंसदि ॥
राजसूयं महायज्ञं पितः कुरु सुयन्त्रितः ।
अस्मिन्मासि नृपश्रेष्ठ यतामो यज्ञसिद्धये ॥
आवां तेऽद्य महाराज दिशां विजयतत्परौ ।
यतिष्यावो बलैः सार्धं रथैरश्वैर्गजैरपि ॥
सभारा यज्ञसिद्ध्यर्थमानेतव्या नृपोत्तम ।
तथेति स महाराजो ब्रह्मदत्तोऽब्रवीत्तदा ॥
जनार्दनस्तु विप्रेन्द्रो दृष्ट्वा साहसतत्परौ ।
अशक्यमिति मन्वानो वयस्यं हंसमब्रवीत् ॥
शृणु हंस वचो मह्यं श्रुत्वा निश्चित्य वीर्यवान् ।
आयुष्मन्साहसं कर्तुं निश्चितोऽसि नृपोत्तम ॥
स्थिते भीष्मे जरासंधे बाह्लीके च नृपोत्तमे ।
किं च वीरेषु सर्वेषु यादवेषु नृपोत्तम ॥
भीष्मो हि बलवान्वृद्धः सत्यसंधो जितेन्द्रियः ।
त्रिःसप्तकृत्वः पृथिवीं यो जिगाय भृगूत्तमः ।
तं युद्धे जितवान्भीष्मः सर्वक्षत्रस्य पश्यतः ॥
जरासंधस्य यद्वीर्यं तद्भवान्वेत्ति संयुगे ।
वृष्णिवीरास्तु ते सर्वे कृतास्त्रा युद्धदुर्मदाः ॥
तत्र कृष्णो हृषीकेशो जितशत्रुः कृती सदा ।
जरासंधेन सहितः सदा युद्धे जितश्रमः ।
प्रमुखे तस्य न स्थातुं शक्तो जीवन्नृपोत्तम ॥
बलभद्रस्तथा मत्तः क्रुद्धो यदि भवेद्बली ।
लोकानिमान्समाहर्तुं शक्नोतीति मतिर्मम ॥
तथा च सात्यकिर्वीरः शक्तो जेतुं रणे रिपून् ।
तथान्ये यादवाः सर्वे कृष्णमाश्रित्य दंशिताः ॥
अस्माभिश्च कृतः पूर्वं विरोधो यतिभिः सह ।
दुर्वासा यतिभिः सार्धं गतो द्रष्टुं स केशवम् ॥
इति श्रुतं नृपश्रेष्ठ ब्राह्मणाद्धेतुमागतात् ।
तथा सति यथा सिध्येत्तथा चिन्त्यं च मन्त्रिभिः ।
ततः पश्चाद्विधास्यामो राजसूयं महाक्रतुम् ॥

हंस उवाच ।

को नाम भीष्मो मन्दात्मा वृद्धो हीनबलः सदा ।
आवयोः पुरतः स्थातुं शक्तः किल स वृद्धकः ॥
यादवा इति चित्रं नः शक्ताः स्थातुं रणे द्विज ।
कश्च कृष्णः पुरः स्थातुं बलदेवश्च मत्तकः ॥
शैनेयश्चापि विप्रेन्द्र स्थातुं नालं निचिन्तता ।

G1 हसडिभकम्, G2 हसडिभके यतिभोजनम् — Adhy no D n1 291; D n2 296; T1 G1 222; T2 G1 225, T3 192; G3 218; G4 223, G5 M1 224, M1 x 168

(L. 2615) Dn Dn2 T1 2 G1 2 3 महामना (for सहायवान्) — Before lines 2617, G2 ins वैशंपायन — (L. 2617) Dn Dn2 T1 2 G1 3 4 M5 वासम्; D3 विशम् (for वधम्) — (L. 2618) Dn2 G1 4 महीपतौ, Bom. Poona eds G(ed) °पतिम् (for °पते) — (L. 2620) Dn प्रोचिनाम्, Dn2 D3 प्रोवाच तम्; M1 2 प्रोवाच तम्; M3 प्रोवाचेगाम् (for प्रावोच°) Dn Dn2 G1 2 3 समन्तात् (for सामन्त ) — (L. 2621) Dn Dn2 सुयन्त्रित; D3 संयमित; T2 सुमन्त्रित (for सुयन्त्रित ) — (L. 2622) Dn Dn2 T1 2 4 G1 3-5 यतावो (for °मो ) — (L. 2623) M1-3 दिशो (for दिशां ) — G2 om (hapl.) lines 2624–2627 — (L. 2624) D3 T2 प्रयतावो (for यतिष्यावो) — (L. 2626) Dn Dn2 G2 महाप्राज्ञो, T1 4 M5 °राज (for °राजो) — (L. 2629) T1 3 G1 3-5 निश्चय (for मह्यं) D3 T2 4 G1 4 5 M निश्चित्य (for °त्य) — (L. 2630) Dn Dn2 उद्यतो (for निश्चितो ) — (L. 2631) M1-3 भृगूद्वह (for °त्तम ) D3 T2 G2 जिगाय भृगुनन्दन (for °) — (L. 2635) T2 युद्धेषु (for तं युद्धे) — G1 om lines 2636–2637 — (L. 2639) G2 हतश्रम (for जित° ) — (L. 2640) D3 T1 M3 4 क (for न) T3 G1 3 4 5 M1 2 4 नृपोत्तम — (L. 2641) D3 सदा (for तथा) — (L. 2644) M5 4 सहिता (for दंशिता ) — (L. 2645) D3 पशुभि (for यतिभि ) — (L. 2646) T2 पशुभि (for यतिभि ) — (L. 2647) D3 सुव्रत (for श्रुत) D3 G1 3 M1 3 ब्राह्मणान्मोहमागतात् (for °) — (L. 2652) T1 G1 इत्र त्रिर (for इति द्विज) — (L. 2653) G2 कश्च ना (for कश्च ) — (L. 2654) D3 शक्नु (for विप्रेन्द्र), Dn Dn2

जरासंधस्तु धर्मात्मा बन्धुरेव सदा मम ॥
गच्छ विप्र यदुश्रेष्ठं ब्रूहि मद्वचनात्त्वरन् ।
दीयतां करसर्वस्वं यज्ञार्थं लवणं बहु ॥
लवणानि बहून्याशु गृह्य केशव माचिरम् ।
आगच्छ त्वरितं कृष्ण न ते कार्यं विलम्बनम् ।
इति ब्रूहि यदुश्रेष्ठं याहि त्वरितविक्रम ॥
न ब्रूयाश्चोत्तरं विप्र शपेयं त्वां प्रियोऽसि मे ।
मित्रभावादिदं ब्रूहि शपामि त्वां पुनः पुनः ॥
इति सचोदितो विप्रो नोत्तरं प्रत्यभाषत ।
मित्रभावात्तथा राजन्स्नेहाच्च जनमेजय ॥
जनार्दनस्तु धर्मात्मा नित्यं गन्तुं समुद्यतः ।
अद्य श्वो वा परश्वो वा गच्छामीति यतेत सः ॥
देवं द्रष्टुं जगद्योनिं शङ्खचक्रगदाधरम् ।
एक एव च धर्मात्मा हयमारुह्य सत्वरम् ॥
प्रातरेव जगामाशु द्रष्टुं द्वारवतीं द्विजः ।
हरिं कृष्णं हृषीकेशं मनसा सस्मरन्द्विजः ॥

Colophon

वैशंपायन उवाच ।

ततः प्रायाद्धरिं द्रष्टुं ब्राह्मणो ब्रह्मवित्तमः ।
हयेनैकेन राजेन्द्र त्वरितं स ययौ नृप ॥
यथा निदाघसमये सूर्यांशुपरिपीडितः ।
पान्थो याति जलं दृष्ट्वा त्वरितं तत्पिपासया ।
धावत्येव तथा विप्रो हरिं द्रष्टुं जनार्दनम् ॥
गच्छन्स चिन्तयामास चोदयन्हयमुत्तमम् ।
हंस एव यथा नित्यं कुर्यात्प्रियहितं मम ।
तथा हि प्रेषितस्तेन हरिं पश्येत्यहं प्रभुम् ॥
अहमेव सदा धन्यो मत्तो ह्यभ्यधिको न च ।
यतो द्रक्ष्याम्यहं विष्णुं वसन्तं द्वारकापुरे ॥
सा हि मे जननी धन्या हरिं दृष्ट्वा पुनर्गतम् ।
कृतार्थं सर्वथा पुत्रं द्रक्ष्यत्येषा मनस्विनी ॥
सुसमुन्निद्रहेमाब्जकिञ्जल्कसदृशप्रभम् ।
द्रक्ष्यामि देवदेवस्य चक्रिणः शार्ङ्गधन्वनः ॥
वपुर्द्रक्ष्याम्यहं विष्णोर्नीलोत्पलदलच्छवि ।
शङ्खचक्रगदाशार्ङ्गवनमालाविभूषितम् ॥
नेत्रे ते देवदेवस्य पद्मकिञ्जल्कसप्रभे ।
पश्याम्यहमदीनात्मा नष्टदुःखोऽस्मि निर्वृतः ॥
अपि द्रक्ष्यति योगात्मा सौम्येनैव स्वचक्षुषा ।
अपि वा मत्प्रियं ब्रूयात्स्वस्ति चेति च वा वदेत् ।

---

$T_2$ स्यात्तुं न इति चिन्तय, $T_1$ $G_1$ $_{3-5}$ $M_4$ स्यात्तुं न इति चिन्तना (for $^b$) — (L. 2657) Dn $D_{s3}$ सुन्दरं (for लवण) — (L. 2658) Bom Poona eds G(ed) [ब]घ (for [ना]शु) — (L. 2659) $T_1$ $_{3.4}$ G $M_{3.4}$ न ते कार्या विलम्बना (for $^b$) — (L. 2660) $D_6$ $T_1$ $_2$ $G_2$ $_3$ $M_3$ विक्रम (for °म) — (L. 2661) $M_4$ शपेऽहं (for °य) — (L. 2662) $D_6$ $G_2$ मर्षास्येतत्, M इदं वचिम (for इदं ब्रूहि) $D_{n2}$ $D_{s3}$ $G_1$ $_{3.5}$ $M_4$ पश्यामि (for शपामि) — (L. 2666) $D_6$ $T_4$ वदस्तु (for यतेत) — (L. 2668) $M_3$ उदाश्य (for आरुह्य) — (L. 2669) $M_1$ $_3$ हरिम् (for द्विज) — $T_3$ om. line 2670 — (L. 2670) $M_3$ कृष्णं विष्णुं (for हरिं कृष्णं) — After line 2670, $G_1$ ins.

2670* प्रभुं कृष्णं हृषीकेशं मनसा सस्मरन्हरिम् ।

COLOPHON — *Mention of the Epic* $D_{s2}$ — *Mention of Adhy.* Dn $D_{s2}$ $D_6$ $T_1$ $_{3.4}$ G M — *Adhy. name* Dn $D_{s2}$ $T_1$ $_3$ $G_1$ $_4$ हंसडिभकोपाख्याने जनार्दनगमनम्, $T_4$ भविष्यपर्वणि हंसडिभकम्, $G_2$ जनार्दनगमनम्, M हंसडिभकम् — *Adhy. no.* $D_{n2}$ 296, $D_{s2}$ 297; $T_1$ $G_3$ 224, $T_2$ $G_1$ 226; $T_4$ 193, $G_2$ 219, $G_4$ 223, $M_{1-3}$ 189, $M_4$ 225

(L. 2671) Dn $D_{s2}$ $T_4$ $G_3$ विष्णुं (for द्रष्टुं) — (L. 2672) M त्वरितं पुण्यवानयम् (for $^b$) — (L. 2673) $D_6$ $G_2$ -दीपित (for -पीडित) M सूर्यांशुप्रतिदीपित (for $^a$) — (L. 2674) $M_{1-3}$ ऽमलं (for याति) $G_2$ त्वरितो हि पिपासया (for $^b$) — (L. 2675) $D_{s1}$ $D_6$ $T_3$ $_4$ $G_3$ $_4$ M जनार्दन — (L. 2677) Dn $D_{s1}$ $G_3$ M प्रियो मह्य, $D_6$ यथा सत्य, $G_1$ तथा नित्य (for यथा नित्यं). $D_6$ $M_1$ $_{3.4}$ कुर्वन् (for कुर्यात्) — (L. 2678) Dn $D_{s1}$ $D_6$ $G_1$ $_3$ पश्याम्यहं (for पश्येत्यहं) — (L. 2679) $G_2$ सत्यो (for धन्यो) $G_4$ भुवि (for न च) — $D_6$ $T_3$ $G_2$ om. lines $2680^b$–$2685^a$ — (L. 2682) Dn $D_{s1}$ $T_2$ $G_1$ $_{3-5}$ देवी, $T_2$ देव (for पुत्र) — (L. 2684) Dn $D_{s1}$ $T_2$ $G_4$ $M_3$ -धन्विन (for धन्वन) — (L. 2686) $D_6$ $G_2$ -खड्ग- (for -शार्ङ्ग) — (L. 2687) $G_2$ $M_3$ $_4$ सन्निभे (for सप्रभे) — (L. 2689) $M_1$ $_3$ द्रक्ष्यसि (for °ति) — (L. 2690) $G_4$ मां (for वा) — (L. 2691) $D_6$ देवम्, $T_1$ $G_2$ देहं (for हर्षं) Bom Poona eds G(ed) ततस् (for

प्रसीदतु सदा विष्णुरयुक्तं वक्तुमिच्छतः ॥
आलोलकुण्डलयुगं हरिचन्दनचर्चितम् ।
स्फुरत्केयूररत्नार्चिर्बाहुद्वयविराजितम् ॥
सव्योद्धृतमहाशङ्खं रश्मिजालविराजितम् ।
प्रोद्यद्भास्करवर्णाभं चक्रज्वालाप्रभासितम् ॥
प्रोज्ज्वलत्कङ्कणयुतं तप्तजाम्बूनदाङ्गदम् ।
पीतकौशेयवसनं विस्तीर्णोरस्कमच्युतम् ॥
कदा द्रक्ष्यामि देवेशमिदानीमथ वान्यदा ।
सर्वथा कृतकृत्योऽहं यद्वपुर्द्रष्टुमुद्यतः ॥
नमो मह्यं नमो मह्य यतो द्रष्टुमहं हरिम् ।
उद्यतोऽस्मि जगन्नाथं बलभद्रकृतास्पदम् ।
द्रक्ष्याम्यवश्यमद्यैव विष्णुं जिष्णुं जगद्गुरुम् ॥
श्रीहारकौस्तुभरुचिस्पुरितोरुवक्षः
पीताम्बरं मकरकुण्डलपङ्कजाक्षम् ।
कृष्णं किरीटदरचक्रगदोर्ध्वहस्तं
तेजोमयं मम हरेर्वपुरस्तु भूत्यै ॥
वेदोदधौ विविधशास्त्रमहाभियोग-
निष्णातशुद्धमतिमन्दरमथ्यमाने ।
उद्द्योतमानममरैरनिशं निषेव्यं
नारायणाख्यममृतं प्रपिबामि चाद्यम् ॥
ध्येयं मुमुक्षुभिरमेयमनाद्यनन्तं
स्थूलं सुसूक्ष्मतरमेकमनेकमाद्यम् ।
ज्योतिस्त्रिलोकजनकं त्रिदशैकवन्द्य-
मक्ष्णोर्ममास्तु सततं हृदयेऽच्युताख्यम् ॥
चिन्तयन्निति विप्रेन्द्रो ययौ द्वारवतीं पुरीम् ।
मत्वा कृतार्थमात्मानं वाहयन्हयमुत्तमम् ।

Colophon.

वैशंपायन उवाच ।

स निवेदितसर्वस्वो द्वाःस्थेन हि जनार्दनः ।
अथ प्रविश्य धर्मात्मा सुधर्मां वै द्विजोत्तमः ॥
अपश्यद्देवदेवेशं सुधर्माकृतिसंस्थितम् ।
बलभद्रेण संयुक्तमध्यासितमहासनम् ॥
अग्रतःस्थितगाङ्गेयं पार्श्वतःस्थितनारदम् ।
दुर्वाससा कृतकथमुग्रसेनपुरःसरम् ॥
गायद्गन्धर्वमुख्यैश्च नृत्यदप्सरसां गणैः ।
सेव्यमानं महाराज सूतमागधवन्दिभिः ॥
उद्गीयमानयशसं माधवं मधुसूदनम् ।
उद्गीयमानं विप्रैश्च सामभिः सामगैर्हरिम् ॥
दृष्ट्वा प्रीतमना विष्णुं प्रोवाच पुलकच्छविः ।
नाम्ना जनार्दनोऽस्मीति ननाम चरणौ हरेः ।

-युत (for -युग) — (L. 2737) D6 G3 स्फुरत्किरीटकेयूररत्ना[र्चि]र्बहुराजितम् — T1 om lines 2738–2739 * D5 T4 G3 om line 2738 — (L. 2738) Dn G3 . 5 सव्ये द्योतन्; T2 G1 . 5 सव्योद्यत (for सव्योद्धृत) T2 M1–3 -महाशङ्ख (for °ङ्खं) — (L. 2739) Dn Ds1 T1 G1 3–5 M1 चक्रज्वालाविराजितम्, D6 °प्रभासितम्, G3 °महासितम् (for °) — (L. 2742) M1 3 गोविन्दम् (for देवेशम्) — (L. 2747) Dn T1 3 G श्रीकौस्तुभोद्भवरुचि (for श्रीहारकौस्तुभ) — (L. 2748) D5 T4 -पद्मजाक्षम्, G2 °जाङ्गम् (for °जाक्षम्) — (L. 2749) Dn Ds1 T2 G1 3 4 5 M3 -चर, T1 -धर (for -दर) D5 T4 G3 कृतोर्ध्वहस्तम् (for गदोर्ध्व°) — Ds2 om lines 2751–2773 — (L. 2751) Dn विशद- (for विविध) T2 -योगे (for योग) — (L. 2754) D5 प्रविशामि (for प्रपिबामि) Dn D5 चाद्य, T1 3 5 G1 4 चाद्य (for चाद्यम्) — (L. 2755) D6 अनन्तमीड्यं, T4 अनन्तमाद्यं (for अनाद्यनन्तं). — (L. 2757) M2 4 -जननं (for °कं) — (L. 2758) G3 क्षेमे (for अक्ष्णोर्) D5 T4 हृदये (for सततं) D5 T4 अनिशम्, M2 धृतम् (for हृदये) — (L. 2760) D5 G3 कृत्वा (for मत्वा) M1 3 चोदयन् (for वाह°) D5 हरिम् (for हयम्)

Colophon om in Ds2 — *Mention of Khila* Dn Ds1 T1 2 4 G1 4 M — *Adhy name* Dn हंसडिम्भकोपाख्यानम्, T1 3 G1 M4 हंसडिम्भकोपाख्याने जनार्दनकृतार्थताबुद्धि, T4 हंसडिम्भकोपाख्याने विप्रस्य द्वारवतीगमनम्, G3 जनार्दनकृतार्थताबुद्धिः — *Adhy no* Dn 297, T1 G3 225; G3 220, G1 224, M1–3 190, M4 226

G3 om the ref — (L. 2761) D5 T4 G3 ततो निवेदितसर्वो (for °) T4 G1 स (for हि) — (L. 2763) M4 अथ प्रविश्य देवेश (for °) D6 T1 4 G3 M1 4 -कृत; M1 3 मध्य (for कृति) — G3 om lines 2766–2770 — (L. 2766) Dn T1 2 G1 4 5 -पुरस्कृतम् (for -पुरःसरम्) — (L. 2769) D6 G3 M उत्कृष्यमानयशसं (for °) — (L. 2770)

शब्दं शब्दविदः प्राहुस्त्वामेव पुरुषोत्तम ।
तथा सति हृषीकेश किं त्वमात्थ वदेति माम् ॥
तथापि शृणु देवेश चोदितोऽसि यतस्त्वया ।
वदेऽन्यसदृशैनैतत्तस्माद्वक्ष्यामि माधव ॥
राजसूयेन यागेन ब्रह्मदत्तोऽद्य यक्ष्यति ।
तदर्थं प्रेषितस्ताभ्यां हंसेन डिभकेन च ॥
करार्थं यदुमुख्येभ्यस्तत्र चामन्त्रणाय च ।
लवणं बहु देयं ते यज्ञार्थं तस्य केशव ॥
इत्यर्थं प्रेषितस्ताभ्यां करं देहि तदाज्ञया ।
इदमप्यपरं ताभ्यामुक्तं शृणु जगत्पते ॥
लवणानि बहून्याशु प्रगृह्य त्वरितो भवान् ।
आगच्छतु तयो राज्ञोः सेवां केशव वाग्विभो ॥
इत्युक्तवति विप्रेन्द्रे दूते तत्र तयोर्नृप ।
प्रहस्य सुचिरं कृष्णो बभाषे दूतमीश्वरः ॥
शृणु दूत वचो मह्यं युक्तमुक्तं द्विजोत्तम ।
करं ददामि ताभ्यां तु करदोऽस्मि यतो नृप ॥
धार्ष्ट्यमेतत्तयोर्विप्र मत्तो यत्तु करग्रहः ।
अहो धार्ष्ट्यमहो धार्ष्ट्यं तयोः क्षत्रियबीजयोः
इदमश्रुतपूर्वं मे मत्तो यस्तु करग्रहः ।
इत्युक्त्वा केशवो दूतमिदमाह स्म यादवान् ॥
हास्यमेतद्यदुश्रेष्ठा मत्तो यत्तु करग्रहः ।
यष्टासौ राजसूयस्य ब्रह्मदत्तो महीपतिः ॥
तौ तं याजयितारौ च हंसो डिभक एव च ।
बोढा किल यदुश्रेष्ठा लवणस्य दुरात्मनोः ॥
करदो वासुदेवोऽहं जीवामि यदुसत्तमाः ।
हास्यं हास्यमिदं हास्यं शृणुध्वं यादवा वचः ॥
इत्युक्तवति दाशार्हे बलभद्रपुरोगमाः ।
यादवाः सर्व एवैते हासाय समवस्थिताः ॥
करदः कृष्ण इत्येवं ब्रुवन्तः सर्वसात्वताः ।
हासं मुमुचुरत्यर्थं तलं दत्त्वा परस्परम् ।
तलशब्दो हास्यशब्दो रोदसी पर्यपूरयत् ॥
स च विप्रो नृपश्रेष्ठ निन्दयन्मैत्रमात्मनः ।
अहो कष्टमहो कष्टं दौत्यं यत्कृतवानहम् ।
इति लज्जासमाविष्टस्तूष्णीमासीदवाङ्मुखः ॥

Colophon.

Dn T1 G1 5 लिप्य (for त्रिश्णो) M2 ज्ञानामेनीह केशव (for ᵇ) — G2 om (hapl) lines 2807 2811 — (L 2807) T2 प्रागमिद (for °मिद) D6 T2 4 M2 प्रोचुस् (for प्राहुस्) M3 स्वामेव जगतीपते (for ᵇ) — (L 2810) D6 T4 यथा (for यतस्) Ds2 तथा पि श्रूयतां देव (for ᵃ) — (L 2812) Ds2 D6 द्वेवेश, T4 देवेन, G2 M यज्ञेन (for यागेन) G2 ऽत्र (for ऽद्य) Dn T2 4 G1 3 M4 यक्ष्यते (for °ति) — (L 2813) D6 G2 ततोऽहं, T4 तथाह (for तदर्थं) Dn2 Ds2 om lines 2813ᵇ-2816ᵃ — (L 2817) Dn T1 2 G M त्वम् (for अपि) — (L 2819) D6 T4 तयोराज्ञा (for तयो राज्ञो) — (L 2820) इत्युक्ते तत्र विप्रेन्द्रे (for ᵃ) — (L 2823) M1 2 नृपे (for नृप) — (L 2824) Ds2 अन्यत्, T4 एव (for एतत्) T1 2 G1 2 4 6 यस्तु (for यत्तु) — (L 2825) D6 वीर्यं (for the second धार्ष्ट्यं) Dn2 Cal ed वीरयो (for बीजयो) — (L 2826) Ds2 यत्र, D6 M2 यत्तु (for यस्तु) — M1 om (hapl) lines 2827-2828 T4 om line 2827 — (L 2827) Dn2 Ds2 D6 यादव (for °वान्) — G1 M1 om (hapl) line 2828 — (L 2829) Ds2 राजसूयेन (for °यस्य) — (L 2831) Dn T1 G2 4 M3 4 यदुश्रेष्ठो (for °ष्ठा) Ds2 G1 5 दुरात्मन°. — (L 2832) Dn T1 2 G1 3 5 नितोऽस्मि (for जीवामि) M3 नृप- (for यदु) — M1 om lines 2833 2834 — (L 2833) T2 भस्य (for the first हास्य) Dn Ds2 D6 T1 2 4 M1-3 भूय (for the third हास्यं) — (L 2834) Dn T1 2 G1 3 5 M2 द्वेवेशे (for दाशार्हे) — (L 2835) Ds2 शमाय (for हासाय) — (L 2837) Ds2 हास्यं (for हास) Ds2 तालान् (for तल) — (L 2838) बलदर्पा (for तल दत्त्वा) — (L 2839) Ds2 स विप्रो नृपतिश्रेष्ठ (for ᵃ) G1 3 4 M1 नन्दयन्, G3 निरधन्, G5 निन्दया (for निन्दयन्) Dn Ds2 D6 T1 2 4 G M4 मित्रम् (for मैत्रम्) — (L 2841) G2 -समायुक्तस् (for °विष्टस्) M1 अधोमुख (for अवाङ्मुख)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Adhy name* Dn Ds2 T1 2 G1 हंसडिभकोपाख्याने वासुदेववाक्यम्, G3 वासुदेववाक्यम्, M हंसडिभकम् — *Adhy no* Dn 299, Ds2 295, T1 G3 296, T2 G1 228, T4 195, G4 121, G5 225, G6 297, M 191.

तस्य तद्वचनं श्रुत्वा हंसः प्राह वचस्तदा ।
श्रुत्वा समागतः पूर्वमद्य दृष्टो मया त्वसौ ॥
धनुर्वेदे च वेदे च शस्त्रशास्त्रे तथैव च ।
निपुणोऽय सदा शूर इत्येवमनुशुश्रुमः ।
अथ दृष्टिपथं प्राप्तः प्रीतिं मे विदधात्यसौ ॥
कुशलं वासुदेवस्य बलदेवस्य चापि वा ।
कुशला सात्वताः सर्वे उग्रसेनपुरोगमाः ॥
तथेति सात्यकिः प्राह मन्दमुन्मिषिताननः ।
ततो जनार्दनं प्राह हंसो वाक्यविशारदः ॥
अपि दृष्टस्त्वया चक्री सिद्धं न कार्यमीहितम् ।
वद सर्वमशेषेण मा वृथा कालमत्यगाः ॥

Colophon

वैशंपायन उवाच ।
इत्युक्तवति हंसे च धर्मात्माथ जनार्दनः ।
उवाच प्रसहन्वीरः स्तुवन्नारायणं तदा ॥
अद्राक्षमद्राक्षमहं जनार्दनं
करस्थचक्रं वरशङ्खधारिणम् ।
आतप्तजाम्बूनदभूषिताङ्गं
स्फुरत्प्रभाशोभितरत्नधारिणम् ॥
अद्राक्षमेनं यदुभिः पुरोगतं
ससेव्यमानं मुनिवृन्दमुख्यैः ।
सस्तूयमानं प्रभुनन्दिमागधैः
स्मितप्रवालारुणपल्लवाधरम् ॥
अद्राक्षमेनं कविभिः पुरातनै-
र्विविच्य वेद्यं विधिवत्सहामरैः ।
प्रफुल्लनीलोत्पलशोभितश्रियं
विनिद्रहेमाब्जविराजितोदरम् ॥
भूयोऽहमद्राक्षमजं जगद्गुरुं
प्रसादयन्तं वचनेन यादवान् ।
निरूपयन्तं विधिवन्मुनीश्वरैः
प्रवृद्धवेदार्थविधिं पुरातनैः ॥
अद्राक्षमद्राक्षमहं पुनः पुनः

---

Dn T1 G3 4 सुखं यदा ( for यथासुखं ) — ( L 2877 ) D6 T1G3 M1-3 अथ हंसडिबकयोर् ( for ° ) — ( L 2878 ) T3 ऽहं ( for ऽय ) D6 T4 G2 असौ ( for अयं ) — ( L 2880 ) Dn3 Ds2 G2 M4 श्रुत , T1 G3 5 दूरया , T3 G1 4 दूरय ( for श्रुत्वा ) G1 समागतं , G2 M4 °गम ( for °गत ) — ( L 2881 ) G5 शास्त्रे ( for वेदे ) Dn T1 3 G1 3 M4 शास्त्रे शस्त्रे , Ds2 शास्त्रे शास्त्रे , G4 वेदशास्त्रे ( for शस्त्रशास्त्रे ) — ( L 2882 ) Dn य ( for ऽय ) Ds2 M4 धीर , D6 T4 M1-3 वीर ( for शूर ) — ( L 2883 ) Dn T1 3 G1 ततो , Ds2 D6 T4 M4 अथो , G2 अहो , M3 अतो ( for अथ ) T3 प्राप्य ( for प्राप्त ) Ds2 नो , Bom Poona eds G(ed) नौ ( for मे ) — ( L 2884 ) Ds2 D6 T4 G M बलभद्रस्य ( for °देवस्य ) Ds2 वा पुन ( for चापि वा ) — ( L 2886 ) G1 ततो हि ( for तथेति ) Ds2 G2 3.4 मन्दमुन्मथिताननः ( for ° ) — ( L 2888 ) G4 सनद्ध ( for सिद्धं न ) — ( L 2889 ) T3 अत्यगात् ( for °गा )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 3 4 G M — *Adhy name* Dn Ds2 T1 3 G1 हंसडिभकोपाख्याने हंसवाक्यम् ; G3 हंसवाक्यम् , M3 4 हंसडिभकम् — *Adhy no* Dn Ds2 300 ; T1 G3 228 , T3 G1 230 , T4 197 ; G2 123 , G4 227 ; G5 229 , M 193

D6 T1 3.4 G1 3 4 5 M om lines 2890 2891 with the ref. Before, line 2892 Dn1 T3 4 G2 M ins जनार्दन — ( L 2892 ) T3 G1 महाधन ( for जनार्दनं ) — ( L 2893 ) Ds2 T1 4 G3 5 M हस्तस्थ- ( for करस्थ ) T3 G1 4.5 -शार्ङ्गं ( for -चक्रं ) Ds2 T1 3 4 G M -चक्र ( for -शङ्ख ) — After line 2895 D6 ins

22** अद्राक्षमेनं यदुभिः पुरातनै-
र्विविच्य वद्य विधिवत्सहामरैः ॥
प्रफुल्लनीलोत्पलशोभितश्रियं
विनिद्रहेमाब्जविराजितोदरम् ॥

— ( L 2896 ) Dn T1 3 G1 3 4 यतिभि , M4 कविभि ( for यदुभि ) Dn Ds2 G3 M4 पुरातनै ; D6 पुरागतै ; T4 G4 पुरोगतै ( for °गत ) — ( L 2898 ) Ds2 प्रभुसूतमागधै ; T4 G3 प्रभवादि° , G1 प्रभुभि स° , G4 5 मुनिवृन्दमुख्यै ( for प्रभुनन्दिमागधैं ) — ( L 2899 ) D5 स्मत्- ( for स्मित- ) Ds2 G3 -प्रवालाधर ( for °रुण ) Ds2 -पल्लवारुणम् ( for °धरम् ) — D6 om lines 2900-2903 — ( L 2900 ) M1-3 कृतिभि ( for कविभि ) — ( L 2902 ) Dn G2 5 -शोभित श्रिया ( for -शोभितश्रियं ) — ( L 2904 ) D6 M1-3 विभु , G3 द्रुम ( for अज ) — ( L 2905 ) Ds2 G2 प्रमोदयन्तं ( for प्रसाद° ) — ( L 2906 ) T3 विविधं ( for विधि- वन् ) — ( L 2907 ) Ds2 G1 4 5 प्रवृत्त , D6 T4 प्रबद्ध- G3 प्रबुद्ध- ; M1 3 विवृद्ध ; M3 वेदार्थ ( for प्रवृद्ध- ). T3

समस्तलोकैकहितं प्रभुं हरिम् ।
वसन्तमस्मिञ्जगतो हिताय
जगन्मयं तं परिभूय शत्रून् ॥
भूयोऽप्यपश्यं सह यादवेश्वरै-
र्विक्रीड्य विक्रीड्य विहारकाले ।
रमन्तमीड्यं रमयन्तमीश्वरा-
न्यदूत्तमान्यादवमुख्यमीश्वरम् ॥
भूयोऽप्यपश्यं सरसीरुहेक्षणं
सार्धं तया भीष्मतनूजया हरिम् ।
वसन्तमम्भोनिधिशायिनं विभुं
भक्तप्रियं भक्तजनास्पदं हरिम् ॥
अद्राक्षमद्राक्षमहं सुनिर्वृतः
पिबन्पिबंस्तस्य वपुः पुनः पुनः ।
नेत्रेण मीलद्विवरेण केवलं
धन्योऽहमेवेति सदा व्यचिन्तयम् ॥
अद्राक्षमम्भोजयुगं दधानं
प्रभुं विभुं भूतभवप्रभावनम् ।
आद्यं ककुद्मानमुरुं विभावसुं
संस्मृत्य संस्मृत्य तमेव निर्वृतः ॥

अद्राक्षं जगतामीशं वक्षोराजितकौस्तुभम् ।
वीज्यमानं हरिं कृष्णं चामराणां शतैः सदा ॥
युवां विद्वेषयुक्तेन चेतसा यादवेश्वरम् ।
स्मरन्तं सर्वदा विष्णुं क या तौ क च वेति वा ॥
कुतो द्रक्ष्यामि तौ मन्दौ कुतो वा मत्पुरोगतौ ।
ध्यायन्तमित्थं देवेशं करसंश्रयणात्तदा ॥
हसन्तमेवमद्राक्षं करं देहस्थितः परम् ।
वदन्तं नारदे वाचं दुर्वासिसि यतीश्वरे ॥
अक्षसूत्रपदां वाणीं दापयन्तं मुनीश्वरान् ।
दृष्ट्वा दृष्ट्वा हरिं देवं पुनः पुनरचिन्तयम् ॥
असाध्यमिदमारब्धं वाभ्यामिति नृपोत्तम ।
नारब्धव्यमिदं कार्यमितःप्रभृति भूमिप ॥
निवृत्ता सा कथा हंस यत्करग्रहणं तव ।
एष तेऽशेषमखिलं वक्ष्यत्येव हि सात्यकिः ॥
एतद्वचनमाकर्ण्य हंसः क्रुद्धोऽब्रवीद्वचः ।
अरे ब्राह्मणदायाद का नाम तव वागियम् ।
आवयोः पुरतो वक्तुं त्रैलोक्यं जेतुमिच्छतोः ॥
मायया त्वां भ्रमत्येष कृष्णो लीलाविधानवित् ।
तं दृष्ट्वा भ्रम एवैष तव संजायते महान् ॥

---

$G_{1,3-5}$ $M_{1-3}$ निधि (for -निधि). — (L. 2908) $G_3$ पुरातनं (for पुन पुनः) — (L. 2909) $D_{S2}$ $D_6$ $T_3$ $G_3$ -हितैषिणं (for हितं प्रभुं). — (L. 2911) $D_{S2}$ $G_{4,5,6,8}$ $M_4$ तान् (for तं). — $G_3$ om lines 2912–2915. — (L. 2913) $T_4$ $G_4$ त्रिक्रीड्यमानं च (for °ड्य विक्रीड्य). — (L. 2914) $M_1$ 2 ईशान् (for ईश्वरान्). — (L. 2917) $D_{S2}$ $T_4$ $G_{1,4,6}$ समेतया (for सार्धं तया) — (L. 2918) $D_{n2}$ $D_6$ $T_6$ हरिं (for विभुं). — (L. 2919) $D_{n2}$ विभुम्; $D_{S2}$ $D_3$ $T_1$ $G_3$ M शिवम् (for हरिम्) — $M_1$ om lines 2920–2923. — (L. 2921) $D_{S2}$ $D_6$ $T_1$ $G_3$ पुरातनम् (for पुन. पुनः). — (L. 2922) $D_{S2}$ मौलिभ्रमरेण; $M_{2,6}$ मीलद्विरहेण (for मीलद्विवरेण). — (L. 2923) $D_n$ $D_{S2}$ $T_3$ $G_3$ $M_3$ आसि (for एव) $T_1$ $G_{1,6}$ विचिन्तयन् (for व्यचिन्तयम्). — (L. 2924). $T_1$ सनातनं (for दधानं). — (L. 2925) $D_6$ [illegible] °त्रवि- [illegible] °भव- [illegible] ). [illegible] 31)

$D_{S2}$ स्मरन्तौ; $T_3$ $G_3$ °तां (for °न्तं). Bom, Poona eds G(ed) क चैते क च वेति क- (for °). — (L. 2932) $D_{S2}$ $D_6$ $T_4$ $G_3$ M क च, $T_1$ क तु (for कुतो). — (L. 2933) $D_3$ गायन्तम् (for ध्याय°). $D_{S2}$ इय; $D_3$ अयं (for इत्थं). $M_{1-3}$ तत्र (for तदा). $D_{S2}$ $G_3$ करे दाद्य( $G_3$ दाद्य विहं सदा (for °). — (L. 2934) $D_{S2}$ $T_1$ $G_1$ 2 $M_4$ पुनम् (for एवम्). — (L. 2935) $D_3$ यतीश्वरे. (for °श्वरे). — (L. 2936) $D_{S2}$ दीपयन्तं; $D_6$ $T_4$ गाय° (for दाप°). $D_n$ $D_{S2}$ $G_{1,2,4,6}$ मुनीश्वरम्; $D_5$ $T_4$ यतीश्वरान् (for मुनी°). — (L. 2937) $D_{n2}$ $G_3$ $M_1$ 2 [स]ह सं; $D_3$ $T_4$ चाहं (for the second दृष्ट्वा). $M_3$ विष्णुं (for देवं). $D_{S2}$ सर्वमिदम् (for अचिन्तयम्). — (L. 2940) $D_{S2}$ निवृत्तोऽस्मि (for °त्ता सा). Bom. Poona eds. G(ed) [स]चिन्तयन्; Cal. ed यत्कथा (for यत्कर-). — (L. 2941) $D_n$ ते सर्वम्; $D_{S2}$ निवृत्तम् (for तेऽशेषम्). Bom. Poona eds. G(ed.) तद्वृत्तमखिलं सर्वं (for °). $D_{S2}$ वदिष्यति (for वक्ष्यत्येव) — Before line 2943, $D_n$ $D_{S2}$ ins हंस उवाच. — (L. 2943) $M_{1,2}$ रे रे (for अरे). $D_{S2}$ G(ed) तन्ना मात्रेव वापि तव (for °).

गिरीशनरदर्पेण ब्रूयादसदृशं वचः ॥
सहाया वयमेवैते वलभद्रपुरोगमाः ।
प्रथमो वलभद्रोऽसौ द्वितीयोऽहं स सात्यकिः ॥
कृतवर्मा तृतीयस्तु चतुर्थो निशठो बली ।
पञ्चमोऽथ च बभ्रुस्तु षष्ठश्चैवोल्कलः स्मृतः ॥
सप्तमः सारणो धीमानस्त्रशस्त्रविशारदः ।
अष्टमस्त्वथ सारङ्गो नवमो विपृथुस्तथा ।
दशमश्चोद्धवो धीमान्वयमेते बलान्विताः ॥
नरयैते पुरतो गोषु शङ्खचक्रगदाभृतः ।
देवदेवस्य युद्धेषु तिष्ठन्त्येव दिवानिशम् ॥
यौ हि वीरौ युवां तस्य स्वात्मना सदृशौ बले ।
तावेव यां क्षमौ युद्धे हन्तुं बलमदान्वितौ ॥
यो गिरीशो गिरावेव वरं दत्त्वा स तिष्ठति ।
युवां हि पैनली युद्धे तिष्ठथः सशरं धनुः ।
गृहीत्वा शत्रुभिः सार्धं युद्धं कर्तुं समुद्यतौ ॥
ईदृशेष्वथ भृत्येषु युद्धं कुर्वत्सु शत्रुभिः ।
त्रैलोक्यं रक्षतस्तस्मात्करमिच्छन्व्रजेत कः ॥
हनिष्यत्येष वा युद्धे त्रैलोक्यं योऽद्य रक्षति ।
शरेण निशितेनाजौ शार्ङ्गमुक्तेन केवलम् ॥
क नः समाम इत्येवं पुनराह जगत्पतिः ।
पुष्करे पुण्यदे नित्यमुत गोवर्धने गिरौ ॥
मथुराया प्रयागे वा दर्शयेतां बलानि मे ।
शङ्खचक्रधरे देवे जगत्पालनतत्परे ॥
राजसूयं महायज्ञं यष्टुमिच्छति कः स्वयम् ।
यदन्या स्वस्तिमान्मर्त्यस्त्वया विना को व्रजेत्पुरम् ॥
इदं जाड्यमिदं मौढ्यमिदमत्यद्भुतं वचः ।
इदमिच्छसि चेन्मूढ हास्यतां यासि भूतले ।
इत्युक्त्वा सात्यकिर्वीरो हसन्निव विभो स्थितः ॥

Colophon

वैशंपायन उवाच ।

ततः क्रुद्धो महाराज हंसो डिभक एव च ।
इदं प्रावोचतां वाक्यं रोषव्याकुलितेक्षणौ ॥
दिधक्षन्तौ दिशः सर्वाः सर्वान्वीक्ष्य नृपोत्तमान् ।
करं करेण निष्पीड्य स्मरन्तौ तद्वचो महत् ॥
क नु क वा नन्दसूनुः क वा रामो बलोत्कटः ।
इति ब्रुवाणौ साक्षेपौ सात्यकिं सत्यसंगरम् ॥

---

2976 ) G₃ नृपाधम ( for नरा° ) — ( L 2977 ) D₆ को नाम जीवितकाङ्क्षी ( for ° ) T₁ G₁ ₃ तिष्ठत्यरेस्मय वै ( for ° ) — ( L 2978 ) D₆ M₃ ₃ गर्वेण ( for दर्पेण ) Dn G₃ M₁ को मृषादीदृश वच ( for ° ) — ( L 2981 ) G₃ तृतीय कृत वर्मा च ( for ° ) — ( L 2982 ) D₆ कङ्कस् ( for बभ्रुस् ). M₁ [उ]न्मुग ; M₂₋₄ [उ]ल्मुक ( for [उ]ल्कल ) D₆ षष्ठस्तु विपृथु स्मृत ( for ° ) — ( L 2983 ) Dn G₃ ₄ सारणो ( for सा° ) D₆ T₁ G₃ सप्तमस्तु महाराज यादव कक्ष एव हि — ( L 2984 ) D₆ T₁ G₃ नवमोऽपि विदूरथ ( for ° ) — ( L 2986 ) Dn Ds₁ T₁ ₃ G स पुते ( for नस्यैते ) Dn₃ M₃ ₃ गोर्षु ( for गोषु ) — ( L 2987 ) D₆ T₄ G₂ महायशा ( for दिवानिशम् ) — Dn G₃ om line 2988 — ( L 2988 ) Ds₁ T₁, ₃ G₁ ₄ नामन्यसदृशौ बले ( for ° ) — ( L 2989 ) D₆ काङ्क्षितो ( for यां क्षमौ ) Dn₁ हन्तु मदबलान्वितौ ( for ° ) — ( L 2990 ) T₂ G₁ ₄ गिरा देवो. G₃ हि वरदो ( for गिरा देव ) Dn T₁ G₃ [अ]पि , T₁ G₁ ₃ [अ]प ( for स ) — ( L 2991 ) Dn T₁ G₃ केवलं ( for °लौ ) — ( L 2992 ) Dn समारूढौ ( for समुद्यतौ ) — ( L 2994 ) T₃ रक्षणात् ( for रक्षतस् ). — ( L 2997 ) G₃ पश्य ( for क न° ) — ( L 2998 ) Dn G₃ ₃ पुण्यगे ( for °दे ) G₁ मुत्तम् ( for गिरौ ).

— ( L 2999 ) Bom Poona eds G(ed ) दर्शयन्तौ ( for °येतां ) — ( L 3000 ) D₆ शङ्खचक्रधरो देव ( for ° ) — ( L 3001 ) Ds₁ D₃ T₁ ₃ G₂ ₃ ₄ M₁ ₃ ₄ कर्तुम् ( for यष्टुम् ) — ( L 3003 ) G₁ वाच्यम् ( for जाड्यम् ) T₃ मौर्ख्यम् ( for मौढ्यम् ) — ( L 3004 ) Ds₁ कर्तुं ( for मूढ ). — ( L 3005 ) Dn G₃ मुनि ; Ds₁ T₂ G₁ ₄ M₁ विभु , G₃ प्रभु ( for विभो ) D₃ T₄ G₃ जगत्पते ( for विभो स्थित )

Colophon — *Mention of the Epic* Ds₁ — *Mention of Khila* Dn Ds₁ D₃ T₁ ₃ G M — *Adhy name* Dn Ds₁ T₁ ₃ G₁ ₃ हंसडिभकोपाख्याने सात्यकिवाक्यम् ; M हंसडिभकम् — *Adhy no* Dn Ds₁ 301 , T₁ G₃ 229 ; T₃ G₂ 231 ; G₁ 224 ; G₄ 227 ; G₃ 230 , M₁₋₃ 194 ; M₄ 193

T₁ G₄ om the ref — ( L 3006 ) Bom Cal eds. क्रुद्धौ ( for क्रुद्धो ) — ( L 3007 ) Dn Ds₁ T₁ ₃ G₁ ₃₋₄ वै प्रोचतुर् ( for प्रावोचता ) D₃ क्रोध ( for रोष ) — ( L 3008 ) Ds₁ दृष्ट्वा दिशः ( for दिशः सर्वाः ) — ( L 3009 ) Ds₁ T₃ G₂ ₃ ₄ करेण निष्पीड्य करे ( for ° ) G₃ कम्पते ( for तद्वचो ) — ( L 3010 ) M₁ ₃ नन्दसुत ( for °सून् ) D₆ T₄ क नु नन्दसुत कृष्ण ( for ° ). D₆ G₃ M₂₋₄ बलोत्कटः T₃

अरे यादवदायाद किं ब्रूपे न पुरोगत ।
इतो निर्गच्छ मन्दात्म दूतस्त्वमसि साप्रतम् ॥
अन्यथा वध्य एव त्व प्रलपन्परुष वच ।
सत्य निर्लज्ज एवासि यद्ब्रूया ईदृश वच ॥
आवामिद जगत्सर्वं शासितु सयतौ नृपौ ।
को नाम मानुषे लोके करदो नैव जीवति ॥
हत्वा गोपालक सख्ये वध्वा यादवका बहून् ।
गृह्णीम करसर्वस्व ततो गच्छ नराधम ॥
अवध्यो दूतता प्राप्तो बहुबद्ध प्रभाषसे ।
ईश्वरौ नौ वर दाता ह्यावाणामपि च प्रभु ॥
रक्षितारौ महाभूतौ सग्राम गच्छतोश्च नौ ।
पितर याजयिष्यावो हत्वा गोपालकारणे ॥
एते प्रोक्ता भृश युद्धे कातरा सर्व एव ते ।
हत्वा तान्सबलान्युद्धे पुनर्नेष्याव केशवम् ॥
सरक्रव्या महासेना प्रगृहीतशरासना ।
गृहीतप्रासमुसला गृहीतकवचा सदा ॥
आरूढरथसाहस्रगदापरिघसकुला ।
सुप्रभूते धनवती प्रभूतयवसाकुला ॥

प्रभूतनल्वसयुक्ता सकुलीका सतोमरा ।
सच्छत्रा सध्वजा चैव सभटा साधु साम्बरा ॥
कल्प्यता वाहिनी घोरा बलाध्यक्षा समन्तत ।
अवध्य एव गच्छ त्व न ते मरणतो भयम् ॥
सग्राम पुष्करेऽस्माक श्व परश्वोऽपि वा नृप ।
ततो ज्ञास्यावहे वीर्यं केशवस्य बलस्य च ।
ये त्वयोक्ता नृपा सख्ये तेषामपि च यद्बलम् ॥

सात्यकिरुवाच ।

एष गच्छामि वा हन्तु श्व परश्वोऽपि वा नृपौ ।
अद्यैव हि मया वध्यौ न चेद्दूतो भवाम्यहम् ॥
न हि श्वो वा परश्वो वा युवा कटुकभाषिणौ ।
दौत्य हि तु समखिल भवत्येव सदा नृणाम् ॥
अन्यथाह युवा हत्वा ततो यास्यामि निर्वृतिम् ।
स्ववीर्यं बाहुदर्प च दर्शयश्च नृपाधमौ ॥
शङ्खचक्रगदापाणि शार्ङ्गधन्वा किरीटभृत् ।
नीलकुञ्चितकेशाढ्यो लम्बबाहु श्रिया वृत ॥
स सर्वलोकप्रभवो विश्वरूप सुरूपवान् ।
दैत्यदानवहन्तासौ योगिध्येय पुरातन ॥

बलोद्धत ( for कट ) — ( L 3011 ) D6 T4 G2 M1 3 साक्षेप ( for पौ ) — ( L 3012 ) T1 3 G1 3 5 पुरो वद T4 G2 M4 पुरा नृप ( for पुरागत ) — ( L 3015 ) D6 M3 स त्वं ( for सत्य ) T4 G2 यादृग ( for ई ) — ( L 3016 ) T2 शासितौ ( for तु ) T4 शसनौ G2 शासितौ ( for सयतौ ) — ( L. 301 ) D6 T4 G2 कर म न ( T4 नो ) ददाति वै ( for ° ) — ( L 3018 ) M1 युद्ध ( for सख्ये ) Dn T1 3 G1 3 5 हत्वा गोपालकान् सर्वान् ( for ° ) M1 हत्वा ( for बध्वा ) Ds1 बलान् ( for बहून् ) — ( L. 3019 ) D6 T4 M4 नृपाधम ( for नरा ) — ( L 3021 ) Dn Ds M3 नो ( for नौ ) G2 दद्याद् ( for दाता ) — ( L 3022 ) Ds1 तै T4 तौ ( for नौ ) — D6 T2 G4 om lines 3023 3029 — ( L. 3023 ) Ds2 G3 5 M जित्वा ( for हत्वा ) Ds2 G1 3 M1 3 गोपालकं ( for °कान् ) — ( L 3024 ) M नृपा ( for भृशं ) — ( L. 3025 ) Ds1 जप्यामि T1 3 M 3 म ( for व ) — ( L 3026 ) Dn G1 सहत या T सस ( for सरक ) — ( L. 3028 ) Ds2 T3 G 3 5 M 4 साहस्रा ( for साहस्र ) — ( L. 3029 ) Dn T 3 G1 3 5 प्रभूतबलसाधना ( for ° ) — Ds1 om lines 3030 3031 — ( L. 3030 ) T4 G2 -सपक्षौ ( for सयुक्ता )

D6 T4 G2 सकुठारा ( for टीका ) T4 G2 सतोमरौ — ( L. 3031 ) D6 T4 G2 M4 वीरा ( for चैव ) D6 T4 G2 सुभगा ( for सभटा ) Dn2 D6 T1 3 G1 3 सभटा सायुधाम्बरा ( for ° ) — ( L 3032 ) T4 G2 चाल्यता ( for कल्प्यता ) M1 3 बलाध्यक्षै ( for क्षा ) — ( L 3033 ) T4 वध्यास्त्र ( for अवध्य ) D5 मृत्युन ते ( for मरणतो ) — ( L. 3035 ) Ds2 D6 T1 3 G1-4 M ज्ञास्यामहे ( for वह ) T3 सर्वं ( for वीर्यं ) — ( L 3036 ) M3 सर्वे ( for सख्य ) Cal ed मयि ( for अपि ) — G4 om the ref — ( L 3037 ) Ds2 हस T1 G1 हसा ( for एष ) T2 गच्छामह ( for मि वा ) Ds2 T1 2 4 G1 4 5 M4 नृप ( for नृपौ ) — ( L 3040 ) Ds2 G1 2 4 5 दौत्ये हि, T1 भवद्दर्श T3 दूत्य हि ( for दौत्य हि ) Ds2 T1 3 4 G M अतुल ( for अखिल ) Ds2 G4 वहामि D5 सहति T4 G2 M वहति ( for भवति ) D6 G3 नृप ( for नृणाम् ) — ( L. 3041 ) D6 T4 G2 युद्धे हत्वा ( for हत्वा ततो ) T1 3 G1 4 निवृत्त G3 नि वृतम् ( for निर्वृतिम् ) — ( L. 3042 ) M4 बल ( for बाहु ) Ds2 G3 M3 दर्शयन्वा D6 T4 G2 यस्व, T1 येव ( for यश्च ) T1 3 G1 3 4 नृपोत्तमौ ( for नृपाधमौ ) — ( L 3045 ) G1 विरूपाक्ष ( for विश्वरूप ) — ( L.

पद्मकिञ्जल्कवदनः श्यामलः सत्यविक्रमः ।
सृष्टिस्थितिलयस्यैकः कर्ता त्रिजगतां पतिः ॥
शरेण निशितेनाजौ दर्पं वां व्यपनेष्यति ।
इत्युक्त्वा रथमारुह्य प्रतस्थे सात्यकिः किल ॥

Colophon

वैशंपायन उवाच ।
स प्रविश्य पुरं विष्णोः सात्यकिः शिनिपुंगवः ।
आचचक्षेऽथ कृष्णाय यथा वृत्तं तयोस्तदा ॥
ततः प्रभाते विमले केशवः केशिसूदनः ।
बलाध्यक्षाननुवाचेदं कृतमङ्गलतत्परः ॥
संनह्यन्तां बलं सर्वं रथकुञ्जरवाजिमत् ।
अनेकभेरीपणवप्रासासिपरिघाकुलम् ॥
सध्वजं सपताकं च सालंकारपरिच्छदम् ।
तथेति ते प्रतिश्रुत्य सर्वे चक्रुरनीकपाः ॥
आदाय सुदृढं चापं रथमारुह्य दंशिताः ।
अग्रतो जग्मुरत्यर्थं सेनायाः पुरुषोत्तमाः ॥
वनमाली हली रामो नीलवासाः सितप्रभः ।
बभौ सैन्याग्रतो राजन्नगामेन्द्रसमप्रभः ॥
सात्यकिश्च तथा राजन्प्रगृहीतशरासनः ।
बभौ क्रोधसमायुक्तो जगामाग्रे महाबलः ॥
अन्ये च यादवाः शूराः प्रगृहीतमहायुधाः ।
सिंहनादं प्रकुर्वन्तो जग्मुरत्यर्थमुत्तमाः ॥
हरिस्तु रथमारुह्य सनद्धं दारुकेण ह ।
शार्ङ्गं भारसहं घोरं गृहीत्वा सशरं धनुः ॥
चक्रपाणिस्तदा शङ्खी गदाशङ्खशरासिमान् ।
बद्धगोधाङ्गुलित्राणः पीतवासा जनार्दनः ॥
पद्ममालाकृतोरस्को नीलकुञ्चितमूर्धजः ।
ययौ रथगतो विप्रैः स्तूयमानो मुदान्वितैः ॥
सूतैर्मागधपुत्रैश्च स्तूयमानस्ततस्ततः ।
आनीय सेनां सकलां ययौ काष्ठामथोत्तराम् ॥
पाञ्चजन्यं मुखे न्यस्य सर्वप्राणेन केशवः ।
दध्मौ महारवं कुर्वञ्शत्रूणां भयवर्धनम् ॥
आध्मातस्तेन हरिणा स चक्रे शङ्खराट् स्वनम् ।
रवः स रोदसी राजन्पूरयामास शङ्खतः ॥

---

3046) G2 सनातन (for पुरा°) — (L. 3047) Ds2 T3 G3 M नयन, G3 -संनिभ (for वदन) Ds2 D6 T1 G2 M सिंह (for सत्य) — (L. 3048) Ds2 T3 4 G1 2 -स्थयेषु (for स्यस्य) D6 [ए]व (for [ए]क) Ds2 D6 T3 G2 M गुरु (for पति) G1 कर्ता त्रिजगतीपति, Bom Poona eds G(ed) कर्ता त्रिजगतो गुरुः (for b) — (L. 3049) M4 अपनेष्यति (for व्यप°) — (L. 3050) Dn Ds2 D6 T2 G1 4 M हयम् (for रथम्) Dn1 प्रययौ (for प्रतस्थे)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 2 4 G M — *Adhy name* Dn हंसडिभकोपाख्याने सात्यकिप्रतिप्रयाणम्, Ds2 हंसडिभकोपाख्यानम्, D6 T3 M4 हंसडिम्भकम्, T1 2 G1 हंसडिम्भकोपाख्याने प्रयाणकरणम् (T1 सात्यकिप्रयाणम्), G3 सात्यकेः प्रतिप्रयाणम् — *Adhy no* Dn Ds2 302, T1 G3 230, T3 G3 232, T4 199, G2 250, G1 228, G4 231, M1-3 195, M4 194

T3 G1 om the ref — (L. 3051) D6 T2 4 G2 M4 पुरीं (for पुरं) D6 T3 G2 सात्यकिं सत्यविक्रमः (for b) — (L. 3053) D6 T2 G3 ततस्तयो (for तयोस्तदा) — (L. 3054) Bom Poona eds G(ed.) चक्रपाणिर्गदाधरः (for b) — (L. 3056) Ds2 D6 T1 2 4 G4 -पणवं (for -पणव-) — (L. 3058) Ds2 D6 G2 ते तथेति (by transp) Ds2 T4 G1 2 4 5 M1 2 प्रतिज्ञाय (for °श्रुत्य) Dn1 Ds2 G1 अभीतगाः; Dn2 T1 2 G1 4 5 अदीनगाः (for अनीकपाः). — (L. 3059) D6 T1 M1 2 रथान् (for रथम्) T2 संस्थिताः (for दंशिताः) — (L. 3060) T1 पुरुषोत्तम — Ds2 D6 T1 G M3 4 om lines 3063-6066 — (L. 3065) M1 3 -शरासनाः (for महायुधाः) — (L. 3067) Ds2 D6 T3 G2 M3 4 सरस्तं (for सनद्धं) — (L. 3068) D6 सदृशं (for सशरं) — (L. 3069) T3 शार्ङ्गी (for शङ्खी) Ds2 T2 G1 4 6 गदाशरवरासिमान्, D6 गदाङ्कुशवरासिधृक् (for b) — (L. 3071) D6 T3 G2 वनमाला (for पद्म°) Dn T1 2 G1 4 5 M1 3 कृतोरस्को (for -कृतो°) Dn T1 2 G नवाम्बुद-सन्निभः, D1 T4 M2 4 नीलजीमूतसन्निभः (for b) — (L. 3073) D6 T3 M4 गरुडध्वजरथो दिव्यैः (for a) D6 दयान्वितैः (for मुदा°) — (L. 3073) Dn D6 T1 4 G2 M गीयमानस (for स्तूय°) — (L. 3076) M4 शङ्खरवं (for महा°) M1 2 4 अतुलं भयम्, M3 सुमुखं भयम् (for भयवर्धनम्) — (L. 3077) D6 दध्मौ (for चक्रे) Dn T1 4 G2 4 5 M1 2 4 सुस्वनम्, Ds2 M4 रवम्, D6 स्वयम् (for स्वनम्) — (L. 3078) Dn Ds2 T3 G4 M4 सर्वतः, T1 G2 4 5

तस्मिन्शङ्खे तथाध्माते नेदुः शङ्खाः सहस्रशः ।
भेर्यश्चापि समाध्माता मृदङ्गा बहुशो नृप ।
नेदुरत्यर्थमतुलं घर्मान्ते जलदा यथा ॥
अथो ययुर्महाराज पुष्करं पुण्यवर्धनम् ।
गत्स्रसस्य राजेन्द्र पुष्करस्य नृपोत्तमा ॥
प्रतीक्ष्य हंसडिभकौ युद्धाय समुपस्थिताः ।
निवेशं कारयामासुर्यादवाः सर्व एव हि ।
स्वं स्वं यथासुखं राजन्प्रगृहीतकुटीमठम् ॥
भगवानपि गोविन्दः सरो दृष्ट्वा सुशोभनम् ।
उपस्पृश्य जले तस्मिन्प्रणम्य यतिपुंगवान् ॥
*तयोरागमनं लिप्सुरास्ते तीरे यथासुखम् ।*
शृण्वन्वेदध्वनिं विष्णुर्ब्राह्मणानां समन्ततः ॥

Colophon

वैशंपायन उवाच ।
अथ तौ हंसडिभकौ जग्मतुः पुष्करं प्रति ।
प्रगृहीतमहाचापौ सरथौ सध्वजौ नृप ॥
पुरःसरमहाभूतौ सहरन्ताविवोल्बणौ ।
प्रकुर्वन्तावुरस्त्वं भस्मना परिवेष्टितौ ॥
त्रिपुण्ड्रकललाटान्तौ रुद्राक्षपरिशोभितौ ।
अन्यौ द्वाविव रुद्रौ तौ लोकसंहारकारकौ ॥
ततोऽनुजग्मुः शतशः सैन्यानि नृपसत्तम ।
अक्षौहिण्यो दशैवास्तयोरथ समागताः ॥
विचक्रस्तु महाराज दानवो नगसंनिभः ।
*तयोरेव सखा पूर्वमासीच्च बलशालिनोः ।*
शक्रोऽपि यस्य पुरतः स्थातुं शक्तो न वज्रभृत् ॥
यो हि वीरो महाराज देवदैत्यसमागमे ।
देवान्निर्भर्त्स्य तदा युद्धे देवेन्द्रमजयन्महान् ।
अकरोच्च पुरा युद्धं विष्णुना प्रभविष्णुना ॥
*यो हि द्वारवतीं प्राप्य बबाधे यदुपुंगवान् ।*
स तदानीं महाराज श्रुत्वा युद्धमुपस्थितः ॥
अनेकशतसाहस्रैर्दानवैः परिवारितः ।
वृतः समभवद्दैत्यो वृष्णिद्वेषान्नृपोत्तम ।
हंसस्य डिभकस्याथ साहाय्यं कर्तुमुद्यतः ॥
विचक्रस्याथ दैत्यस्य हिडिम्बो राक्षसेश्वरः ।
अतीव मित्रतां यातो दयात्प्राणांश्च सयति ॥
राक्षसैरपरैः सार्धं शिलाशूलासिपाणिभिः ।

सर्वेश (for शङ्कत) — (L. 3079) Ds₂ समाध्माते (for तथा°) Dn Ds₂ T₁ ₂ G₁ ₃–₅ दध्मु (for नेदु°) — (L. 3080) G₁ ₃ ₄ M₄ समाघ्राता (for °ध्माता) D₆ T₂ G₃ सुभे यंश्चाप्यदध्यन्त (for °) T₁ ₂ ₄ G₁ ₃ ₄ शतशो (for बहुशो). — (L. 3082) Dn T₃ ₄ G M₄ अथाययुर् (for अथो य°) — (L. 3083) T₂ G₃ ₄ राजेन्द्रा (for °न्द्र) — (L. 3084) Dn प्रतीक्षन् (for °क्ष्य) Dn M₁ ₃ ₄ युद्धाय समवस्थिता; D₆ °य समुपस्थितौ (for ᵇ) — (L. 3086) Ds₂ ययु सुखं, T₁ सुखं यथा (for यथासुखं) — (L. 3087) D₆ स (for सु°) — (L. 3088) D₆ प्रणम्य यदुपुंगवम्, G₁ ₃ ₄ °न्य यदुपुंगवा (for ᵇ) — (L. 3089) G₃ वीप्सुर् (for लि°) D₆ मासीन् (for मास्ते) Ds₂ मास्ते यत्र तु तत्सरः (for ᵇ)

COLOPHON — *Mention of the Epic* Ds₂ — *Mention of Khila* Dn Ds₂ T₁ ₃ ₄ G M — *Adhy name* Dn T₁ हंसडिभकोपाख्याने कृष्णस्य पुष्करप्रवेशः; Ds₂ कृष्णस्य पुष्करगमनम्; D₆ M हंसडिभकम्, T₂ G ... कथाने युद्धाय कृष्णप्रवेशः; G₃ युद्धाय कृष्णस्य हंसडिभकोपाख्यानम् ... *no* Dn D₆ 231, T₂ G₁ 233 ... G₁ 313 M₁ ₂ ₄ 195; M₃ ...

T₂ G₁ om ref — (L. 3091) M₁ (*inf lin*, as above) स्वपुरं (for पुष्कर) — (L. 3092) T₁ सशरौ (for सरथौ) — (L. 3094) Dn च वसुधा, Ds₂ T₁ ₃ ₄ G₁ ₃ ₄ सिंहरवं; D₆ G₃ धनुरवे (for उरस्त्व) Ds₂ D₆ T₁, ₃ ₄ M₄ -लेपितौ, G₃ -लेपनौ; M₁ ₃ लेपिनौ (for -वेष्टितौ) — (L. 3096) Dn G₄ रौद्रौ तौ, D₆ T₄ G₃ रुद्रेशौ, M₃ शोभिनौ (for रुद्रौ तौ) — (L. 3098) M समाययु (for °गता) T₁ ₃ G₁, ₃ ₄ जग्मतु शतशः सैन्यान्यभिगृह्य नृपसत्तमौ — G₄ om. (hapl) 3099ᵇ–3102ᵃ — (L. 3101) G₃ तस्य (for यस्य) Ds₂ तत्पुर (for पुरत) G (G₄ om.) शक्नोति पुरतस्तस्य (for ᵃ) — (L. 3102) Dn महाबाहुर् (for °राज) — D₆ T₄ G₃ om lines 3103–3106 — (L. 3103) Dn G₄ तथा राजन् (for तदा युद्धे) — (L. 3105) T₂ बलादि; M₁–₃ बबाध (for बबाधे) — (L. 3106) Dn₁ M₁ अवस्थितम्, Ds₂ T₁, ₃ G₁ ₃ ₄ M₂–₄ उपस्थितम्, Cal ed अवस्थित (for उपस्थि° ) — (L. 3108) Dn वृत्र (for वृत°). G₃ विष्णुद्वेषान्; ... °ष्णिद्वेषो (for °द्वेषान्) G₃ नृपोत्तमौ (for °म) — ( ... G₁ डिबकस्य (for विचक्रस्य) D₆ T₄ G₂ हिडिम्ब ... for ᵃ) — (L. 3111) D₆

ययौ तस्य सहायार्थं हिडिम्बः पुरपादकः ॥
अष्टाशीतिसहस्राणि राक्षसास्तस्य चाभवन् ।
अनुयाता महाराज शिलापरिघपाणयः ॥
तयोस्तत्र महासैन्यं गच्छतोः केशवं प्रति ।
मिश्रितं दैत्यसंघैश्च राक्षसैश्च समन्ततः ।
अत्यद्भुतं महारौद्रं त्रैलोक्यभयदायि च ॥
दैत्येन तेन सहितौ जग्मतुः पुष्करं प्रति ।
तावेतौ हंसडिभकौ हन्तुं केशवमञ्जसा ॥
ततः श्रुत्वा जरासंधो विमर्दं यदुपुंगवे ।
नाकरोन्नृप साहाय्यं शापो मे भवितेति ह ॥
गच्छतोः संयुगं राजन्हंसस्य डिभकस्य च ।
अतित्वरितविभ्रान्तास्ते ययुः पुष्करं नृप ॥
सिंहनादं विमुञ्चन्तः कथयन्तः परस्परम् ।
अहमेव नृपा युद्धं करोमि प्रथमं हरेः ॥
इत्यन्नुवन्नृपा राजन्गच्छन्तः केशवं प्रति ।
संप्राप्तास्ते नृपश्रेष्ठाः पुष्करं पुण्यवर्धनम् ॥
मुनिजुष्टं तपोवृद्धैर्ऋषिभिश्च निषेवितम् ।
अत्यन्तभद्रं लोकेषु पुष्करं प्रथमं नृप ॥
पुष्करं पुण्डरीकाक्षो द्वावेव जगतीपते ।
दर्शनात्स्पर्शनाच्चापि किल्बिषच्छेदिनौ नृप ॥
पुष्कर पुण्डरीकाक्षो द्वावेव नृपसत्तम ।
सेव्यमानौ मुनिश्रेष्ठैः सामरैर्धर्मवत्सलैः ॥
द्वावेव हि नरश्रेष्ठ किल्बिषौघस्य नाशकौ ।
तावुभौ यत्र सहितौ तत्र ते संस्थिता नृपाः ॥
दृष्टवन्तो हरिं विष्णुं विष्टरश्रवसं परम् ।
पुष्करं पुण्यनिलयं तीर्थं महर्षिसेवितम् ॥
तेभ्यः कुरु नमस्कारं मनसा नृपसत्तम ।
अघं निःशेषमभवत्तत्र भूप न संशयः ॥
सैन्यं तत्र च संप्राप्तं दैत्यरक्षःसमाकुलम् ।
अनेकभेरीपणवझर्झरीडिण्डिमाकुलम् ।
तालसमिश्रपणवं रक्षोनादसमाकुलम् ॥
प्रविश्य सरसस्तीरं पुष्करस्य विशां पते ।
अदर्शयत्तत्र देवं युद्धाय समुपस्थितम् ॥

*Colophon.*

शिल (for शिला) — (L. 3113) G3 तत्र (for तस्य) Bom Poona eds पुरपादप (for °क) — (L. 3114) Dn G3 तस्य रक्षांसि चाभवन् (for ²) — (L. 3115) Ds2 M -पाणय (for -पाणय) — (L. 3116) Dn गच्छतो (for °तो). — (L. 3118) D3 महाराज (for °रौद्रं) Ds2 G3 -दायकम् (for -दायि च) — (L. 3119) Bom Poona eds G(ed) दैत्येन सहितौ तौ हि (for ¹) — (L. 3121) Ds2 विमर्दं यदुभिः सह (for ²) — (L. 3122) Ds2 पार्थ (for शापो) — (L. 3123) Dn2 गच्छन् (for °तो) D3 T1 G3 M सन्निधिं; T2 G1 संयुगे (for °गं) — (L. 3124) T2 सरितं (for अति) G1.3 प्र (for ते) Dn नृपा; Ds2 G1 प्रति (for नृप) — (L. 3125) D3 G2.4 M3 प्रवुर्वन्तः; T1 M1 विवुर्वन्तः (for विमुञ्चन्तः) — (L. 3127) T2 G1.4.5 गच्छन्त, M3 गच्छन्त (for गच्छन्तः) — (L. 3128) G2 मर (for नृप). — (L. 3129) D3 T1 G3 मुनीन्द्रैश्च (for मुनिजुष्टं) — T1 om line 3131. — (L. 3133) D3 G2 M1-3 स्मरणात् (for स्पर्शनात्) — D3 G3 om. lines 3133. — (L. 3134) D3 G2 M1 सेव्यमानो (for °मानौ). T1 G1 M3 सुरश्रेष्ठैः (for मुनि°) Ds2 मनसीषैः; T3 मानुषानैः; Cal. ed मानवैर्वृतैः (for °र्धर्मैः) — (L. 3135) Dn2 Ds2 D3 T1.2.4 G M सुरश्रेष्ठ (for नर°). Dn T1.2 G1.3.4 किल्बिषाणां च नाशकौ, Ds2 सर्वपापप्रणाशकौ; D3 T2 G2 किल्बिषौघप्रणाशकौ, G5 पुष्कराणां च नाशकौ (for ²) — (L. 3136) Dn2 T2 G3 सहितौ (for संस्थिता) D3 T1 G1 नृप (for नृपाः) — (L. 3137) Cal. ed. दृष्टा तौ च (for दृष्टवन्तौ) D3 नृपम् (for परम्) Ds2 पुष्करं सोमगो परम् (for ²) — (L. 3138) Dn T2.4 G सार्धं महर्षिसेवितम् (for ²). — (L. 3139) Dn G1.2 तस्मै (for तेभ्य) — (L. 3140) Dn Ds2 M1.4 नष्टो; T2.3 G3 हंसो; G1 क्षेत्रे; M2.3 अघो (for अघं) D3 तत्र भूतं, G1 तत्र भूपो (for तत्र भूप). — (L. 3141) G2 समागतम् (for °कुलम्) — (L. 3142) Ds2 सर्झरी (for -झर्झरी) — (L. 3143) Ds2 नाना; Cal. ed ताल (for ताल-) D3 G2 M ताल्यवं M3 °लं च )गरमी- सिद्धं (for ¹) Ds2 T1 G1 निनादितम् (for -समाकुलम्). — T1 om line 3143 — (L. 3145) Dn D3 T2.4 G1.2.3 दर्शयामास देवेशं; Ds2 ददर्श स च देवेशं (for ¹). D3 M3.4 समर- (for समुप )

COLOPHON — *Mention of the Epic*: Ds2 — *Mention of Khila*: Dn Ds2 D3 T1.2.4 G M — *Adhy. name*: Dn Ds2 हंसडिभकोपाख्यानम्; D3 M हंसडिभकम्; T2 G3 हंसडिभकोपाख्याने पुष्करपुरोपवर्णनम्; G1 पुष्करे पुरोपवेश

१ हरिवंश—५५

वैशंपायन उवाच ।
द्वे सेने संगते राजन्सध्वजे सपरिच्छदे ।
महापरिघसंकीर्णे गदाशक्तिसमाकुले ॥
भेरीझर्झरसंपूर्णे डिण्डिमारावसंकुले ।
प्रगृहीतमहाशस्त्रे शूलासिवरकार्मुके ।
परस्परकृतोत्साहे चक्राते युद्धमुत्तमम् ॥
ते शराः कार्मुकोत्सृष्टा निर्भिद्याथ शरीरिणाम् ।
शरीराणि महाराज जग्मुर्दूरं सहस्रशः ॥
भटबाहुविनिर्मुक्ताः खड्गा निर्भिद्य वक्षसि ।
स्फुटिताश्च तदा राजञ्शिरांस्याहत्य ययुः ॥
परिघाश्च तदा राज्ञां बाहुभिः परिचोदिताः ।
तिलशश्चनुरत्युलाः शरीरं नृपरक्षसाम् ।
दैत्यानां कुर्वतां नादमन्योन्यवधकाङ्क्षिणाम् ॥
दैत्या रक्षांसि राजेन्द्र राजानश्च समन्ततः ।
अन्योन्यं परिघैर्जघ्नुश्चापमुक्तैर्महाशरैः ।
शरैश्च भोगिभोगाभैस्तीक्ष्णमन्ये महाबलाः ॥
राक्षसा दानवाश्चान्ये मत्तमातङ्गविक्रमाः ।
नागा नागैर्महाराज हयाश्चाश्वैः समन्ततः ॥
रथा रथैः समाजघ्नुः सादिनः सादिभिस्तथा ।
पट्टसासिशरव्रातैः कुन्तैः सायककर्पणैः ॥
सशक्तिपरिघप्रासपरश्वधसमाकुले ।
भिण्डिपालैर्महारौद्रैर्जघ्नुरन्योन्यमाहवे ॥
राक्षसा दानवा राजन्क्षत्रियाश्च समन्ततः ।
इतश्चेतश्च धावन्तः कुर्वन्तो विस्वरं रवम् ।
हताः केचिन्महाराज पेतुरुर्व्यां महासिभिः ॥
केचिन्मथितमस्तिष्का गदाभिर्वीर्यवत्तमाः ।
भग्नग्रीवा महाराज परिघैः परिघायुधैः ॥
यमराष्ट्रं गताः केचित्केचित्स्वर्गं समाययुः ।
अप्सरोभिः समासेदुः पश्यन्तः स्वकलेवरम् ।
केचित्स्वांश्च परांश्चैव हत्वा भ्रान्त्वा इवाभवन् ॥
एतस्मिन्नन्तरे राजञ्शङ्खा भेर्यः सहस्रशः ।
सस्वनुः सर्वतः सैन्ये मृदङ्गा वह्वयस्तथा ।
मध्यंदिनगते सूर्ये तापं दधति घोरवत् ॥
ततः पिशाचा विकृताः कराला निर्णतोदराः ।
राक्षसाश्च महाघोराः पिशितं केशशाड्वलम् ।
मुदिता भक्षयामासुः पिबन्तः शोणितं बहु ॥

— *Adhy no* Dn Ds2 304; T2 G3 233 T3 G1 234; T4 201, G2 277; G4 230, M1-3 179, M4 215

(L. 3147) D6 T4 सपूर्णे (for -संकीर्णे) — (L. 3148) M1 3 -झर्झरि- (for °र) — (L 3150) Dn T1 G3 5 उत्तम णम्, M अद्भुतम् (for उत्तमम्) — (L. 3151) D6 ते शरा कार्मुकैर्मुक्ता (for °) D6 T4 [आ]शु (for [अ]थ) — (L. 3154) *Ds2* स्फुरिताश्च, *G1* स्फुरन्तश्च (*for* स्फुटिताश्च) M1 3 महाराज; G(ed.) तथा राज्ञां (for तदा राजन्) D6 T4 G2 स्फुटिता सहस्रशो राजन् (hypermetric) (for °) Dn T1 4 G1 2-5 [आ]हत्य (for [आ]हत्य) M4 स्वं (for स) Ds2 T3 G3 शिरांस्याहत्य स ययु (for °) —(L. 3156) Dn Ds2 T1. 2 G1 3 5 M4 मनुर्ले (for °ला) D6 T4 G2 तिलश कारया मासु (for °) D6 शरीराण्यपि रक्षसाम् (for °) — M1 3 om line 3157 —(L. 3157) Dn2 काङ्क्षणो (for °णाम्) — G2 om lines 3158–3162 —(L 3158) G4 राजन्द्राश्च (for राजानश्च) —(L. 3159) Ds2 T3 4 G1 3 M शिलाशितैः (for महाशरैः) D6 om (hapl.) lines 3159b–3163a T1 चापयुक्तैः शिलाशितैः (for °) —Ds2 T1 4 G1 3-5 M ins after line 3161 Dn after line 3167

23** अन्योन्यं जघ्निरे राजंश्चापमुक्तैर्महाशरैः ।
[ Dn1 D6 शिलाशितैः (for महाशरैः) ]

—(L. 3162) G3 G(ed) हयानश्वैः (for °श्चाश्वैः) —(L. 3163) Ds2 G4 5 M1 3 4 समाजग्मु (for °जघ्नु) G3 रथै रथैः समाजग्मु (for °) T4 सादिभि (for °न) M1 3 सादिभि सादिनस्तथा (for °) — (L 3164) T4 M1 3 शरघात; G3 °प्रास (for °व्रातैः) G5 कुन्त (for कुन्तैः) G4 सायमक, M कणय (for सायक) G1 -कर्षणै (for -कर्पणैः) Dn T4 D6 कुन्तसायककर्प(D6 °क्षेप)णैः (for °) —(L. 3165) M -प्रान (*for* -प्रास-) —(*L.* 3166) D6 G3 महाघोरैः (for रौद्रैः) D6 जिघ्नन्त्यन्योन्यमाहवे (for °) —(L. 3168) D6 T4 भैरवं (for विस्वरं) Ds2 रवान् (for रवम्) G3 कुर्वन्तो भैरवस्वनम् (for °) —(L. 3171) Ds2 T1 3 4 G M4 भिन्न (for भग्न) Cal. ed पट्टिशैः परिघैस्तथा (for °) —(L. 3174) D6 स्वान्परान्, G3 स्वार्थे पराश्च (for स्वांश्च परांश्च) —(L 3175) D6 G3 शङ्खः (for शङ्खा) T3 G1 समन्ततः (for सहस्रशः) T4 शङ्खभेर्यः समन्ततः (for °) —(L 3176) Dn1 सैन्यं; T3 सैन्यैः (for सैन्ये) —(L. 3177) D6 T4 तापतपति घोरवत् (for °)

ततः शिलां च महतीं प्रगृह्य दनुजः किल ।
भ्रामयित्वा शतगुणं प्राहरत्केशवोरसि ॥
तामापतन्तीं सम्प्रेक्ष्य हस्तेनादाय केशवः ।
जघान च तदा दैत्यं ताडित स तया क्षितौ ।
गतासुरिव सजज्ञे श्वसन्निव पपात ह ॥
प्राप्य संज्ञां ततो दैत्यः क्रोधाद्द्विगुणमावभौ ।
आदाय परिघं घोरमिदमाह जनार्दनम् ॥
अनेन तव गोविन्द दर्पं जात निहन्म्यहम् ।
विक्रमज्ञः सदा चासि मम देवासुरे रणे ॥
तावेव विपुलौ बाहू स एवासि जनार्दन ।
तथापि युध्यसे वीर ज्ञात्वा वै मामकं बलम् ॥
वारयैनं महाबाहो परिघं बाहुनि.सृतम् ।
इत्युक्त्वा देवदेवेश शङ्खचक्रगदाधरम् ।
चिक्षेप दैत्यो लोकेश सर्वलोकस्य पश्यत ॥
तं गृह्य बाहुना कृष्णो दुष्टोऽसीति वदन्हरिः ।
खण्डशः कारयामास खड्गेन निशितेन च ॥
उत्पाट्य वृक्षं दैत्येन्द्र शतशाखं महाशिरम् ।
तेन त पोथयामास विष्टरश्रवसं विभुम् ।
गृह्य तं चापि खड्गेन तिलशश्च चकार ह ॥
विक्रीड्य सुचिरं कृष्णस्तेन दैत्येन माधवः ।
हन्तुमैच्छत्तदा दैत्यमादाय निशितं शरम् ।
आग्नेयास्त्रेण सयोज्य जघानैनं स तेन ह ॥
प्रदह्य स शरो दैत्यं सर्वलोकस्य पश्यत ।
यथापूर्वं जगामाशु करं भगवतः पुनः ॥
हतशिष्टास्तदा दैत्याः पलायन्त दिशो दश ।
अद्यापि न निवर्तन्ते गच्छन्तो वै महोदधिम् ॥

*Colophon*

वैशंपायन उवाच ।

बलदेवस्तु धर्मात्मा धनुरादाय सत्वरम् ।
जघान हंसं दशभिर्मार्गणैर्बाणभृतां वरः ।
तं प्रत्यविध्यन्नाराचैर्हंसः पञ्चभिराशुगैः ॥
तानन्तरे हली छित्त्वा नाराचैर्दशभिः पुनः ।
नाराचेनाशु विव्याध ललाटे हंसमोजसा ॥
दृढं पतन्स नाराचस्तस्य संज्ञां समाददे ।
रथोपस्थे चिरं स्थित्वा स्थूणाकर्णं समाददे ॥
लब्ध्वा हंसः स संज्ञां तु विध्वा तेन यदूत्तमम् ।

(for जनी°). — (L 3216) Ds G1 दश (for शत) D6 G3 प्राहिणोत् (for प्राहरत्) — (L 3318) Ds D6 T3 G1 4 5 M तया (for तदा) Dn तदा क्षितौ, G3 तदार्दित (for तथा क्षितौ) Ds स पपातार्दित क्षितौ, D6 T1 3 4 G1-4 M स तया ताडित क्षितौ (for °) — (L 3219) T4 निःसंज्ञ (for सजज्ञे) G2 स्वनम् (for श्वसन्) — (L 3222) *Bom ed* वि (*for* नि) — (L 3225) Dn G3 न ज्ञात्वा, Ds D6 T1 3 G1 3 4 5 M1 ज्ञात्वा त्वं, T4 ज्ञात्वा त्वो (for ज्ञात्वा वै) — (L 3226) D6 धारय (for वा°) — (L 3227) D6 देवस्य (for देवेश) Ds G(ed) -गदा धरे (for °धरम्) — (L 3228) Ds लोकेशे (for °शं) — (L 3229) Dn1 D5 T3 4 G1 3 4 5 हतो, D6 M1-3 धृष्टो (for दुष्टो) — (L 3231) Ds T1 G1 3-5 M4 दैत्येश (for °न्द्र) T3 महायशा (for °शिरम्) — (L 3232) T3 रोधयामास (for पोथ°) Dn प्रभुम् (for विभुम्) — (L 3333) Ds छित्त्वा स, T4 G1 M4 गृह्य तच्च (for गृह्य तं) — (L 3234) Ds D6 T1 4 G1 3 4 5 M विष्णुस् (for कृष्णस्) — (L 3236) D6 आग्नेयेन च सयोज्य (for °) Ds महान्हरि (for स तेन ह) G2 जघान सुमहान् ह (for °) — (L 3337) Dn Ds D6 T3 G1 3-5 M4 संदह्य (for प्रदह्य) T1 सदह्य उदरं दैत्य, T4 प्रमह्य शतशो दैत्यं (for °) — (L 3238) D6 T4 G2 शर (for पुन). — (L 3239) G1 सर्व (for हत) Ds G2 पलायन्ते; T1. 2 4 G1 3 4 5 M4 °यन्तो (for °यन्त)

Colophon — *Mention of the Epic* Ds — *Mention of Khila*: Dn Ds D6 T1 2 4 G M — *Adhy name* Dn हंसडिभकोपाख्याने च (Dn2 विच)क्रवध; Ds हंसडिभकोपाख्यानम्, T1 2 G3 4 हंसडिभकयुद्धे विचक्रवधः; G1 हंसडिभकोपाख्याने हंसडिभकयुद्धे विचक्रवधः; M1 हंसडिभकम् — *Adhy no* Dn Ds 306; T1 G3 234, T3 G1 236, T4 203, G2 229, G4 232; G5 235, M1-3 177; M4 198

(L 3242) Ds D6 T4 M3 भुजा वरम्; G2 M3 -भृतो वर, M1-3 विदां वरम् (for -भृतां वर) — (L 3244) *Cal ed* स्तनान्तरे (for तान°) D6 स्तनान्तरे हली भित्वा (for °) — (L 3245) D6 T4 [अ]थ (for [आ]शु) T3 भुजसा (for मोजसा) D6 T4 G2 ललाटे यादवेश्वर (for °) — (L 3246) Dn1 T3 G1 3 तत्र संज्ञां, T4 तत्र तत्र (for तस्य संज्ञा).

सिंहवद्गर्जनद्धंसो देवान्विस्मापयन्रणे ॥
ततः क्रुद्धो हली विद्धस्तेन बाणेन माधवः ।
यमज्शोणितमत्यर्थं निशश्वास रणाजिरे ।
लोहिताविष्टगात्रस्तु कुङ्कुमार्द्र इवाभवत् ॥
नाराचैः सप्तसाहस्रैरर्दयामास यादवः ।
हंसं हंसगतिं वीर नीलनामा हलायुधः ॥
ते भुक्ता निशिता घोरा नाराचाश्च सुराजिनः ।
रथे ध्वजे तथा चापे चक्रे तूणीद्वये नृप ।
पतिताः सर्वतो राजन्नश्वयोश्चैव तथा दधुः ॥
ततः क्रुद्धो महाराज हंसो वीर्यबलान्वितः ।
शरेण हलिनं विध्वा ध्वजं चिच्छेद केनचित् ।
शरैश्चतुर्भिरश्वांश्च सूतं प्रेताधिपे ददौ ॥
ततः क्रुद्धो हली तस्माद्गदां गृह्य महारणे ।
आपपात महाबाहुर्हंसं शेष इव श्वसन् ॥
तया ध्वजं रथं चक्रमीषां सूतं हलायुधः ।
बभञ्ज तिलशः सर्वं ननाद च पुनः पुनः ॥
भूयश्च गदया हंसं चिक्षेप च हली किल ।
सोऽपि हंसो गदां गृह्य रथात्तस्मादवापतत् ॥
ततस्तौ हंसहलिनौ युयुधाते महारणे ।
महारथौ महाबाहू लोके प्रथिततेजसौ ॥
अत्यद्भुतौ सुनिरतान्वौ परस्परवधैषिणौ ।
कृतश्रमौ महायुद्धे सिंहविक्रान्तगामिनौ ॥
यथा देवासुरे युद्धे शक्रवृत्रौ पुराम्बरे ।
उभौ ससिक्तसर्वाङ्गौ शोणितेन महारणे ।
अत्यन्तखेदितौ युद्धे परस्परबलेन ह ॥
ततश्च दक्षिणं मार्गं बलभद्रोऽभ्यगृह्णत ।
सव्यं तु हंसो राजेन्द्र व्यगृह्णात्सत्यसंगरः ॥
योधयाचक्रतुर्युद्धे गदाभ्यां गजविक्रमौ ।
यथाप्राणं महाबाहू जघ्नतुर्मरणाय वै ॥
अतिप्रवृद्धं समाम देवासुररणोपमम् ।
विदधाते महारङ्गे पश्यता त्रिदिवौकसाम् ॥
देवाश्च मुनयश्चैव विस्मयं परिजग्मिरे ।
अहो खल्वीदृशं युद्धं दृष्टं पूर्वं न च श्रुतम् ।
इत्यूचुर्विस्मयवशाद्देवगन्धर्वकिंनराः ॥

—(L. 3247) Dn Ds2 D5 T1. 2. 4 G तृणाद्यागं (for स्थूणाकर्णं). — (L. 3251) Ds2 D5 T1. 4 G3 M भस्युच्च (for भत्यर्थं) Ds2 नि श्वसंश्च (for निशश्वास) — (L. 3253) Ds1 T1. 4 G2. 4. 5 दात (for सप्त) Dn1 Ds1 T2 G1. 3-5 M1 माधव (for यादव) Dn1 T1 दारयामास माधव (for °) — (L. 3254) D5 हंसनिरिट्, T2 °गतिर् (for °गतिं) — (L. 3255) M3. 4 सेन मुक्ता (for ते मुक्ता नि) T3 सुराजिभि, M4 °ता (for °ना) — (L. 3256) छत्रे, M4 चक्री (for चक्रे) M3. 4 नृपे (for नृप) — (L. 3257) Dn Ds1 T4 M तथा दधु, D5 समादधु (for तथा दधु) — (L. 3258) Dn Ds1 महान्वित (for °बला°) — (L. 3259) Poona ed कालवत्. Bomb. ed G(ed) काश्चित् (for केनचित्) — (L. 3260) Ds1 D5 धीरः (for श°) M1-3 सर्वैस्तु त्रिभिश्चाप्याद् (for °) T1 M4 प्रेताधिपे (for °पे) — (L. 3261) T2 हली (for हली) Ds1 M4 तस्मै (for तस्माद्). — (L. 3263) T1 बाणसमाद्; G5 परिपाय, Cal. ed अपातयत् (for आपपात) — (L. 3263) Ds1 G2 क्षमाद्, (for ईषां) M1-3 गदायुध (for हला°) — (L. 3264) G4 बभाद् (for सर्वं) D5 T4 G2 अघात निश्चा सर्वम् (for °) — (L. 3265) Dn सर्वं, G1 हली; G4 M4 हली (for हली) G5 चिक्षेप च हली हली (for °). — (L. 3266) T3 समापतत्; G1 अवातरम् (for °पतत्) — (L. 3267) Dn T1 Cal. ed हलिनौ (for ह°) — T2 G3 om. (hapl.) lines 3268–3272 — (L. 3268) G4 महादामौ (for °बाहू). — (L. 3269) T1 M4 अत्यद्भुतं (for °तौ) D5 T3 G1 तौ (for सु) — (L. 3270) Ds1 T1 G1. 2. 4. 5 M4 हंस (for सिंह) — (L. 3272) Ds2 D5 T1 G1. 2 M4 संसक्त (for ससिक्त) — (L. 3273) Ds2 T2 G M4 °खेदितौ, D5 रोदिनौ, T1 °खेदिनौ (for °तौ) D5 कर्पैषिणौ (for °बलेन ह) — (L. 3274) Dn M4 °भ्यगाद्रणे, Ds2 D5 T4 G2 व्यगृह्णत; T3 व्यगृह्णत; T1 व्यगृह्णत; G1 व्यगृह्णत, M1-3 व्यगृह्णत (for °भ्य°) — (L. 3275) Dn1 T1. 4 G1. 3. 4 M4 राजेन्द्रो (for °न्द्र) Dn T1. 2 G1. 2. 4 व्यगृह्णात्सत्यविक्रमः (for °) — (L. 3276) T3 योधयाचक्रतुर्युद्धे (for °) — (L. 3277) T2 महावीर्यौ (for °बाहू) — (L. 3278) Dn D5 G1 °प्रवृद्धं (for °वृद्धं) — (L. 3279) D5 T4 पश्यतां (for विदधाते) — After line 3280, G1 ins. an addl. colophon, mentioning the name हंसडिम्भकयुद्धम् and adhy. no. 235 — G3 om. lines 3280–3282 — (L. 3280) G4 सुर (for मुन°) T3 सर्वे (for चैव) — (L. 3282) T1 G1 जाबका (for किंनरा) — (L. 3283) Ds2 D5 T1 G2 अद्भुतम् (for अद्भुतम्) Cal. ed दृष्टं युद्धं तथाद्भुतम् (for °)

परस्परकृतोत्साही चक्रतुर्युद्धमद्भुतम् ॥
अथ हंसो महाराज दक्षिणं दक्षिणोत्तमः ।
व्यचरन्मार्गमत्यर्थं सव्यं तु बलरान्बली ॥
विकुञ्च्य जानुनी पूर्वं चक्रतुर्गदया भृशम् ।
रणं रणविदां श्रेष्ठौ पश्यतां त्रिदिवौकसाम् ॥

*Colophon*

वैशंपायन उवाच ।
युद्धं चक्रतुरत्यर्थं ततो डिभकसात्यकी ।
तावुभौ बलिनौ वीरौ प्रख्यातौ क्षत्रियेषु वै ॥
कृतश्रमौ महायुद्धे सततं वृद्धसेविनौ ।
सात्यकिर्दशभिर्बाणैर्डिभकं सत्यविक्रमम् ।
अविध्यन्निशितैर्बाणैः स्तनमध्ये तथोरसि ॥
स तेन विद्धो बलिना डिभकः क्षत्रियोत्तम. ।
नाराचैः पञ्चसाहस्रैर्विव्याध युधि गर्वितः ॥
तानन्तरे वृष्णिवीरो निपेष्य व्यनदद्रणे ॥
अथ क्रुद्धो नृपवरो विध्वा सप्तभिराशुगैः ।
पुन. शतसहस्रेण प्रत्यविध्यत्स सात्यकिम् ॥
सात्यकिस्त्वथ विक्रान्तो धनुश्चिच्छेद तस्य तत् ।
अर्धचन्द्रेण तीक्ष्णेन डिभकस्य स यादवः ॥
आजघ्ने डिभको राजन्युयुधानं युधां वरम् ।
क्षुरप्रेणाथ रौद्रेण तैलधौतेन विक्रमी ॥
स तेन विद्धो बाणेन वमञ्शोणितकं नृप ।
अतीव शुशुभे राजन्वसन्ते किंशुको यथा ॥
धनुश्चिच्छेद भूयस्तु यद्गृहीतं पुनर्महत् ॥
ततोऽन्यद्धनुरादाय डिभको यादवेश्वरम् ।
जघान निशितैर्बाणै. सर्वक्षत्रस्य पश्यतः ॥
स धनु· पुनरत्युग्रं चिच्छेद युधि सात्यकिः ।
शरेण तीक्ष्णपुङ्खेन डिभकस्य दुरात्मनः ॥
ततोऽन्यद्धनुरादाय सत्वरं स नृपोत्तमः ।
धनुषा तेन राजेन्द्र सात्यकिं विव्यधे पुनः ॥
एवं धनूंषि राजेन्द्र शतं पञ्च च पञ्च च ।
छित्त्वा ननाद शैनेय सर्वक्षत्रस्य पश्यतः ॥
धनूंषि तौ समुत्सृज्य वीरौ डिभकसात्यकी ।
खड्गौ प्रगृह्य चात्युभौ युद्धाय समुपस्थितौ ॥
तौ हि खड्गविदां श्रेष्ठौ वीरौ डिभकसात्यकी ।
द्वौ शामनिर्महाराज सौमदत्तिस्तथैव च ॥
अभिमन्युश्च विक्रान्तो नकुलश्च तथैव च ।
एते खड्गविदां श्रेष्ठाः कीर्तिता युधि सत्तमा. ॥

---

— (L 3284) D6 दक्षिणे (for °णं) — (L. 3285) D3 बल ; T1 G1.4.5 M4 हली, T3 हरि (for बली) — (L. 3287) D3 G2.3.4.5 M4 रणे (for रणं)

Colophon — *Mention of the Epic* D3 — *Mention of Khila* Dn D3 D6 T1.2.4 G1.2.4.5 M — *Adhy name* Dn1 हंसडिभकोपाख्याने हंसयुद्धम् ; Dn3 हंसडिभकवधे हंसयुद्धम्, D3 G4.5 हंसबलयुद्धम्, T4 G1 हंसडिभकोपाख्याने हंसबलभद्रयुद्धम् M1.4 हंसडिभकम् — *Adhy no* Dn D3 307, T1 235, T3 237 ; T4 204, G1 227, G2 230, G4 233, G5 238, M1.3 200, M4 199

(L. 3288) अत्यन्त (for °र्थं) — (L 3289) D3 T1.2 विख्यातौ (for प्र°) — (L. 3291) D6 बीर, T4 M1–4 धीर ; G2 घोरौ (for धीरौ) T3 विक्रम (for °मम्) D3 D6 T4 G2 डिभक वेदपारगम्, M °क शस्त्रविसमम् (for °) — (L 3292) D3 T4 G2 M1.4 तेन वक्त्रे ; D6 M2.3 स्तने वक्त्रे (for स्तनमध्ये) — (L. 3295) T4 -वरो (for -वीरो) G2 नृप (for रणे) Dn निपिद्धाश्चिनदन्द्रुतम् ; D6 T4 विवि (T4 निपि)ध्य व्यनदद्भृप, T1.2 G1.4.5 M निरिष्य व्यनदद्भुतम् (for °) — (L. 3296) D3 T3 G1.2 विद्ध (for °ध्वा) M1 सात्यकि (for किम्) — (L. 3298) D6 G2 तावभिमिथान्तरे शूरो (for °) — After line 3299, M4 ins

24** अथान्यद्धनुरादाय डिभकः शत्रुकर्शन ।

— (L 3300) T4 वीरे (for राजन्) D3 T2 चापमादाय चापरम् (for °) — G1 om lines 3304–3313 — (L. 3304) D6 T4 G4 पुराभवत्, G2 पुरा धनु (for पुनर्महत्) D3 T3 गृहीत यत्पुरा धनु· (for °) — G2 om (hapl.) lines 3305ᵇ–3309ᵃ M4 om (hapl.) lines 3307–3312 — (L. 3307) Dn T1.2 G4 अत्यर्थं (for अत्युग्रं) D6 T4 अथा (for सधा)पि धनुरत्युग्रं (for °) — (L. 3308) D6 अतितीक्ष्णसुपुङ्खेन, T4 नवतीक्ष्णसु°, M1–4 नवीकृतसु° (for °) — (L. 3309) D6 T4 G2 सात्यकिं (for सत्वरं) — (L 3310) G2 सारथिं (for सात्यकिं) — (L. 3311) D6 दश (for शत) — (L. 3312) G4 भित्त्वा (for छित्त्वा) T4 G2 छित्त्वा च (for ननाद) D6 ननाद छित्त्वा शैनेय (for °) C2 लोकस्य (for क्षत्रस्य) — (L. 3313) T4 G2 M4 धनुषी (for धनूंषि) D3 T1.2 परित्यज्य (for

स वेगवान्वीररथौघसंकुलः
प्रयाति देवान्प्रति दैत्यसागरः ।
महार्णवो वीचितरंगसंकुलो
यथा जलौघैर्युगसंक्षये तथा ॥
त्रैलोक्यवित्रासकरैर्वपुर्भि-
स्तान्यग्रतो यान्ति बले रथस्य ।
महाबलान्युच्छ्रितकार्मुकाणि
सपर्वतानीव वनानि राजन् ॥

Colophon

वैशंपायन उवाच ।

श्रुतस्ते दैत्यसैन्यस्य विस्तरो जनमेजय ।
भूयस्त्रिदशसैन्यस्य शृणु विस्तारमादितः ॥
सुराधिपस्तु भगवानाज्ञापयत वै सुरान् ।
मरुद्गणांस्तथादित्यान्विश्वेदेवांश्च वासवः ॥
वसूनष्टौ भृशं सर्वान्यिक्षरक्षोमहोरगान् ।
विद्याधरगणान्सर्वान्गन्धर्वांश्च महाबलान् ॥
महार्णवांश्च शैलांश्च तथा रुद्रान्महोजसः ।
यमवैश्रवणौ चोभौ वरुणं च जलाधिपम् ॥
ये तु सिद्धा महात्मानः पितरश्च मनस्विनः ।
राजर्षीश्चापि शतशो योगसिद्धांस्तथैव च ॥
त्रिदशाज्ञापकः शक्र आज्ञापयति वीर्यवान् ।
भवन्तो दैत्यनाशाय सनह्यन्तामिति प्रभुः ॥
शक्रस्य वचनं श्रुत्वा ततः सर्वे दिवौकसः ।
सनह्यन्त महात्मानः शक्रस्य समविक्रमाः ॥
नानाकवचिनः सर्वे विचित्रकवचध्वजाः ।
नानायुधोद्यतकरा मत्ता इव महागजाः ॥
केचिदारुरुहुर्व्याघ्रान्केचिदारुरुहुर्गजान् ।
केचिदारुरुहुर्नागान्केचिदारुरुहुर्नृपान् ॥

महारथ (for °बल) D3 महाध्वज कार्मुकबाणहस्त, T1 G3-5 °रथ काञ्चनचित्रबाणम्, M4 °रथं कार्मुकधृक्सबाणम् — (L 479) G6 वीरवरौघ, M3 द्विरदरथौघ- (for वीरर°) — (L 480) Ñ1 G2 सैन्य (for दैत्य) — (L 481) B1 3 D3 महानिलोद्धृत, T1 2 G1 2 3 M4 °महाब्धि- (for °र्णवो वीचि) — (L 482) D3 4 Bom Poona eds G(ed) -सङ्क्षये (for संक्षये) D6 T1 2 G1 2 5 M1 4 यथार्णवो लोकविनाशनाय — (L 483) T1 2 G1 3-5 M3-4 भीमानि स- (G3 त्रि) (for त्रैलोक्यवि) — (L 484) M4 तस्य (for तानि) B D6 भान्ति (for यान्ति) D3 तान्यग्रतो भान्ति बलानि तस्य, T1 G1 3 5 M3 तस्या(G4 °था)ग्रतो भान्ति बले रथस्य — (L 485) महारथाभ्युत्थितकार्मुकानि

Colophon — *Mention of the Epic* K4 V1 Dn1 Ds2 D1 5 — *Mention of Khila* V2 B Dn Ds D1 3-5 — *Sub-parvan* Ñ1 D1 5 6 वामनम्, B1 3 D3 T2 G1 3 M3 4 वामनप्रादुर्भावः — *Adhy name* K Ñ2 V1 2 B2 Dn Ds D1-5 बलेरुद्योगः, B1 3 दैत्यसंनहनम्, D6 दैत्येन्द्रसहननम्, G3 महाबलिर्जैत्रयात्रा M3 सेनावर्णनम् — *Adhy no* K3 24, V1 200, V3 Ds2 237, Dn 236, D1 223, D3 249, D4 231, T1 G4 295 G1 294, G3 5 297

G4 om lines 487 570 — After line 488 T1 G1 3 5 M3 4 ins

21** दैत्यानामथ संनाहं दूताच्छ्रुत्वा सुराधिप ॥
[M3 नराधिप (for सुराधिप)]

— (L 489) T1 G3 5 शचीपतिस् (for सुराधिपस्) K1 2 V1 3 Ds D3 4 आज्ञापयति (for °यत) B1 2 D6 Cal ed आज्ञापयदसौ सुरान् (for b) — (L 490) K4 Ds दित्यान् (for [आ]दित्यान्) B1 3 D6 T1 G1 3-5 M3 4 विश्वान्साध्यांश्च, B2 Dn T1 विश्वान्देवांश्च, Ds2 विश्वदे° (for विश्वेदे°) — For line 491, T1 2 G1 3 5 M3 4 subst

22** अष्टौ चापि वसूंस्तूर्णं यक्षराक्षसकिंनरान् ।
[M3 पन्नगान् (for किंनरान्)]

— (L 492) सिद्धान् (for सर्वान्) B1 Cal ed महारथान् (for °बलान्) — (L 493) T2 G1 द्वीपान् (for रुद्रान्), — (L 494) D5 नराधिपम् T1 2 G1 3 5 M3 महाबलम्, Bom Poona eds G(ed) जनाधिपम् (for जला°) M4 वरुणश्च महाबल (for b) — (L 495) K1 सिद्धाश्चैव, K3 D4 सिद्धसंघा (for ये तु सिद्धा) K3 महाबला, V1 महात्मन (for मनस्विन) Ñ2 शक्रस्य समविक्रमा (for b) — (L 496) K4 B3 Dn D1 राजर्षयश्च, D5 °र्षयोऽपि (for °र्षीश्चापि) T1 G1 2 राजर्षयश्च बहुशो, T2 G5 M3 4 °र्षींश्चैव बहुशो (for a) K1 3 4 Ñ1 2 V3 B1 3 Dn Ds D1 3-5 T1 2 G1 2 सिद्धास् (for सिद्धान्) — (L 497) B3 D3 T1 3 G1 5 M3 4 आज्ञापयत (for °ति) V3 वै सुरान् (for वीर्यवान्) — (L 498) D3 सनह्यध्वम् (for °न्ताम्) — (L 500) D3 समनह्यन्त (hypermetric) (for सनह्यन्त) — (L 501) D3 किरीटिन (for कवचिन) D3 T2 G1 3 5 कनक (for कवच) — T2 G1 om lines 502 505 D3 om (hapl.) line 502. — (L 503) Ñ1 om (hapl) line 503a K3

हरिनेत्रो हरिश्मश्रुर्द्विरदैरावतध्वजम् ।
रथं हरिद्भिर्युक्त्वा स प्रायात्समरं प्रति ॥
आदित्यवर्णं विरजं सुधौतं
त्वष्ट्रा स्वयं निर्मितमीश्वरार्थम् ।
जालैश्च जाम्बूनदभक्तिचित्रै-
रलंकृतं काञ्चनदाममिश्रं ॥
सकूबरोपस्करबन्धुरेषं
विद्युत्प्रभाभिः कृतमामिताभ्रम् ।
कैलासशृङ्गोपममिन्द्रयानं
सुचारुचारुप्रतिचित्रचक्रम् ॥
तारासहस्रै रचितैर्ज्वलद्भि-
र्देवार्धमाल्यार्चितसर्वदेहम् ।
समुच्छ्रितश्रीध्वजमक्षयाक्षं
जाज्वल्यमानं वपुषोत्तमेन ॥
आस्थाय तं भास्वरमाशुवेगं
शचीपतिर्लोकपतिः सुरेशः ।
यज्ञस्य भर्ता भुवनस्य गोप्ता
ययौ महात्मा भगवान्महेन्द्रः ॥
आमुच्य वर्मार्थ सहस्रतारं
हुताशनादित्यसमप्रभावम् ।
सूर्यप्रभं चामुमुचे किरीटं
मालां च जाम्बूनदवैजयन्तीम् ॥
त्वष्ट्रा कृतं भास्वररश्मिदीप्तं
सुतीक्ष्णघोरामलतीक्ष्णधारम् ।
महासुराणां रुधिरार्द्रमुग्रं
प्रगृह्य वज्रं शतपर्वमुख्यम् ॥
महाशनी द्वे च महाप्रहाभे
दीप्ताममोघां च स शक्तिमुग्राम् ।
चक्रं तथैन्द्रं सुमहच्च चापं
प्रगृह्य शक्रः प्रययौ रणाय ॥
सहस्रदृग्भूतपतिः सनातनः
सनातनानामपि यः सनातनः ।
प्रयाति देवाधिपतिर्महात्मा
वैयाघ्रमादाय च चर्म चित्रम् ॥

om line 503° T1 G3 ₆ M2 रथान् ( for गजान् ) — ( L. 504 ) B1 D3 D6 Cal ed रथानारुरुहुः केचित् ( for ° ) — ( L 505 ) K1 ₄ Ñ1 Dn D1 T1 द्विरदैरावृत ( for °वत ) M3 ध्वज ( for -ध्वजम् ) — ( L 506 ) K3-4 V3 B2 Dn D3-6 T1 ₂ G1 ₃-₅ युज्य ( for युक्त्वा ) — ( L. 507 ) Ñ1 विरजा , B2 विमल , T1 G3 M2 द्विरद ( for विरजं ) D3 सुनाभ , M4 सुधाभ ( for सुधौत ) B1 ₃ D6 आदित्यवर्णं विपुलं सुनाभं ( D5 °धाम ) T2 G2 ₄ °र्णं विशा( G4 द्विर )द सुधाभ — ( L 508 ) Ñ1 B3 D3 स्वयंभुवा ( for त्वष्ट्रा स्वयं ) — ( L 511 ) V1 बन्धुर रथ ( for बन्धुरेष ) D3 मुक्ताम्बरोपस्करबन्धुरेष — ( L 514 ) K1 D4 सुचारुचारुं , B1 D5 तारासुतार B3 सुचारुतार ( for °चारु ) T1 प्रतिम स ( for प्रतिचक्र ) T2 G1 M3 ₄ सुतार( M4 °चारु )तार प्रतिम च चक्रम् ; G3 ₅ सुचारुतारप्रतिम सुच° — ( L. 515 ) K1 D4 रुचिर , K3 T2 G1 रचित , K4 Ñ1 रुचितैर् , D5 D3 ₆ T1 G2 ₃ खचित ( for रचितैर् ) — ( L 517 ) K1 Ñ1 ₂ D3 D6 T1 G2 समुच्छ्रितं ( for °च्छ्रित ) M3 ₄ चारुपक्षं ( for अक्षयाक्षं ) B1 समुच्छ्रित स्वर्ध्वजमक्षयाक्षं , T2 G1 °त श्रीध्वजचारुपक्ष G5 °त श्रीध्वजमायताक्ष — ( L. 518 ) Ñ2 D3 प्रज्वाल्यमान ( for जाज्व° ) K3 D3 T1 M3 पुरुषोत्तमेन ( for वपु° ) K3 ₄ D1 प्रज्वाल्यमानं पुरुषोत्तमेन — ( L 519 ) K2 ₃ Ñ2 B1 ₂ G1 भास्करम् , Ñ1 B3 D3 D5 भासु° ( for भास्व° ), V3 D5 T1 ₂ G3 ₄ उग्रवेग , D3 आशुचारं ( for °वेग ) — ( L 520 ) M3 स श्रीपतिर् ( for शची° ) T2 देव ( for लोक ) M4 स श्रीपतिर्लोकपतिं सुरेशम् — ( L 521 ) K3 Dn धर्ता , D82 गोप्ता ( for भर्ता ) — ( L. 522 ) D1 सुरेश ( for महेन्द्र ) — ( L. 524 ) G5 प्रभासम् ( for °वम् ) — ( L. 525 ) D3 वै सुशुभे ( for चामुमुचे ) Ñ2 सूर्यप्रभावं मुमुचे किरीट — ( L. 527 ) Dn1 D5 भास्कर ( for भास्वर ) K3 दीप्ति ( for रश्मि ) — ( L 528 ) K1 D1 ₂ -तीव्र , B D6 G3-₅ M4 नैक ( for the second तीक्ष्ण ) T1 सुतीक्ष्णघोरामलमेकधारम् , T2 G1 °घोरज्वलनैकधारम् M4 °घोरामनलैकधारम् — ( L. 529 ) K1 ₂ D4 रुधिरप्रदिग्ध , K3 °रौद्रदीप्त , B3 Dn °राशमुग्र , D1 रुचिरार्द्र° , D3 निधनप्रसक्त , D5 रुधिराक्तदिग्ध ( for °र्द्रमुग्र ) — ( L 530 ) K1-₃ D4 ₅ -पर्वमुग्रम् , V1 °शाल्यम् , B1 ₂ D3 T1 ₂ G1 ₃ ₄ M2 ₄ °भीमम् ; D3 -वर्मसुख्यम् ; D3 -पत्रतुल्यम् ( for -पर्वमुख्यम् ) — ( L. 531 ) D3 महाप्रदीप्ते ; T1 ₂ G1 ₃ ₄ M2 ₄ °प्रभावे ( for °प्रहाभे ) — ( L. 532 ) K3 D4 T1 वर K3 च सु ( for च स ) — ( L. 533 ) Bom Poona eds सुमहत्प्रताप ( for °च्च चाप ) — ( L. 534 ) G5 M4 चक्र ( for शक्र ) — ( L 535 ) Ñ1 भूतभव ( for °पति ) — Ñ1 om line 536 — ( L. 536 ) D3 अधिप°

क्षीरोदधिक्षोभसमुत्थितानि
पुरामृतादुत्तमभूषणानि ।
देवासुराणां श्रमनिर्जितानि
सोमार्कनक्षत्रतडित्प्रभाणि ॥
दत्तान्यदित्या मणिकुण्डलानि
युद्धं प्रयातस्य सुरेश्वरस्य ।
तैर्भूषितो याति सहस्रचक्षु-
रुद्द्योतयन्वै विदिशो दिशश्च ॥
हरिः प्रभुर्नेत्रसहस्रचित्रो
विभाति युद्धाभिमुखः सुरेन्द्रः ।
यथा सितं शारदमभ्रवृन्दं
नभस्तलं ऋक्षसहस्रचित्रम् ॥
स्तुवन्ति चान्ये विपुलैर्वचोभि-
र्जयाशिषा चोर्जितसत्त्ववीर्यम् ।
अत्रिर्वसिष्ठो जमदग्निरौर्वो
बृहस्पतिर्नारदपर्वतौ च ॥
समन्वयुर्देवगणा महेन्द्रं
प्रयान्तमादित्यसमानवर्चसम् ।
विश्वे च देवा मरुतश्च सर्वे
साध्यास्तथादित्यगणाश्च सर्वे ॥
ते देवराजस्य पुरंदरस्य
हयाश्च ये मातलिसंगृहीताः ।
प्रयान्ति देवेश्वरमुद्वहन्तो
नभस्तलं पङ्क्तिरिवाक्षिपन्तः ॥
ब्रह्मर्षयश्चैव सुरर्षयश्च
राजर्षयश्चाक्षयपुण्यलोकाः ।
सर्वेऽनुजग्मुः सहसा ज्वलन्तं
तेजोन्वितं शक्रममित्रसाहम् ॥
प्रगृह्य शूलानि परश्वधाश्च
दीप्तानि चापान्यशनीर्विचित्राः ।
वर्माणि चामुच्य हिरण्मयानि
प्रयान्ति सूर्यांशुसमप्रभाणि ॥

---

(for मपि च ) $T_{1.2}$ $G_{1.3-5}$ $M_{3.4}$ सनातनानामपि शाश्वत॰ प्रभु — (L 537) $\tilde{N}_2$ $V_3$ $B_{1.3}$ Dn $D_6$ $T_{1.2}$ $G_{1.3.6}$ $M_{3.4}$ खड्गं च (for प्रयाति) — (L 538) K $\tilde{N}_1$ $D_5$ $D_{1-3}$ सुवर्णं, $V_1$ च वर्म, $V_3$ स चर्म, $B_2$ स वर्म (for च चर्म) — (L 539) $\tilde{N}_1$ $D_{s2}$ $D_{2.6}$ समुच्छ्रितानि (for ॰स्थितानि) $K_{1.3}$ क्षीरोदविक्षोभसमुच्छ्रितानि — (L 540) $D_3$ पुराकृतानि, $T_1$ $G_{1.3.5}$ पुरातनानि (for ॰पुरामृताद्) — (L 541) $K_{1.2}$ $D_3$ च विनिर्जितानि, $K_4$ $D_{1.2}$ समनिर्जि॰, $D_{n2}$ श्रमवर्जि॰, $D_5$ समरे जि॰ (for श्रमनिर्जि॰) — (L 543) $T_2$ $G_{1.5}$ $M_{2.4}$ [स]मृत (for मणि) — (L 545) $K_4$ $\tilde{N}_{1.2}$ $V_1$ Dn $D_{s2}$ $D_{2.4}$ $T_1$ $G_3$ भाति, $T_2$ $G_{1.5}$ $M_{3.4}$ स्तौत्व (for याति) $D_5$ सहस्रनेत्र (for ॰चक्षुर्) — (L 546) $K_4$ उद्द्योतयित्वैव (for ॰तयन्वै) — (L 547) $D_3$ धर्ता (for चित्रो) — $M_4$ om lines 548–552 — (L 548) $D_3$ सुरेश (for ॰न्द्र) — (L 549) $D_6$ स्थित (for सित) $K_{1.2.4}$ $\tilde{N}_1$ $V_{1.3}$ $D_5$ $D_{1.3.5.6}$ कल्प, $K_3$ चित्र (for ॰वृन्दं) $D_3$ यथा नभ शारदमभ्रकल्पं, $D_5$ (marg) यथासितैर्वारिधरैर्विचित्र, $T_{1.2}$ $G_{1.3.5}$ $M_2$ यथा सित वारिधरैर्विसु ($T_2$ $G_1$ $M_3$ ॰म)क्त — (L 550) $T_{1.2}$ $G_{1.3-5}$ $M_3$ ज्योति (for ऋक्ष) $K_2$ नेत्रम् (for चि॰) — After line 550, $T_1$ $G_{3.4}$ ins

23** ऐरावतं नागवरं महात्मा



तदा समास्थाय ययौ रणाय ॥

— (L 551) $K_4$ विमलैर् (for विपुलैर्) $K_3$ विचित्रो, $T_{1.2}$ $G_1$ $M_3$ स्तवैर्हि, $G_5$ स्तवैरिमे (for वचोभिर्) — (L 552) $K_2$ चोद्धत (for चोर्जित) $T_3$ $G_2$ वीर्यसत्त्वम् (for सत्त्ववीर्यम्) — $K_4$ om lines 553–557 — (L 556) $B_{1.3}$ $D_6$ Cal ed समप्रभावम्, $T_{1.2}$ $G_{1.3.5}$ $M_{3.4}$ निभं सुरेशम् (for समानवर्चसम्) — (L 557) $D_2$ मरुतश्च (for मरुतश्च) Bom Poona eds G(ed) तथैव (for च सर्वे) — $\tilde{N}_2$ om line 558 — (L 558) $T_{1.2}$ $G_{1.3.5}$ $M_{3.4}$ समस्ता (for च सर्वे) — (L 560) $G_1$ हरेर्हया (for हयाश्च ये) — (L 561) $D_4$ प्रयान्ति देवेश्वरयुद्धहेतोर् — (L 563) K $\tilde{N}_{1.2}$ $V_{1.3}$ $B_{1.3}$ Dn $D_8$ $D_{1.4.5.6}$ $G_3$ महर्षयश्च (for सुर॰) — (L 564) $T_{1.2}$ $G_{1.2.5}$ $M_{3.4}$ -शीला (for -लोका). — (L 565) $\tilde{N}_1$ $T_2$ $G_{1.4}$ यशसा (for सहसा) $M_{3.4}$ सर्वेऽनुजग्मुर्यशसा ज्वलन्त — (L 566) $V_1$ तेजस्विनं, $D_3$ तेजो बल, $M_3$ तेजोयुता, $M_4$ ॰न्विता (for ॰न्वितम्) $T_1$ ॰कालम् (for साहम्) $K_3$ तेजस्विनं शक्रममित्रसादनम् — (L 568) $T_2$ $G_{1.5}$ $M_{3.4}$ दीप्तान्पिनाकान्, $G_3$ ॰नि चापान् (for ॰नि चापानि) $B_{1.3}$ $D_6$ तथा शनीश्च (for [अ]शनीर्विचित्राः) — (L 570) $D_3$ सूर्यांशि (for सूर्यांशु) — After line 570, $T_{1.2}$ $G_{1.3.5}$ $M_{3.4}$ ins an addl colophon [Sub-parvan $T_2$ $G_{1.3}$ $M_{3.4}$ वामनप्रादु-

तथा कुबेरोऽश्वसहस्रयुक्तं
श्रेष्ठं रथं सर्वसहं महार्हम् ।
दिव्यं समारुह्य रणाय यातो
धनेश्वरो दीप्तगदाग्रहस्तः ॥
निशाचराः पावकधूम्रकाया
रक्षोनृपा रुद्रसखस्य तस्य ।
विशालनानायुधदीप्तहस्ता
यान्त्यग्रतो वैश्रवणस्य राज्ञः ॥
ते लोहिताक्षाः परिवार्य देवं
व्रजन्ति भिन्नाञ्जनचूर्णवर्णाः ।
यक्षोत्तमा यक्षपतिं धनेशं
रक्षन्ति वै प्रासगदासिहस्ताः ॥
पुण्यः प्रभुः प्राणपतिर्यतात्मा
वैवस्वतो धर्मभृतां वरिष्ठः ।
तडिद्गुणाभं शतवाजियुक्तं
रथं समारोहत सूर्यकल्पम् ॥
तं लोकपालं पितरोऽनुजग्मु-
र्विविक्तपापा ज्वलिता यशोभिः ।
सर्वे च भूता भुवनप्रधाना
नानायुधव्यग्रकरा सुभीमाः ॥
दण्डं महान्तं परिगृह्य देवो
लोकाङ्कुशं विग्रहनिश्चितार्थम् ।
हिरण्मयानां कमलोत्पलानां
मालां मनोज्ञामवसज्य कण्ठे ॥
स्थितोऽस्थिमेदामिषलोहिताद्रं
सर्वासुराणां निधनं विकाङ्क्षन् ।
तेजोमयं सुद्रसुमरूपं
विकर्षमाणोऽरुणधूम्रनेत्रः ॥
समन्वितो व्याधिशतैरनेकै-
र्ययौ हरिश्मश्रुरुदारसत्त्वः ।
महासुराणां निधनाय बुद्धिं
चक्रे तदा व्याधिपतिः कृतान्तः ॥

---

र्भाव — *Adhy name* G3 देवेन्द्रसमरसनाह', G5 पुरंदरसमरसंनाह — *Adhy no* T1 296, G1 292, G3 5 298, M2 4 8 ]

— Before line 571, T1 G1 3-5 M2 4 ins वैशंपायन — (L. 572) T1 2 G1 3-5 M2 4 श्रेष्ठ नरश्रेष्ठ शुभ शुभार्हम् (T2 'वहम्) — (L 573) T1 2 G1, 3 5 M2 4 रथ (for दिव्यं) G3 समास्थाय (for 'रुह्य) — (L 575) D1 3 -धूमकाया, D5 T1 2 G1 3-5 M2 4 धूम्र (T1 G2 'म्र) वर्णा (for 'काया) — (L. 577) K1 दीर्घ- (for -दीप्त) K3 D4 विशालनागायुधदीर्घहस्ता — (L. 578) D1 सद्य (for राज्ञ) T1 2 G1 3-5 M2 4 ययु पुरस्ताद्धनदस्य राज्ञ — (L 580) G1 3-5 M2 4 द्रवन्ति (for व्रजन्ति) D5 भिन्ना (for -वर्णा) D2 G(ed.) व्रजन्ति चूर्णाञ्जनभिन्नवर्णा — (L 581) G5 यक्षेश्वरा (for यक्षोत्तमा) M2 4 यक्षोत्तमा राक्षसवद्धनेशम् — (L 582) K2 4 Ñ2 V3 Dn D1 2 4 T2 पाश- (for प्रास) — Dn3 om lines 583 587 — (L 583) K3 पुण्यव्रज, Ñ1 पुण्य प्रभुं, V3 D3 D1 2 4 6 पुण्यप्रभु (V3 'भ') (for पुण्य प्रभु) Bom Poona eds G(ed) जितात्मा (for य') V1 पुण्यप्रभु प्राणपतिर्महात्मा, T1 2 G1 3-5 M2 प्राणिप्रभु प्रेतपतिं यता (G3 5 M2 महा) त्मा — (L 584) Ñ1 वैवस्वत सर्वभूतोपहन्ता — (L 585) Ñ1 2 V1 B3 Dn2 D3 5 तडिद्गुणाभ (for तडिद्गु') T2 M3 -चक्र, G1 M4 -चन्द्र (for वाजि). T1 G1 4, 6 तडिद्गुणाभं शतचन्द्र (G4 'चक्र) युक्त — (L 586) Ñ1 D8 समारोहति (for 'हत) — (L 588) Ñ1 M2 4 निर्णिक्त; G1 5 निर्मुक्त- (for विविक्त) K1 Ñ3 B2 Dn D1 3-5 तपोभि (for यशोभि) K2 विविक्ततापा ज्वलितास्तपोभि, K3 4 V1, 3 B1 2 D3 D2 6 विमु (B1 2 D5 निर्णि) क्तपापा ज्वलितास्तपोभि — (L 589) D8 G5 प्रभूता (for च भूता) — (L 591) V1 महान्त (for 'ख) — (L 592) G1 4 लोकाद्भुतं (for 'ङ्कुश) K4 Ñ1 3 V1 B3 Dn Ds2 D1 2 4 6 निग्रह (for वि') T1 G3 5 M4 लोकाद्भुत निश्चितविग्रहार्थं (M4 'र्था), T2 M2 'द्भुतं विग्रहनिश्चितार्थं — (L 593) K3 D4 कमलोत्तमाना, K6 'ज्वलाना (for 'त्पलाना) — (L 594) D2 4 अवमुच्य (for 'सज्य) — (L 595) G3 मेदोस्थि- (for स्थितोऽस्थि) K4 -लोहिताक्ष (for 'द्रं) D6 T1 2 G1 4 6 M2 4 मेदोस्थिमज्जामिषलोहितार्द्रं — (L 596) K1 2 4 Ñ2 V3 D1 3 विरूपम्, Ñ1 निरूप्य; D3 निरूपम् (for विकाङ्क्षन्) T1 2 G1 3-5 M2 4 सर्वासुराणां निधनैकरौद्रम् — D2 om lines 597–601 — (L 598) K4 D1 T2 धूम्रलेश्रम्, B1 'लोचन; D3 ताम्रनेत्र (for -धूम्र') — (L 599) B1 D6 Cal ed -शतैर् (for -शतैर्). T1 2 G1 3-5 M2 4 सुदर्पितैर्व्याधिशतै वृती (T2 G1 4 'तैरुपे) तो — (L 600) V1 वीर्यै (for -सत्त्व) — (L 601) T2 निधनेन, G1 'ने स (for 'नाय) M2 चक्रे (for बुद्धिं) — (L. 602) M3 बुद्धिं (for चक्रे) D8 स याम्याधि- (for

ततस्त्रिशीर्षैर्भुजगैर्बृहद्भि-
र्युक्तं रथं हेमचितं महात्मा ।
आस्थाय कुन्देन्दुनिभं जलेशो
ययौ रणायासुरदर्पहन्ता ॥
वैडूर्यमुक्तामणिभूषिताङ्ग-
स्तेजोमयः पाशगृहीतहस्तः ।
महासुराणां निधनाय देवः
प्रयाति रूप्याकरनद्धबाहुः ॥
कैलासशृङ्गप्रतिमोऽप्रमेयः
समुद्रनाथोऽमृतपो महात्मा ।
महोरगैः स्वैस्तनयैश्च गुप्तो
ययौ रथेनार्कसमप्रभेण ॥
युद्धाय तं यान्तमदीनसत्त्वं
नभस्तले चन्द्रमिवातिकान्तम् ।
पश्यन्ति भूतानि महानुभावं
सहृष्टरोमाणि कृताञ्जलीनि ॥

धातार्यमांशोऽथ भगो विवस्वा-
न्पर्जन्यमित्रौ च शशी च देवः ।
त्वष्टा तथैवोर्जितविश्वकर्मा
पूषा च साक्षादिव देवराजः ॥
सोरश्छदैः सध्वजकिंकिणीकै-
र्वैडूर्यनिष्कैश्चितहेमकण्ठैः ।
हयैर्वरैः शक्रधनुःप्रकाशै-
र्युक्तान्रथानारुरुहुः सुरास्ते ॥
दिवाकराकारनिभानि केचि-
द्धुताशनार्चिःप्रतिमानि केचित् ।
निशाकरांशुप्रतिमानि केचि-
त्तडिद्गुणोद्द्योतनिभानि केचित् ॥
नीलाम्बुमेघप्रतिमानि केचि-
त्कार्ष्णायसाकारनिभानि केचित् ।
वर्माणि दिव्यानि महाप्रभाणि
त्वष्ट्रा कृतान्युत्तमभानुमन्ति ॥

---

भवा व्याधि-) —(L 603) T2 G1 5 M2 4 भूयस् (for ततस्) K8 Dn महद्भिर् (for बृ°) —(L 604) V3 हेमचित्र, T1 2 G1 4 M1 °मय (for °चित) G5 M3 युक्त हय हेममय महात्मा —(L 605) D5 सम (for निभ) —(L 608) T1 2 G1 3-5 M2 4 तेजोज्वलत्पाश (for °मय पाश) —(L 609) K1 2 D4 चैव (for देव) —(L 610) Ñ1 K3 4 D1 5 निशराम, D3 निर्मलाभ (for नद्धबाहु) — After line 610 Ñ2 V1 3 B D2 D5 6 T1 2 G1 3 5 M1 4 ins

24** अन्वीयमानो जलदैर्घनाभि-
र्निषिच्यमानो जलदैश्च सर्वैः ।
संस्तूयमानश्च महर्षिवृन्दैः
संपूज्यमानश्च महाभुजंगैः ॥

[(L 2) V1 3 D3 जलजै (D3 °दै) श्च सर्वैः, D6 जलसर्वसत्त्वै, M3 °जैश्च सत्त्वैः (for °जैश्च सर्वैः) —(L 3) Ñ3 संस्तूयमानैश् (for °नश्) G3-5 M3 स (for च)]
—(L 611) T1 2 G1 3 4 M2 4 महात्मा (for ऽप्रमेय) —(L 612) T1 2 G1 3 5 M2 4 भगवाञ्जलेशः (for ऽमृतपो महात्मा) —(L 613) K1 3 4 B1 D1 3 4 तैस्तनयैश्च, M3 स्वस्त्ययनैश्च (for स्वैस्तनयैश्च) Ñ3 V3 D5 सु- (for च) K2 3 D4 युक्तो (for गुप्तो) —(L 614) K3 D5 समप्रभाव (for °भेण) —(L 616) T2 G1 अतीव (for इवाति-)

— After line 618, T1 2 G1 3-5 M3 4 ins an addl colophon [Sub parvan T2 G1 3 M3 4 वामनप्रादुर्भाव. — Adhy name G3 कुबेरवरुणगमनाह — Adhy no T1 297, G1 293, G3 296, G5 293, M3 4 9] — Before line 619 T1 2 G1 3-5 M3 4 ins वैशंपायन —(L 619) K1 [अ]थांशुभगौ, D2 3 4 [अ]प्यांशुभगौ, D5 [अ]-शुश्च भगो (for [अ]ंशोऽथ भगो) —(L 620) T1 G1 3-5 M3 4 वरुणश्चैव, T2 वरुण स देव (for च शशी च देव) —(L 622) K2 3 Ñ2 3 V1 3 B2 3 Dn D1 3-5 T2 G3 दिवि (for इव) —(L 623) D2 घोरश्छै, D6 सौरध्वजैः (for सोरश्छदैः) —(L 624) B Dn D5 T2 G1 4 5 M3 4 निष्काञ्चित, T1 निष्कांगद (for निष्कैश्चित) D2 हेमदण्डैः (for °कण्ठैः) G3 वैडूर्यनिष्काञ्चितहेमतुल्यैः —(L 625) B1 3 D6 Cal ed हयोत्तमैः (for हयैर्वरैः) Dn2 Bom Poona eds G(ed) रथ, T2 G1 हयै, M1 -चार (for -हय) —(L 627) T1 बलाहकाकार (for दिवाकरा°) — G1 M3 om lines 629-632 —(L 629) T1 दिवाकरांशु (for निशा°) — K3 4 Ñ2 3 V3 D5 D1-3 5 om line 630 V3 B T1 2 G1 4 M4 om (hapl.) lines 631-633 —(L 631) D5 नीलानि (for नीलांबु) K1 4 Ñ1 D1-4 नीलाम्बुमेघाभ्रनिभानि केचित् — After line 631, Ñ1 ins

आमुच्य मालाश्च सुवर्णपद्माः
प्रयान्ति तोयानिलतुल्यवेगाः ।
द्वावश्विनौ चापि महानुभावौ
रूपोत्तमौ धर्मभृता वरिष्ठौ ॥
रथं समारुह्य सुवर्णचित्र
रणं गतौ काञ्चनतुल्यवर्णौ ।
मनोः सुता वै वसवश्च सर्वे
बलोत्कटा दैत्यवधाय देवाः ॥
रथाश्च नागाश्च महाप्रमाणा-
नास्थाय जग्मुः सुशुभास्त्रहस्ताः ।
रुद्राश्च सर्वेऽरुणधूम्रवर्णाः
श्वेतैर्ययुर्गोपतिभिर्बृहद्भिः ॥
महौजसः सर्वगुणोपपन्ना
दीप्तात्मनो भानुमिरिव ज्वलन्तः ।
नानायुधव्यग्रकरैर्भुजैस्ते
लोकान्समस्तानिव निर्दहन्तः ॥
ययुःससैन्यास्तपनीयनद्धाः
सविद्युतस्तोयधरा यथैव ।
विश्वे च देवास्तपसा ज्वलन्तो
वीर्योत्तमाः सूर्यमरीचिवर्णाः ॥
ययुः ससैन्या युधि दुर्निवार्या
बलोत्कटाः पद्मसहस्रमालाः ।
रथैः सुयुक्तैस्तपनीयवर्णै-
र्वैदूर्यमुक्तामणिदामचित्रैः ॥
नानायुधाकारसमाकुलास्ते
पारिप्लवैश्चैव सितातपत्रैः
तेजोमयैः काञ्चनचारुचित्रैः
सुनिर्मलैः पावकसंनिभैस्ते ॥
उरश्छदैः सध्वजकिङ्किणीकै-
र्हयैश्च वायोः समवेगवद्भिः ।

25** नीलाभवाम्रास्थितपुष्पवर्णे
— K Ñ3 V3 D5 D1 3 om line 632 — After line 632, Ñ1 ins

26** केचित्सुवर्णाभनिभा विभान्ति ।
— (L 634) V3 त्वष्टु (for त्वष्टा) — (L 635) K Ñ3 V1 3 Dn D5 D1 3 -पुष्पा (for -पद्मा) Ñ1 G1 3 M4 आमुच्य माला च सुवर्णपद्मा (Ñ1 °पुष्पा, M4 °चित्रा) — (L 636) B3 G1 4 M4 तोयाकर, D3 ते मारुत-, T1 G3 3 वायूसम, T2 तोयकर (for तोयानिल) — (L 637) T2 G1 4 5 M4 4 तावू (for द्वावू) — (L 638) T3 सुरोत्तमौ (for रूपो°) — (L 640) K1. 2 D4 बभूवतु (for रण गतौ) B1. 3 D6 (marg as above) -गौर, T1 चित्र, T2 G1 3-6 M2 4 सार (for -तुल्य) Ñ1 रण ययौ काञ्चनगौरवर्णौ (610) — (L 641) K1 B1 Bom Poona eds G(ed) मरुतो (for मनो) — (L 642) V1 3 रणोत्कटा; G3 5 लोको°; M3 मदो° (for बलो°) — (L 643) V1 महाप्रभावान्, D3 °नुभावान् (for °प्रमाणान्) — (L 644) K3 च शुभाख्य; B सुशितासि (for सुशुभास्त्र) D3 आरुह्य जग्मू रुचिरास्त्रहस्ता — (L 645) K4 V1 3 Dn D1 4 रणधूम्र (Dn D1 °म), Ñ2 B2 D53 D3 ऽरुणधूम (for °धूम्र) T1 G1. 4 5 -काया (for -वर्णा.) B1 3 T3 G3 M2 4 रुद्राश्च देवास्त M3 °र)णधूम्र(G3 °म)काया — (L 646) G1 3 5 हयैर् (for ययुर्) — (L 647) B3 D6 सत्त्व, T2 G1 4 श्वेत (for सर्वे) — (L 648) V1 दीप्ता सुतेजोभिरिव ज्वलन्त, B Dn D6 T1 2 G1 3-5 M2 4 दीप्तात्मतेजोभिरभिज्व(Dn °रिव ज्व)लन्त — (L 649) K1 2 4 B3 D3 D1 4 भुजैस्तैर्; K3 (sup lin) भुजाग्रैर् (for भुजैस्ते) Dn नानायुधव्यग्रकराभुजास्ते, D3 °व्यग्रभुजैः करैस्ते — (L 650) V1 मर्दयन्त (for निर्दहन्त) — (L 651) D3 समस्तास् (for ससैन्यास्) V1 B1. 3 D3 T3 G1 4 5 -कण्ठा (for नद्धा) — (L 654) D3 समास (for मरीचि) — (L 655) D3 ययुः ससैन्या समरे जयाय — (L 656) V1 रणोत्कटा (for बलो°) B1 3 D6 T1 2 G1 3-5 M2 4 बलोत्कटा पुष्करमालिनस्ते (B1 D6 °श्च) — G3 om lines 657-662 — (L 658) V1 हेम (for दाम) — (L 659) M4 Bom Poona eds G(ed) नानाविधाकार (for °युधाकार) T1 M3 समाकुलैस्ते, G1 4 5 °कुलैस्तै (for °कुलास्ते) D3 नानायुधारागकुला समस्ता — (L 660) D2 महारथैस्ते, M3 शशाङ्कपक्षै (for सितातपत्रै) T2 पारिप्लवैः श्वेतशताग्रपत्रै, G1 M2 °वैः श्वेत सिताभ्र (M2 °शशाभ्र)पक्षै — After line 660, D3 ins

27** सितातपत्रैः शरदिन्दुकान्तैः ।
— (L 661) B1 3 D5 D6 -जाल- (for -चारु) T2 G1 4 M2 -पत्रैः (for चित्रैः) — (L 662) K4 -सन्निभैस्तैः; Ñ1 2 Dn D5 D1. 3 4 T1 °भास्ते (for °भैस्ते) — (L 663) D3 ऊर्जस्वलैः (for उरश्छदैः) — (L 665) V3 मत्तैर् (for दिशां) B1 3 D5 D6 G1 4 5 M2 4 गजेन्द्रैश्च (for गजैश्चैव) K4 B1 है (for ते) D3 T1 G3 दिशागजेन्द्रैश्च महाबलैस्तै (D3 °लास्ते) — (L 666) Ñ2 B1 3 D6

दिशां गजैश्चैव महाबलैस्ते
कैलासशृङ्गप्रतिमैर्महद्भिः ॥
प्रजज्वलुरायुधदीप्तहस्ता-
श्चतुर्युगान्ते ज्वलिता इवोल्काः ।
साध्याश्च देवाः सुमहाप्रभावाः
स्वाधीनचक्राः प्रतिदीप्तवक्त्राः ।
प्रयान्ति जाम्बूनदभूषिताङ्गा
गङ्गौघमात्रैर्गगने बलौघैः ॥
विद्योतयन्तो विदिशो दिशश्च
महाबलास्ते जयता वरिष्ठाः ।
वरिष्ठदृष्टौष्ठभुजाः सुदृप्ता
वैश्वानरार्कप्रतिमप्रभावाः ॥
ते ब्रह्मविद्भिश्च नमस्यमानाः
सपूज्यमानाश्च सुरैः सशक्रैः ॥
गन्धर्वसंघैरनुगम्यमाना
वधाय तेषामसुराधिपानाम् ॥

वैदूर्यवज्रस्फटिकाग्रचित्रै-
र्ध्वजैः सुवर्णैश्च परिष्कृतानाम् ।
रूपं बभूवोत्कटभूषणानां
दैत्येन्द्रनाशाय विभूषितानाम् ॥
आत्मप्रभाभिश्च रणोत्कटाभि-
र्वर्मप्रभाभिश्च तमोनुदाभिः ।
विभान्ति ते देववराःससाध्याः
मध्मातशङ्खस्वनसिंहनादाः॥
महारथस्थास्त्रिदिवौकसस्ते
महाबलाः शत्रुबलं प्रयान्ति ।
महाश्वहस्ता ययुरुग्ररूपा
महासुराणां निधनाय देवाः ॥
तथैव सर्वे मरुतोऽतिवीर्या
बलोत्कटाः खे समरप्रतीताः ।
ययुर्महामेघसमानवर्णा
महायुधास्तोयदनादनादाः ॥

---

T1 3 G3 5 M2 3 बृहद्भि (for म°) D3 बलाहकैश्चापि तथा बृहद्भि° —(L 667) K Ñ3 V1 3 B1 Dn Ds D1 6 M4 -चाप (for दीप्त) Ñ1 प्रजज्वलुर्दीप्तायुधचापहस्तास् —(L 670) K1 Ñ1 2 V3 3 B Ds D1 6 T1 G1 3 M4 -दीप्तचक्रा (for °वक्त्रा) K2 4 D1 2 स्ववीर्यधर्मप्रतिवीर्य(K4 °दीप्त)-चक्रा, D3 स्वाधीनभक्ता प्रतिदीप्तचक्रा —(L 671) B1 3 D5 T1 G3 5 M4 ययु° स, M2 ययु° सु (for प्रयान्ति) —(L 672) K3 V1 B3 Ds D1 गङ्गौघमात्रैर्, K3 °मात्रे, Ñ2 B1 D2 G5 M2 4 गाङ्गौघमात्रैर् (D2 °मार्गै) (for गङ्गौघमात्रैर्) K1 सयोन्यमानैर्गगनैर्बलौघै, K4 Ñ1 B2 Dn D1 5 6 T1 2 G3 गा(B2 D5 6 ग)ङ्गौघमात्रे(K4 D1 °गै)र्गगनैर्ब°, V3 गङ्गौघवेगप्रतिमैर्ब°, G1 3 गाङ्गौघमात्रैर्गगने बलौघा —(L 673) D3 सछादयन्तो (for विद्योत°) —(L 675) K1 घृष्टौष्ठ, K4 B1 D5 पुष्टौष्ठ, Ñ2 V1 3 D4 पृष्ठा सु, B2 पृष्ठाष्ट-, D2 5 -दष्टौष्ठ (for दृष्टोष्ठ) B2 वरिष्ठपृष्ठाष्टभुजा. सुदीप्ता, D2 °पृष्ठाश्च भुजगदीप्ता, T1 2 G1 3-5 M3 4 देवा (T1 तेषा) वरिष्ठा सुभुजा सुदीप्ता —(L 677) K2 ते ब्रह्म विद्भिश्चरितप्रमाणा —(L 678) K2 4 D5 4 G(ed) समस्तै (for सशक्रै) —(L 679) K3 उपगीयमाना, V1 अनुगीय° (for अनुगम्य°) —(L 681) B D3 रत्न (for वज्र) —(L 682) B D5 ध्वजै (for वज्रै) T1 2 G1 3-5 M3 4 वज्रैश्च हेम्ना च परिष्कृतानाम् —(L 683) T1 G3 5 [उ]त्तम (for [उ]त्कट-) —(L 684) K3 समुद्यता नाम्, T1 G1 3-5 M3 4 समुद्र° (for विभूषि°) —(L 685) B1 बलोत्कटाभिर्; T1 2 G3 4 तपो° (for रणो°) G1 आत्मप्रभावैश्च तपोत्कटाभिर् —(L 686) T2 G1 वज्र (for वर्म) —After line 686, K2 B Dn Ds D1 2 3 T1 G3-5 ins

28** ध्वजोत्तमाभि स्वशरीरभाभि
मेघप्रभाभिश्च महोज्ज्वलाभि ।

[(L 1) Dn ध्वजोत्तमाभिश्च, T1 G2 °द्धताभिश्च G3 °द्धताभिश्च, G5 °त्कटाभिश्च (for °त्तमाभि स्व) —(L 2) D3 सतोऽज्ज्वलाभि (for महो°)]

—(L 687) V1 देवगणा (for °वरा) —(L 689) T1 G1 M2 रथौघैस्तु, G2 3 M4 रथौघैस्त्रि (for रथस्थास्त्रि) V3 महेन्द्रकेतुप्रतिमा रथस्था —(L 690) B1 D3 प्रपन्थि (for प्रयान्ति) T1 2 G1, 3-5 M3 4 महाबला त्रिदिववासमेती कम् —(L 691) K1 2 महाध्वजन्तो (for °हस्ता) K4 Dn D1-3 G3 उग्रकाया, B1 D6 °वेगा, G5 °वीर्या (for °रूपा) K3 महाश्ववन्त परवीर्यरूपा, D1 °वन्त पुरुषार्थरूपा; T1 °हस्ता ययुरुग्रवीर्या —(L 693) D32 T1 3 G1 4 महतो (for मरुतो) —(L 694) M2 4 ते परम (for खे समर) —(L 696) K1 वज्रायुधास्, Dn1 D3 वज्रा°, D1 3 T1 वज्रा° (for महा°) K4 घनायुधास्तोयदधीरनादा —(L

महेन्द्रकेतुप्रतिमा महाबलाः
प्रगृह्य सर्वासुरसूदनां गदाम् ।
रणोत्कटा लोहितचन्दनाक्ताः
सहेममाल्याम्बरभूषिताङ्गाः ॥
ते युद्धशौण्डाः सुभुजाश्च वीर्या
बलोत्कटाः क्रोधविलोहिताक्षाः ।
ययुः सजाम्बूनदपद्ममाला
यथेष्टनानाविधकामरूपाः ।
वैदूर्यचामीकरचाररूपा-
ण्याबध्य गात्रेषु महाप्रभाणि ।
वर्माणि दैत्यास्त्रनिवारणानि
प्रयान्ति युद्धाय सपत्नसाहाः ॥
वैरुच्छ्रितैः काञ्चनवेदिकाढ्यै-
र्वरध्वजैर्भास्कररश्मिवर्णैः ।
ययौ सुराणां पृतनोग्रतेजाः
समुन्नदन्ती युधि सिंहनादान् ॥
इत्येवमुग्रं त्रिदशेश्वरस्य
सैन्यं तदासीत्सुमहाप्रभावम् ।
योद्धुं प्रयातस्य जयावहस्य
वधाय तेषामसुराधिपानाम् ॥

Colophon

वैशंपायन उवाच ।
ततः प्रवृत्तोऽसुरदेवविग्रह-
स्तदाद्भुतो भाति सुरासुराकुलः ।
वेलामतिक्रम्य युगान्तकाले
महार्णवान्योन्यमिवाश्रयन्तः ॥
नानायुधोद्द्योतविदीपिताङ्गा
महाबला व्यायतकार्मुकास्ते ।

697) T2 G1.4 M1.4 यथेन्द्र (for महेन्द्र) — (L 698) K1 सूदना गदा, V1 °र्नीं गदाम् (for °र्वां गदाम्) B1.3 D6 गदां प्रगृह्यासुरसूदनीं युधि (B1 गदाम्), D3 प्रगृह्य सर्वा सुधसूदना गदा ; T1.2 G3.3.4 M1.4 गदा प्रगृह्यासुरसूदना सदा — (L 699) K1 -चन्दनोक्षिता (for -चन्दनाक्ता) — (L 700) V1 B3 D6 Cal ed सुगन्धि, T1 G1.4.5 M3 सुगन्ध (for सहेम) D3 माल्यपाङ्गद (for °म्बर-) — V3 om lines 701 706 — (L 701) Ñ1 सुभुजा सुवीर्या, B1.3 D8 D6 T1 G1.4 सुभुना सुदीप्ता, B2 T2 G1.4 M2.4 स्व(B2 सु)भुनाश्चदीप्ता — (L 702) K1.3 Ñ1 B1.3 D4.6 T1 G3.5 M2.4 वीर्योत्कटा T2 G1.4 वीर्योत्तरा (for बलोत्कटा) Bom Poona eds G(ed) विलोहिताक्षा (for विलोहि°) K3 वीर्योत्कटा क्रोधविलोहितास्या — (L 703) G4 युयुत्सव काञ्चनपद्ममाला — (L 704) B3 D3.6 T2 नानायुध (for °विध) — After line 704, Ñ2 B D3 D6 T1 G3.4 ins

29** खड्गप्रभाश्यामलितासपीठा
पुरदरं वै परिवार्य देवा ।

— (L 705) T2 G1.4.5 M2.4 चित्र (for -चारु) B1.3 D6 -चित्राणि (for -रूपाणि) — (L 706) T2 G1.4 [भा]त्र ध्यमानाश्च (for °ध्य गात्रेषु) — (L 708) T2 G1.4 ययुश्च, G5 M2.4 ययु सु (for प्रयान्ति) B1 सघा, D1 G3 G(ed) -हाम्ना (for साहा) — (L 709) Ñ1.2 G3 वैरुच्छ्रितैः (for °च्छ्रितै) V3 -चन्द्रिकाभि (for °ढ्यै) — (L 710) T1.2 G1.3-5 M1.4 वरध्वजै काञ्चन(G4 °नी)राशिवर्णै (T1 G3.4 °चित्रै) — (L 711) K1-3 Ñ2 V2 Dn1 D3 D5 भासा, K4 B1 Dn1 D1.3.4 भासां, T2 G1.4 M1 -तेजसां (for तेजा) Ñ1 विद्युनोग्रभासा; Ñ2 D5 पृतनाग्रभासा (D2 °सा) (for °नोग्रतेजा) — (L 713) K1.3 V2 D1.4 त्रिदिवेश्वरस्य (for त्रिदशे°) D2.5 T1.2 G3 इत्येवमुक्त त्रिदिवेश्वरस्य — (L 715) K Ñ1.2 V1 B D3 D1.2.4-6 युद्धे, V2 युधि, Dn युद्दे (for योद्धु) T2 G3 जयाय तस्य, M1 °य तेषा (for °वहस्य) T1 युद्धं प्रयातस्य जयाय तस्य

Colophon — *Mention of the Epic* K1 Dn D3 D1.3 — *Mention of Khila* V B D3 D1.4.5 — *Sub-parvan* K1 वामनचरितम्, K2.3 Ñ1.2 V1.3 B Dn D3 D1.2.4 वामनम् K3 D5.6 M1.4 वामनप्रादुर्भाव°. — *Adhy name* Ñ2 V3 D3 दानवोद्योग°, V1 शतक्रतोरुद्योग, B D3.4 देवसनहनम्, G3 देवसैन्यमनाद ; M2 देवसेनावर्णनम्. — *Adhy no* K2 25, V2 Ds2 238, Dn 237, D1 224, D3 250, D4 232, T1 G4 298, G1 294, G3.4 300; M2.4 10

(L 718) B1.3 D6 T2 G2.3.5 M2.4 तद(B1.3 °दा)द्भुतो वै त्रिदशासुराकुल, D1.2 तदद्भुतो भाति सुराकुलाकुल (D2 °सुराकुलम्), T2 G4 ततस्ततो वै त्रिदशाकुलाकुल — (L 720) V1 B Dn D6 महार्णवानामिव सगमो महान्, T1.2 G1.3-5 M2.4 °वाना(T2 G1 M2.4 °न्या)मिव संगमस्तदा — (L 721) Ñ1 महायुधोद्द्योत-, G3.5 नानाविधो° (for नानायुधो°) T1 -विभूषिताङ्गा (for विदीपि°) — (L 722) K3 -कार्मुका सुरा (for -कार्मुकास्ते) — (L 723) K1.3 D4

मदोत्कटा वारणहस्तहस्ताः
सुदुर्जयास्तोयदनादनादाः ॥
विस्फारयन्तः सहसा धनूंषि
चक्राणि चादित्यसमप्रभाणि ।
समुत्क्षिपन्तो ह्यशनीश्च घोराः
खड्गांश्च ते वज्रमुखाश्च शक्तीः ॥
महागदाः काञ्चनपट्टनद्धा-
स्तथायसान्कार्मुकमुद्गरांश्च ।
शूलांश्च वृक्षांश्च विगृह्य दीप्ता
नदन्ति शूरा असकृद्रणस्थाः ॥

---

$T_1$ 2 $G_1$ 3 5 $M_2$ 4 रणोत्कटा, $K_4$ $\tilde{N}_2$ 3 $V_1$ 3 $B_1$ $D_n$ $D_{1-3}$ $G_2$ रणोत्सुका ( for मदोत्कटा ) — $K_3$ om line 724 — (L 724) $D_8$ जगर्जिरे ( for सुदुर्जयास् ) — (L 727) $K_3$ ह्यशनी सुघोरा, $V_3$ $D_1$ °नींश्च घोरान् ( for °नीश्च घोरा॰ ) — (L 728) $K_1$ $D_1$ वज्रप्रमुखाश्, $K_3$ चक्रा॰ $D_{s1}$ $D_6$ ते वज्रमुखाश्, $D_5$ ते वायुमुखाश्, $T_2$ $G_1$ 3 ते वज्रनिभांश् ( for ते वज्रमुखाश् ) $G_5$ वज्रांश्च ते खड्गमुखाश्च शक्ती॰ — (L 729) $K_3$ बद्धांस् ( for न॰ ) $K_1$ 2 4 $V_1$ 3 $B_3$ $D_1$ 4 5 महागदां काञ्चनपट्टनद्धा — (L 730) $K_3$ $D_5$ काञ्चन॰ ( for कार्मुक ) — (L 731) $B_1$ 3 शूलानि ( for शूलांश्च ) $T_{1.2}$ $G_{1\text{-}3}$ $M_{2\text{-}4}$ अपि ( for च वि ) $K_1$ 3 $D_1$ 5 शूलानि गृह्याथ तदा सुदीप्तान्, $D_6$ शूलानि वृक्षांश्च विसृज्य दीप्तान् — After line 732, $K_1$ 3 $\tilde{N}_2$ $V_1$ 3 B $D_n$ $D_3$ $D_{3-6}$ $T_1$ 2 $G_1$ 3 5 $M_2$ 4 ins

30** एतस्मिन्नन्तरे तेषामन्योन्यमभिनिघ्नताम् ।
द्वन्द्वयुद्धान्यवर्तन्त देवानां दानवैः सह ॥

[ (L 2) $B_3$ [अ]वर्धन्त ( for [अ]वर्तन्त ) ]

On the other hand $T_1$ 2 $G_1$ 3 5 $M_2$ 4 ins after line 732

31** शूलैस्तथान्ये पट्टिशैस्तथान्ये
खड्गैश्च पाशैरितरे महीपते ।
चापैस्तथान्ये मुसलैस्तथापरे
कुन्तैश्च केचिद्युधि युद्धवीराः ॥
चक्रैः कुठारैरसिभिस्तथापरे
गदाभिरायामविभूषिताभिः ।
अन्योन्यमाजघ्नुरथात्र वीरा
महासुरा देववराश्च राजन् ॥
शूलैश्च शूलानि समाहतानि
खड्गाश्च खड्गैः समभाहता नृप ।
कुन्तैश्च कुन्ता युधि योधवीरैः
समाहता सम्प्रति राजमानाः ॥
शरान्समाहत्य शरा समाहता
बाणान्समाहत्य तथैव बाणाः ।
रथी रथं याति बलान्महारणे
गजी गजं याति स कुन्तपाणिः ।
अश्वी हयं याति सुशीघ्रहस्त
सादी पदातिं स्फुरिताधरोष्ठः ॥
खड्गी च हत्वा युधि युद्धवीर
ननाद खड्गेन स खड्गपाणिः ।
पाशेन बध्वा समरे तु पादी
पाशं दधान स्फुरिताधरोष्ठः ॥
गजेन हत्वा गजमेव केवल
गजाधिपे खड्गवरेण पातिते ।
आकृष्य दन्तौ रिपुमन्यमाशु
जघान ताभ्यां विननाद भूयः ॥
कश्चिच्च सादिप्रमुप्रवीर्यो
हत्वा तदीयं च कुठारकुन्तै ।
अन्य समाहत्य तदीयमाशु
जग्राह शस्त्रं समरे महाबलः ॥
गजाश्च केचित्पतिता महारणे
हयाश्च सभिन्नशिरोधरा क्षितौ ।
रथाश्च केचिद्द्रवितोग्रनाकय
भटाश्च केचिन्मथिताश्च कूबराः ॥
तत्र सपाशाः प्रचरन्ति युद्धे
पिशाचसंघा अथ राक्षसोत्तमाः ।
गृध्रा बलाः श्येनकपोतकाश्च
विकृष्य मांसानि नदन्ति सर्वे ॥
उत्कृष्य चाकृष्य च मांसराशिं
पिबन्ति कामं रुधिरं द्याचानाम् ।
संछिद्य मांसानि बहूनि सख्ये
स्थानं विभज्याथ पिशाचसंघाः ॥
ततश्च तूर्याणि बहूनि सख्ये
नादं महान्तं प्रसभं प्रचक्रुः ।
शङ्खाश्च भेर्यः पणवाः सडिण्डिमा
चक्रुः प्रणादं बहुधा समाहता ॥
सक्षोभमीयुः सहसा च लोका
क्षुब्धाश्च सर्वे जलराशयश्च ।
समागमं दैत्यमहासुराणां
दिवौकसां युद्धमुपस्थितानाम् ॥
तस्मिन्सुघोरे महति प्रवृत्ते
रणोत्तमे देवमहासुराणाम् ।
द्वन्द्वानि युद्धानि बभूवुरत्र
देवासुराणां जयमिच्छतां नृप ॥

Colophon

[ (L. 4) $T_3$ $G_1$ 3 ते प्रवीरा॰ ( for युद्ध॰ ) — (L. 8) $T_1$ नाकयुतान्, $G_3$ 3 $M_2$ 4 नाकसदस् ( for दमनराश् ) — (L. 9)

मरुतां पञ्चमो यस्तु स बाणेनाभ्ययुध्यत ।
महाबलः सुरवर सावित्र इति य विदुः ॥
अनायुपायाः पुत्रस्तु बलो नाम महासुरः ।
सोऽयुध्यत रणेऽत्युग्रो ध्रुवेण वसुना सह ॥
नमुचिश्चासुरश्रेष्ठो धरेण समयुध्यत ।
सार्धं सर्वेण सैन्येन व्यादितास्य इवान्तकः ॥
विश्वकर्मा सुरश्रेष्ठो मयेन समयुध्यत ।
प्रवरौ विश्वकर्माणौ ख्यातौ देवासुरेश्वरौ ॥
पुलोमा तु महादैत्यो वायुना समयुध्यत ।
ससैन्यः पर्वताकारो रणेऽयुध्यत दर्शितः ।
हयग्रीवस्तु दितिजः सह पूष्णा त्वयुध्यत ।
शूरेणामितवीर्येण भास्कराकारवर्चसा ॥
शम्बरस्तु महावीर्यो महामायो महासुरः ।
भगेनायुध्यत तदा सहितो युद्धदुर्मदः ॥
शरभः शलभश्चैव दैत्यानां चन्द्रभास्करौ ।
प्रयुद्धौ सह सोमेन शिशिराक्षेण धीमता ॥
विरोचनस्तु बलवान्बलेर्बलवतः पिता ।
विष्वक्सेनेन साध्येन देवेन समयुध्यत ॥
कुजम्भस्तु महातेजा हिरण्यकशिपोः सुतः ।
अंशेनायुध्यत तदा प्रासप्रहरणेन वै ॥
असिलोमा तु बलिना मारुतेन समं विभो ।
तदायुध्यत दीप्तास्यो विकृतः पर्वतायुधः ॥
अनायुपायाः पुत्रस्तु वृत्रो नाम महासुरः ।
अश्विभ्या देववैद्याभ्या सहायुध्यत सयुगे ॥
एकचक्रस्तु दितिजश्चक्रहस्तो दुरासदः ।
सहायुध्यत देवेन साध्येन दितिजारिणा ॥

---

T1 G3 M2 समाहितानि (for समाह°) —(L 11) T1 G2 3 M2 युद्धवीरे, M3 युद्धवीरा (for योध°) —(L 14) T1 वाणे (for बाणा) —(L 15) D5 बलं (for बलान्) G1 रथ रथं याति बले महारणे —(L. 16) G3 गज (for गजी) —(L 17) M3 सत्त्व (for हस्त) —(L 18) T1 G2 पत्ती, G1 4 मादि C5 पादि (for सादी) M3 4 च पत्ति (for पदाति) —(L. 19) T2 G1 4 योधवीर, G5 युद्धवीरान् (for °वीर) —(L. 21) G1 हत्वा (for बध्वा) —(L. 22) G1 3 पाशान्धान (for पाश दधान) —(L. 28) G1 3 [अ]तिदीर्घैश्च (for तदीयैश्च) —(L 34) T1 M3 हताश्च (for भटाश्च) —(L. 35) T1 G3 5 शवादा, T3 G1 शवाशा (for सपाशा) —(L 36) M1 राक्षसाश्च (for राक्षसोत्तमा°) —(L. 39) M4 वत्कस्य (for °स्य) —(L 40) G1 4 M3 4 शवाशना (for शवानाम्) —(L 50) G6 मधुकरानाम् (for °त्सुकानाम्)

Colophon — *Sub parvan* T2 G1 3 M2 वामनप्रादुर्भाव — *Adhy no* T1 G4 299, G1 295, G2 201, G3 301, M3 4 11 ]

—(L 733) B1 3 D6 बाणं सोऽयुध्यतासुरम्, T1 G2 3 M3 4 बाणं सोऽयोधयत्तदा, T2 G1 बाणेनायोधयत्तदा (for °) —(L. 734) Ñ1 महाबलं सुरवरं, D3 °बलैर्महावीर्यं (for °) —(L 735) K1 बाणो; D6 बली (for बलो) —(L. 736) M4 क्रुद्धो (for ऽत्युग्रो) — T2 G1 M3 4 om (hapl) lines 737–741 —(L. 737) B3 ध्रुवेण (for धरेण) — K2 Ñ1 3 B om (hapl) lines 738 739 —(L 738) D6 वृत, T1 G3 5 दैत्य (for सार्धं) K4 व्यादितास्या इवान्तका (for °) —(L 739) D4 सुरज्येष्ठो (for °श्रेष्ठो) Dn धरेण सह युध्यत (for °) —(L 740) Ñ1 ख्यातौ देवासुरेषु वौ, D4 ख्यातौ देवेश्वरौ वरौ (for °) —(L 741) B1 3 D5 D6 बलिना वायुना सह (for °) — D8 (hapl.) lines 742–743 —(L 742) V3 D5 युध्यति, T1 G3 5 दर्पेण (for ऽयुध्यत) —(L 743) T2 M3 दितिजै (for °ज) V1 त्वष्ट्रा (for पूष्णा) —(L 744) B1 3 D6 Cal. ed तेजसा (for वर्चसा) — G2 om lines 745–748 —(L. 745) K4 D1 2 G1 4 5 महादैत्यो, T2 M4 °कायो, M3 °मायो (for °वीर्यो) D21 T1 महाकायो, T2 G1 4, M3 4 °वीर्यो (for °मायो) D22 महावीर्यो महाबल; D6 °बलपराक्रम (for °) —(L 747) K1 सरभ, T2 शबर (for शरभ) —(L. 748) *B3 Bom Poona eds G(ed.)* शैशिराक्षेण (for शि°) Ñ1 वीर्यवान् (for धीमता) T1 शैशिराक्षेण भास्वता (for °) —(L. 749) D3 बाणो बलवता वर (for °) —(L 750) Ñ1 सह युध्यते, Bom Poona eds G(ed.) *स स युध्यत* (for समयु°) B1 3 D6 T1 G3 5 *सहायुध्यत* दानव, T2 G1 4 M3 4 सहायुध्यत दानव (for °) —(L. 751) K4 कुसुम्भस्, V1 अज° (for कुज°) —(L. 752) K6 अशुना (for अंशेन) T2 G1 4 अह्नेनायुध्यत सह (for °) K1 3 D4 6 पाश-; D31 प्राप्त (for प्रास) —(L. 753) K3 समं विभु B1 3 D6 महाहवे (for समं विभो) T1 3 G1 3–5 M3 4 देवेन मरु(G1 4 M4 °द्)ता विभो (for °) —(L. 754) D3 दीप्तार्चिर् (*for* °स्यो) —(L. 755) D6 महाबल (for °सुर) —(L 757) D3 पञ्चवक्त्रस् (for एकचक्रस्) T1 3 G1 3 5 M3 4 महासुर (for दुरासद) — Ñ2 Poona ed om line 758 —(L. 759) T2 G1

बलस्तु मधुपिङ्गाक्षो वृत्रभ्राता महासुरः ।
मृगव्याधेन रुद्रेण सहायुध्यत वीर्यवान् ॥
राहुस्तु विकृताकारः शतशीर्षः शतोदरः ।
अजैकपादेन रणे सहायुध्यत दंशितः ॥
केशी तु दानवश्रेष्ठः प्रावृट्कालाम्बुदप्रभः ।
धनेश्वरेण भीमेन सहायुध्यत सयुगे ॥
वृषपर्वा तु बलिना सह निष्कम्भुना रणे ।
विश्वेदेवेन विश्वेशः सहायुध्यत वीर्यवान् ॥
प्रह्लादस्तु महावीर्यो वीरैः स्वैस्तनयैर्वृतः ।
युयुधे सह कालेन रणे काल इव स्थितः ॥
अनुह्लादः कुबेरेण धनदेन महारणे ।
गदाहस्तेन युयुधे क्षोभयन्रिपुवाहिनीम् ॥
विप्रचित्तिस्तु दैतेयो वरुणेन महात्मना ।
प्रवृत्तो वै रणं कर्तुं दैत्यानां नन्दिवर्धनः ॥
बलिस्तु सह शक्रेण सुरेशेन महात्मना ।
युयुधे देवराजेन बलिना बलवान्रणे ॥
शेषा देवाश्च दैत्याश्च जघ्नुरन्योन्यमाहवे ।
विनदन्तो महानादान्प्रासासिपरशक्तिभिः ॥
अदृश्यन्त महोत्पाता ये प्रोक्ता जगतः क्षये ।
मरुतः सप्त ते क्षुब्धा व्यशीर्यन्त महीधराः ॥
सप्त चैवोत्थिताः सूर्याः शोषयन्तो महार्णवान् ।
बहुधाभिन्नत धरा वायुना मथिता यथा ॥
व्युत्थिताश्च महामेघाः शक्रचापाङ्कितोदराः ।
प्रणेदुः सर्वभूतानि सर्वाः सतिमिरा दिशः ।
देवानामजयो घोरो दृश्यते कालनिर्मितः ॥
न ह्यन्तरिक्षं न दिशो न भूमि-

---

छोल्म् (for ब°) Ds1 पिङ्गाक्षो (for °क्षो) — K9 om lines 760-761 —(L 760) K3 राजेन्द्र, V1 M4 रौद्रेण (for रु°) D8 दानव (for वीर्यवान्) — B1 om (hapl) lines 761-766 —(L 761) B2 D3 पर्वताकार, M3 नित° (for विकृ°) B2 D6 महोदर (for शतो°) Bom Poona eds G(ed) शतशीर्षो म(Bom ed स)होदर (for b) —(L 762) B3 D6 वीर्यवान (for दंशित) D2 om lines 762b-765a —(L 763) D3 प्रावृट्कालाम्बुदोपम (for b) —(L 764) Ñ1 धीरेण, V3 B3 D6 महता (for भीमेन) K3 रुद्रेण सोऽथ भीमेन, T1 2 G1 3-5 M2 जलेश्वरेण धीरेण (M3 भीमेन) (for a) B3 वीर्यवान् T2 G1 4 दंशित (for सयुगे) —(L 765) K4 निष्कम्भिना, D5 निष्कुम्भुना, T1 निष्कम्बुना, M4 °म्भिना (for °म्भुना) Ñ1 पुरा (for रणे) Ñ2 D1 5 निकुम्भेन महारणे (for b) — Ñ1 om lines 766 771 —(L 766) K3 D4 विश्वेदेवैस्तु Dn विश्वदेवेन, G3 वैश्व° (for विश्वे°) K2 G1 विश्वेन, Ñ3 V1 2 साध्येन, B3 Cal ed देवेन, D6 देवेश (for विश्वेश) T1 G3 वैश्वदेवेन विश्वेन (for a) —(L 767) K4 तैस्(for स्वैस्) D3 वीरैस्तैर्नैस्तैर्वृत (for b) —(L 768) K4 Dn D1 2 T2 [अ]पर (for स्थित) —(L 769) V1 महात्मना, V3 B1 2 D3 D6 Cal ed °बल° (for °रणे) —(L 770) D6 T1 G3 शोभयन् (for क्षो°) V3 B1 3 D3 देव (for रिपु) —(L 771) V3 B1 3 D6 M4 दैत्येन्द्रो, D3 दैत्येशो (for दैतेयो) T1 G3 यमेन च (for वरुणेन) — K1 3 D1 om (hapl) lines 772-773 —(L 773) M3 सुरेन्द्रेण (for °शेन) —(L 774) T1 2 G1 3 5 M3 4 देवराजश्च (for °राजेन) K2 D1 बलिस्तु, T2 G1 4 M3 बलिश्च (for °ना) —(L 775) V1 देवेषा (for दैत्याश्च) T2 M4 रणाय (for जघ्नुर्) —(L 776) K1 निनदन्तो (for विनदन्तो) Ñ1 गद (for -नाद) V3 D3 वृष्टिभि, D6 (marg) T2 G1 2 5 पाणय (for शक्तिभि) D4 प्रासतोमरवृष्टिभि (for b) —(L 777) D5 महादैत्या (for महोत्पाता). Ñ1 अदृश्यन्तत्र चोत्पाता (for a) T1 2 G1 3 4 M3 युगसं, M4 नृप स (for जगत) —(L 778) K1 2 D4 5 सागरा, K4 Ñ1 2 V1 B1 3 Dn D5 D1-8 मारुता (for मरुत) T1 G3 5 M3 4 संक्षुब्धा (for ते क्षुब्धा) T2 G1 4 मारुता सह संक्षुब्धा (for a) Ñ1 V3 B1 3 D6 च पर्वता (for महीधरा) —(L 779) Ñ1 T2 G1 4 5 M3 4 महार्णवम् (for °वान्) —(L 780) M2 वसुधा (for बहुधा) T1 2 G1 3-5 M3 4 वसुधाभिद्यत तदा (for a) B1 3 D6 मथ्यमानेन वायुना; T1 G3 4 मथ्यमाना च वायुना, T2 G1 4 M4 मथ्यते (M4 °ता) वायुना तदा (for b) —(L 781) D3 व्यथिताश्च, D5 T2 G3 4 उत्थि°; T1 अर्दि° (for व्युत्थि°) T2 G1 4 शक्रचापाङ्किताधरा (for b) — D3 om line 782 Ñ1 om line 783 —(L 783) K3 सक्षयो, B1 अजयो (for मजयो). B1 3 D3 D6 देवानामनय क्रूरो (B1 कृत्वा) (for a) — For line 783, T1 2 G1 3-5 M3 4 subst

33** देवानामरय शूरा दृश्यन्ते कालनिर्मिता ।
[T1 निर्जिता (for निर्मिता)]

T1 2 G1 3-5 M3 4 cont V3 B D3 D6 ins after line 783

33** घोरोत्पाता समुद्भूता युगान्तसमये यथा ।
[B D3 D6 T1 G3 घोरोत्पात समुद्भूत (for a)]

—(L 784) Ñ3 V1 2 B D3 D6 [अ]न्तरीक्षं (for °रिक्षं).

२ हरिवंश—८५

न भास्करोऽदृश्यत रेणुजालैः ।
ववुश्च वातास्तुमुलाः सधूमा
दिशश्च सर्वास्तिमिरोपगूढाः ॥
एते चान्ये च बहवो दृश्यन्ते देवनिर्मिताः ।
भूमौ तथान्तरिक्षे च घोरोत्पाताः समन्ततः ॥
तद्युद्धं देवदैत्यानां भीमानां भीमदर्शनम् ।
अपश्यत गुरुर्ब्रह्मा सर्वैरेव सुरैः सह ॥
वेदैश्चतुर्भिः साङ्गैश्च विद्याभिश्च सनातनः ।
पद्मयोनिर्वृतः श्रीमान्सिद्धैश्च परमर्षिभिः ॥
नानामणिस्तम्भसहस्रचित्र-
मारुह्य यानं ददृशे स्वयंभूः ।
सुभास्वरं भूतसहस्रयुक्तं
प्रदीप्यमानं वपुषा परेण ॥
सुतप्तजाम्बूनदचारुचित्र-
मानन्दभेरीशतसप्रणादम् ।
नक्षत्रचन्द्रांशुभिरंशुमन्तं
वैदूर्यसोमार्कविभूषिताङ्गम् ॥
तमात्मजो वै पुलहः पुलस्त्य-
स्तथा मरीचिर्भृगुरङ्गिराश्च ।
ऋक्सामभिः सम्यगभिष्टुवन्तः
सेवन्ति देवं वरदं विमाने ॥
त पावका लोकगुरुं स्वयंभुवं
साङ्गाश्च वेदा मरुद्देवताश्च ।
सेवन्ति देवं भुवनेश्वरेशं
भूतानि चान्यानि महानुभावम् ॥
एते च भूयश्च मनुष्यसंघा
वैखानसाः पावकयोनयश्च ।
सर्वे ययुर्देवपुरोहिताश्च

T1 न वह्निर्न च द्यौर्, T2 G1 3 5 M2 4 न ( T2 G1 4 तु ) मही न च द्यौर् ( for न दिशो न भूमिर् ) — ( L 785 ) K4 V3 B2 D5 दृश्यते ( for ऽदृश्यत ) G5 -जाले ( for -जालैः ) Ñ1 न भास्करो दृश्यते रश्मिजालैः — ( L 786 ) D5 परुषा ( for तुमुला ) D6 ववु सुवातास्तुमुला सधूम्रा — Before line 788, K4 D4 ins वैशंपायन — ( L 788 ) Ñ1 बहुधा ( for बहवो ) T1 2 G1 3 6 M4 काल- ( for देव ) — ( L 789 ) T1 2 G1 3 5 M1 4 भौमाश्चैवान्तरिक्षाश्च ( for ° ) K2 4 Dn D1 2 4 T1 G3 महोत्पाता ( for घोरो° ) T2 समचिता ( for समन्तत ) — After line 789, T2 ins

34** युगान्तसमये तथा एते चान्ये च तत्वत ।

— ( L 790 ) Ñ1 D5 सैन्याना ( for -दैत्याना ) T2 G1 4 शूराणा ( for भीमाना ) T1 G3 5 शूराणां भीमदर्शिनाम् ( for ° ) — ( L 791 ) D3 अथापश्यद्, T1 2 G1 4 5 M2 4 अत्रैक्षत ( for अपश्यत ) D अपश्यदमनो ब्रह्मा ( for ° ) B1 G1 3 5 सुतै ( for सुरै ) T1 2 सर्वैर्देवमुनै सह ( for ° ) — ( L 792 ) D3 तु सर्वै, T1 G3 च बहु T2 G1 3 5 M2 4 च विभुर् ( for साङ्गैश्च ) V3 सोपाङ्गैश् ( for विद्याभिश्च ) — ( L 793 ) K2 प्रसिद्धै, D3 वृद्धैश्च ( for सिद्धैश्च ) — ( L 794 ) D1 -विध ( for मणि ) T1 G3 -जालम् T2 M2 4 -पादम् ( for चित्रम् ) — ( L 795 ) Dn1 G3 स्वयभुव ( for स्वयभू ) — ( L 796 ) K4 शुभस्वर, D3 सुभासुर ( for °स्वरं ) V3 हेम, D3 दस ( for भूत ) — ( L 796 ) D5 प्रदीप्यमानं ( for प्रदी° ) K1 3 D4 T1 G1 3 4 M2 वरेण ( for प° ) — ( L 798 ) G6 स तत्र ( for सुतप्त ) T1 G3 5 चित्रमाल्यम्, Bom Poona eds G(ed) मणिचित्रम् ( for -चारु° ) B1 3 D6 Cal ed प्र( B1 सु )तप्तजाम्बूनदशामचित्रम्, T1 G1 4 M2 4 सुरत्न( M1 4 °क )जाम्बूनदचित्रमाल्य( M2 °बाहु )म् — ( L 799 ) K1 3 V1 B1 D5 D3 6 समस, V3 -पटह ( for -शतस ) Ñ1 आनन्दभेरीसमसप्रहारम् — ( L 800 ) K3 -वृन्दांशुभिर्, B2 D1 -चण्डांशुभिर्, T1 3 G1 3-5 M2 4 -शीतांशुमद् ( for चन्द्रांशुभिर् ) — ( L 801 ) V3 विभूषणाङ्गम्, T1 G1 3-5 °पितान्तम् ( for °पिताङ्गम् ) — ( L 802 ) Ñ2 Dn D2 तमात्मजा वै, V3 T1 G3 M2 तदात्मजा वै, D3 तमात्मजास्ते ( for °त्मजो वै ) — D3 om lines 804–805 — ( L 805 ) T1 3 G3 5 M2 4 स्तुवन्ति ( for से° ) D2 4 ( marg ) भुवनेश्वरेशम् ( for वरदं विमाने ) — ( L 806 ) K3 पाठका ( for पावका ) Ñ1 च सन्त, V1 स्वयभुं, T2 G1 4 दिवीशा, G3 M2 4 दिवदि ( for स्वयभुवं ) B1 3 D6 त पावका देवगुरु दिवी( B3 गिरी )श. D3 ऋतुर्वसिष्ठाश्च तथा स्वयभुव, T1 G5 त पावके लोकगुरु दिवीश — ( L 808 ) B1 सेव्य ( for देव ) K3 D2 वरदे ( D2 °दं ) विमाने, K4 भुवने सुरेशं ( for °नेश्वरेशं ) D3 सेवन्ति सेव्य भुवनस्य शभुं, T1 3 G1 3 5 M2 4 सिषेविरे सेव्य( G1 4 5 देव )मशेषलोकैर् — ( L 809 ) T1 2 G1 3 5 M2 4 नार्थं हि भूतानि महानुभावम् — ( L 810 ) Ñ2 V1 3 B Dn D3 D5 6 T1 3 G1 3-5 M2 4 महर्षिसंघा ( B1 3 D6 °मुख्या ) ( for मनुष्य° ) D5 एते बभूवुश्च मनुष्यसङ्घा — ( L 811 ) K4 Ñ1 D1 T1 3 G1 4 वैश्वानरा ( for वैखानसा ) — ( L 812 ) B1 3 D6 T2 G1 4 M2 4 -पुरोधसश्च ( for °हिताश्च ) T1 G3 5 सर्वे पुनर्देव-

युद्धोत्सुकाः सर्वसुरासुराणाम् ।
योगेश्वराः षट् च दिवाकराभा
वाग्भूषणैर्भूषितसर्वदेहाः ।
अन्तर्हिता वै ददृशुर्नभःस्था
नारायणश्चैव नरश्च देवः ॥
धनुर्भिश्चतुर्वेदधरैश्चतुर्भिः
सपूर्णचन्द्रप्रतिमैः सुकान्तैः ।
सर्वा दिशो निस्तिमिराश्चकार
नवोदितोऽसौ शरदीव चन्द्रः ॥

Colophon

वैशंपायन उवाच ।
उभयोः सेनयो राजंस्तयोर्युद्धमवर्तत ।
नादेन सचालयता त्रैलोक्यमिदमव्ययम् ॥
गोमुखाडम्बराणां च भेरीणां मुरजैः सह ।
झर्झरीडिण्डिमाणां च न्यश्रूयन्त महास्वनाः ॥
प्रवृत्तो युद्धयज्ञस्तु तुमुलो लोमहर्षणः ।
रणभूमौ महानादः स्वर्गाय शूरसमतः ॥
स युद्धयज्ञस्य मुखे प्रह्रादो दैत्यसत्तमः ।
विरोचनस्तथाध्वर्युर्युद्धयज्ञप्रवर्तकः ॥
होता चैवात्र नमुचिर्वृत्रः स्तोत्रोपकल्पकः ।
मन्त्रा दैत्याः समाख्याता यज्ञकर्मणि तत्र वै ॥

पुरोधसश्च — (L. 813) Ñ1 द्वन्द्वोत्सुकाः, Ds2 युद्धो° (for युद्धो°) — (L. 814) K2 D1 चन्द्र, D3 चेन, T2 G3-5 M3-4 सप्त (for षट् च) G1 योगीश्वरा सप्त द्विवाकराभा — (L. 815) K3 Ñ3 V1 B D4-5 M1 विभूषणैर्, D3 भास्भू° (for वाग्भू°) G5 °गात्रा (for °देहाः) T1 G3 विभूषणैर्भूषित सर्वगात्रा — T2 G1-3 M4 ins after line 815; M2 after line 809

35** जगत्पतिर्देवपतिर्जनार्दन-
शिखी च चक्री शरशार्ङ्गधन्वा ।
अन्तर्हितो माधव एव साक्षा
द्रष्टा रणं याति नगेन्द्रमीश ।

[T1 om lines 1-3 — (L. 3) G3 M3-4 शार्ङ्गी (for शिखी) — (L. 4) T2 G1-3 द्रष्टु रणे (for द्रष्टा रणं) M4 ईशम् (for ईश)]

— (L. 817) T2 नारायण चैव नभस्थदेवम्, G3-5 °ण चैव नर च देवम् — (L. 818) T1 वेदमयैश्च (for °धरैश्च) — (L. 820) K3 वितिमिराश्च (for निस्ति°) — (L. 821) T1 G3 द्या सान्धकारामुदितो यथेन्दु, T2 G1-4 M1-4 द्या साम्बराम भ्युदितो यथेन्दु

Colophon — Mention of the Epic: K3 Dn1 Ds2 D1-5 — Mention of Khila: Ñ2 V1-3 B Dn Ds D1-4-5 — Sub parvan: K1-2-4 Ñ1 V1-3 B1-3 Dn Ds D1-2-4 वामनम्, K3 B1 D3-5 T2 G1 M1-4 वामनप्रादुर्भाव — Adhy no: K3 26, V3 Ds1 239, B2 240, Dn 233, D1 225, D3 251, D4 233, T1 G3 300, G1 296, G4-5 302, M1-4 12

After the ref, D3 T1-2 G1-3-5 M1-4 ins

36** शृणुष्वावहितो राजन्यथा युद्धमवर्तत ।
कीर्तनाद्यस्य युद्धस्य पाप्मा सद्यो विमुच्यते ॥

[(L. 2) T1 G3-5 M1-4 अस्य (for यस्य) D6 पापात् (for पाप्मा)]

— (L. 822) B1-3 Ds D5-6 G2 M1 भूयो, D2 T1 M2 ततो, T2 G1 तथा, G4-5 यथा (for तयोर्) D3 प्रवर्धत (for °र्तत) — (L. 823) Ñ1-2 Dn Ds D5 T1 सचालयता, T2 G3-5 M3 व्यचलत्सेना, G1-2 व्यचलयता; M4 व्यथमत्सेना (for सचालयता) K3 B2-3 चालयन्त्य स्वनादेन, B1 D6 सचालयन्योर्नादेन (for °) — (L. 824) V3 स्वराजै (for मु°) T1 G3-5 M1-4 भेरीमुरव (M4 °पटव) नादिनाम्, T2 G1 भेरीमुरवनिस्वना (for °) — (L. 825) K1-2 Dn1 D3 जजरी, K3 D1 जझरी, K4 दर्दरी, B1 Ds1 झझरा, D2 घर्घरी, Bom Poona eds G(ed) झल्लरी (for झर्झरी) T1 व्यश्रूयत महास्वन, T2 G1-4 श्रूयते च महास्वन (for °) — (L. 826) K3 D2-6 प्रवृद्धो (for °त्तो) — (L. 827) K4 D1-2 रणमध्ये (for °भूमौ) G3-4 महाञ्छब्द (for °नाद) T1 रणमध्ये महाञ्छब्द (for °) V3 °सपद (for °समत) D3 स्वर्गाय सुरसगम, T1-2 G1-3-5 M1-4 स्वर्ग (M2 °र्ग) शूराभिसंमत (for °) — (L. 828) Ñ3 K4 V1 B Dn Ds D5-6 युद्धयज्ञस्य नेताभूत् (K4 प्रमुखे), T2 G1-3-5 M1-4 युद्धयज्ञस्य ब्रह्माभूत् (for °) Ñ1 V3 B1-3 D2 प्रह्रादो नाम दानव (Ñ1 नामत°), T2 G1-3-5 M1-4 प्रह्रादो दानवोत्तम (for °) — (L. 829) D1 युद्धयज्ञ प्रवर्तत, T1-2 G3-5 M1-4 युद्धयज्ञ (T1 G3 °ज्ञो)ऽभवत्तदा; G3 यज्ञयुद्धेऽभवत्तदा (for °) — K1-2 D3 om line 830 — (L. 830) K3 Ñ2 V1-3 D2 M1 तत्रोप°, D3 सू°, M2 पुत्रोप (for स्तोत्रोप) V3 G1 °कल्पित (for °कल्पक) Ñ1 G4 वृत्रस्तत्रोपकल्पित (for °) — (L. 831) D3 अन्ये (for मन्त्रा) T1 प्रतीता ये (for समाख्याता) Ñ1 मन्त्राय प्रेरिता दैत्याः; B1-3 D3 मन्त्राश्च दैत्या प्रथिताः; T2 G1-3-5 M1-4 मन्त्रा (G3 मित्रा) दैत्यसमन्विता (for °) — (L.

अनुयातश्च पितरमधिको वा पराक्रमे ।
यष्टा तत्राभवद्बाणः सयुगे चोपतिष्ठति ॥
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं सुदुर्जयम् ।
मन्त्रास्तत्राभ्यवर्तन्त साध्वनुह्रादयोजिताः ॥
उद्गाता च मयः श्रीमान्स्थितः सर्वभयंकरः ।
विनदन्दितिजश्रेष्ठो देवानीकं व्यदारयत् ॥
बलिस्तु राजा द्युतिमाञ्श्वश्चत्र महासुरः ।
जपैर्होमैश्च सयुक्तो ब्रह्मत्वमकरोत्प्रभुः ॥
रणाग्निर्ज्वलितो घोरो वैरेन्धनसमीरितः ।
देवो विष्णुः सुरैस्तत्र रथवेदा सुसस्कृतः ॥
शङ्खशब्दैः सुतुमुलैर्भेरीणां च महास्वनैः ।
उद्घुष्टं विपुलं चैव सुब्रह्मण्यं प्रयुज्यते ॥
बलश्च बलकश्चैव पुलोमा च महासुरः ।
प्रशान्तरूपं कृत्वा तु मन्त्रं सम्यक्प्रवर्तयन् ॥
कल्माषदण्डा विमला विपुला रथपङ्क्तयः ।
यूपाश्च समकल्प्यन्त युद्धयज्ञे महाफले ॥
कर्णिनालीकनाराचवत्सदन्तोपबृंहकाः ।
तोमराः सोमकलशा विचित्राणि धनूंषि च ॥

832) K1 D1-3 अनुज्ञातश्च, K3 T1 °ह्लादश् (for °यातश्) Ñ2 V1 Dn D6 पितृभिर् (for पितरम्) V3 अनुज्ञातश्च पितृभिर् (for °) Ñ2 V1 3 B1 3 D3 D5 6 T2 G1 3 5 पराक्रमै, D3 °क्रम, D4 °क्रमम् (for °क्रमे) — (L 833) K3 4 D1 2 [उ]पतिष्ठत, Ñ2 V1 3 B3 Dn D3 D5 °ते (for °ति) K2 D4 सयुगे नोपतिष्ठते (for °) — For line 833, B1 3 D6 subst.

37** यष्टा वै तत्र बाणस्तु सम्यगेवावतिष्ठते ।

On the other hand, T1 3 G1 3-5 M3 4 subst for line 833

38** नेष्टा तत्र स बाणस्तु समरे चावतिष्ठत ।
[ T1 G2 [उ]पतिष्ठन, M4 [अ]वतिष्ठन (for °त) ]

— (L. 834) K1 V3 D1 स्थूलाकर्णं, D4 स्तना° (for स्थूणा°) — (L 835) D5 यज्ञास्तत्राश्च वर्तन्ते (for °). K3 D4 सर्वेऽनु (for साध्वनु) K1 3 D4 अनुह्रादप्रयोजिता (for °) — After line 835, T2 G1 3-5 M3 4 ins

39** दैत्याश्च प्रथिता मन्त्रे यज्ञकर्मणि तत्र वै ।
[ G3 M3 मत्रा (for मन्त्रे) ]

— (L. 836) K3 B D5 6 शत्रु- (for सर्व) Ñ1 आस्थित स महाबल, Ñ2 V1 3 D5 °तो वै महाबल; T1 3 G1 3-5 M3 4 स्थितस्तत्र महाबल (for °) —(L. 837) T1 3 G1 3 5 M3 4 नादेन (for विनदन्) D3 विनदन्नि द्विजश्रेष्ठा (for °) K1 D1 विदारयन् (for व्यदारयत्) B3 देवानीकान्यवर्तयत्; D6 °कान्यवेदयत्, T2 G1 4 °कान्यपूरयत्; M3 4 °न्यपूरयत् (for °) — (L. 838) K1 मयस्तत्र, B1 D5 स्वयं तत्र, D3 तत्र तत्र, T1 3 G1 3-5 M3 4 शम्बरश्च (for श्वश्चत्र) — For line 838, B1 3 D6 subst

40** बलिस्तु बलवान्राजा वैश्वानरसमद्युतिः ।

— (L. 839) K3 V3 B1 3 Dn1 D1-4 6 G3 M3 जप्यैर्, K4 Ñ1 3 B3 D3 T2 G4 जाप्यैर् (for जपैर्) D5 सयुक्तैर् (for °क्तो) V1 जप्यैश्च होमैः संयुक्तैर्, Dn1 जप्यैर्होमैश्च संयुक्तैर्; G1 5 जा(G5 °ज)प्यैर्होमैश्च सयुक्त (for °) T1 3 G1 3-5 M3 4 शास्त्रिम् (for ब्रह्मत्वम्) D5 अगमत् (for अकरोत्). — (L 840) D3 ज्वालितो (for ज्व°) K3 वैरोचनि, T1 3 G1 3-5 M3 4 प्राणेन्धन (for °वैरे°) V1 समन्वित (for समीरित) — (L 841) K1 3 Ñ2 V1 3 D5 हूयते स्वसुरैस्तत्र, D6 हूयते स्वसुरैः सर्वैः (for °) D6 रण (for रथ-) B1 D5 सुमवृत (for सुसंस्कृत) D51 रथविद्यां समर्पित, D3 °कव्यां सुसंस्थिता, D5 (marg) Bom Poona eds G(ed) देवो विष्णु सुरैः सह, T1 3 G1 3-5 M3 रणवेद्या सुसंस्कृत (for °) — (L 842) D3 शङ्खस्वनैः (for °शब्दैः) Ñ3 T1 3 G1 3 5 M3 4 शङ्खशब्द सुतुमुलो; B1 3 D6 °शब्द सुविपुलो (for °) B1 3 D6 T1 3 G3 5 M3 4 महास्वन (for °स्वनैः) K4 Ñ2 V1 Dn D1-3 भेर्यश्च सुमहास्वना (for °) — (L. 843) D3 त्रिघुष्टं (for उद्घुष्टं) B1 3 D6 तुमुल, Bom Poona eds G(ed) विमलं (for त्रिपुलं) K3 उद्घुष्ट त्रिमलं चैव; T1 G3 उद्घुष्टस्तुमुलश्चैव (G3 °ष), T2 G1 3 5 M3 4 उत्कृष्टस्तु(G5 M3 4 °ष्ट तु)मुलं चैव (for °) K3 4 Ñ2 V1 3 D1 3 प्रयुज्य च; D5 प्रपद्यत (for प्रयुज्यते). D4 ब्रह्मण्यं सुप्रजायते, Bom Poona eds G(ed) ब्रह्मण्यं सुप्रयुज्यते (for °) — (L 844) D5 T1 3 G3-5 M3 4 बलश्चातिबलश्चैव (for °) — (L. 845) B Dn D3 D5 6 T1 प्रशान्तं च सम कृत्वा; T2 G1 3-5 M3 4 प्रशान्तवपु(M3 4 °पु)र्मं कृत्वा (for °) K1 3 Dn सत्र (for मन्त्रं) D3 प्रवर्तते, T1 3 G1 3-5 M3 4 प्रचक्रिरे (for प्रवर्तयन्) Ñ1 सत्रं सम्यक्प्रवर्तयत्, V3 सत्र सम्यगवर्तयन्, B D3 D5 सत्र सम्यक्प्रचक्रिरे (for °) — (L. 846) M3 विपुला (for विमला) D1 6 त्रिमला (for विपुला) D3 ध्वज (for रथ) T1 3 G1 3 5 M4 -शक्तय- (for -पङ्क्तय) M3 विमला रथशक्तय (for °) — (L. 847) K1 3 D4 महाबले; Ñ1 °बला (for फले) T1 3 G1 3 5 M3 4 तत्र युद्धमहामखे; G3 तत्र युद्धे महाहवे (for °). — (L. 848) K1 G4 Bom Poona eds G(ed) कर्णनालीकनाराचा, Ñ2 T1 3 G1 3 M3 4 कर्णनालिक-

शृण्वतां वदतां चैव सलोको भवति ध्रुवम् ॥

Colophon

युधिष्ठिर उवाच ।

गोदानं हि महत्पुण्यमिति चाहुर्महर्षय ।
विस्तरेण जगन्नाथ तन्मे त्वं कृपया वद ॥
केन चादौ पुरा दत्ता प्राप्यते सुमहत्फलम् ।
तत्सर्वं हि भवान्वेत्ति कृपया वद सुव्रत ॥

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि श्रोतॄणामघनाशनम् ।
सुशर्मणस्तु चरितं सर्वमङ्गलदायकम् ॥
सुशर्मा नाम विप्रेन्द्रो ब्राह्मणो वेदपारग ।
शान्तो जितेन्द्रियो राजन्सर्वसंपत्समायुत ॥
सर्वक्रतु सदा यज्वा विशेषेण मम प्रिय ।
नित्यं दानरतो नित्यं सदा सर्वहिते रत ।
पुराणवक्ता कौन्तेय बन्धूनां हितकृत्सदा ॥
एवं प्रवर्तमानस्य चतुपुत्रस्य धीमत ।
जरा प्राप्ता तदा राजन्सपत्नीक नृपात्मज ॥
पलितं तु स्वक देहं दृष्ट्वा राजेन्द्र स द्विज ।
वनं विवेश धर्मात्मा मुनिवृन्दनिषेवितम् ॥
तत्राराध्य परं देवं वासुदेवाख्यमव्ययम् ।
जगाम तपसा स्वर्गं संशोषितकलेवर ॥
तत्र तिष्ठति धर्मिष्ठे विप्रवर्ये युधिष्ठिर ।
वृत्रारेर्निकटं प्राप्ता देवदूता महाबला ॥

ऊचु ससंभ्रमं राजन्देवराजं पुरंदरम् ।
बलभिद्धूयतां देव यदर्थमिह चागता ॥
यमदूता महात्मान पाशहस्ता भयंकरा ।
स्वर्गार्हान्मनुजानाथ ह्यस्माकं वशवर्तिन ।
निरुध्य पथि ते दूता प्रापयन्ति यमालयम् ॥
तै सार्धं बहुधा युध्य ह्यशक्तास्त्वामुपागता ।
तदुपाय वदस्व त्वं येनेदं प्राप्नुवन्ति ते ॥

इन्द्र उवाच ।

दिवं समाश्रया यान्तु धर्मिष्ठा मनुजोत्तमा ।
पापिनो नरकं ज्ञेयं धर्मिष्ठानां त्रिविष्टपम् ॥
सर्वेषां गोप्रदानेन पापराशि प्रणश्यति ।
तत्पर यान्तु धर्मिष्ठा गोदानाद्धूतकल्मषा ।
तदाप्रभृति धर्मिष्ठा दृष्ट्वा यान्ति यमं दिवम् ॥
तदद्भुतमिदं दृष्ट्वा ब्राह्मणो देवसंनिधौ ।
उपदेष्टुं स्वकान्पुत्रानियेष द्विजसत्तमः ॥
पुत्राणां सन्निकाशं तु विमानेन समेत्य च ।
पुत्रा शृणुत मद्वाक्यं यूयं स्वर्गं यदीप्सथ ।
दातव्यं गोप्रदानं हि युष्माभिस्तु प्रयत्नत ॥
अशरीरं वच श्रुत्वा पुत्रा मनुजना अपि ।
आश्चर्यं परमं जग्मुर्घोषयन्ति स्म नित्यश ॥
तच्छ्रुत्वा विस्मिता सर्वे द्विजा गोदानतत्परा ।
असमर्थास्त्वन्त्यकालेऽपि निश्चय इति सर्वत ॥
तस्मादद्य गोदानमपमृत्युविदारणम् ।

---

तथा ). — ( L. 516 ) D1 ददता ( for व° ) G2 शृण्वतामपि सर्वेषा ( for ° ). G(ed ) सदा ( for सलोको ).

Colophon — *Sub-parvan* D1 आश्चर्यपर्व ; — *Adhy name* · D1 भूदानप्रशंसा , G1 भूदानप्रशंसनम् . G2 भूमिदानप्रशंसा ; M1 भूदानवर्णनम् ; G(ed ) भूदानमाहात्म्यकथनम्. — *Adhy. no* D1 G1. 2 M1 G(ed ) 4

( L. 517 ) G(ed.) महापुण्यम् ( for महापु° ) D1 मनीषिण ( for महर्षय ). — ( L. 519 ) D1 [र]ं ( for [आ]दौ ). M1 दत्त ( for दत्ता ) D1 प्राप्यत च , G(ed ) प्राप्त येन ( for प्राप्यते सु- ).—( L. 520 ) G2 भगवान् ( for हि भवान् ).—( L. 521 ) G2 पार्थ प्र- ( for पाण्डव ) — After line 522, G2 ins. :

45** अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।

—( L. 524 ) G1 दान्तो ( for शान्तो ). G(ed ) -समन्वित ( for -समायुत ) — ( L. 525 ) G(ed.) -क्रतुपरो ( for -क्रतु: सदा ). — ( L. 526 ) G1 G(ed ) स्नेह ( for the second नित्यं ). G1 पुत्रे ( for -ते ) — ( L. 527 ) D1 पौरव्य ( for कौन्तेय ). — ( L. 529 ) G1. 2 M1 G(ed ) समभवत् ( for प्राप्ता तदा ). — ( L. 533 ) G(ed ) प्रभु ( for पर ) — ( L. 534 ) G(ed ) अत्र ( for तत्र ). — ( L. 535 ) M1 प्राप्य ( for प्राप्ता ). — ( L. 537 ) G1 भवद्भि ( for बलभिद् ) M1 राजन् ( for देव ). — ( L. 541 ) D1 G(ed ) युध्वा ( for युध्य ) — ( L. 542 ) G1. 2 येन ( for येन ) — ( L. 543 ) G1. 2 M1 यमाश्रया ( for स° ). G2 धर्मिष्ठा मनुजेश्वरा ; G(ed ) °ष्ठा यान्तु ते नरा ( for ° ). — For line 544, G(ed ) subst.

46** पापिनो नरकं यान्ति न तु पुण्यकृतो हि मे ।

— After line 545ᵃ, G(ed ) ins :

47** गुरुपोषः परस्थित ॥
तस्मात्ते गोप्रदानात्तु शुचि पापरता अपि ।
आयान्तु स्वर्ग शीघ्रं नात्र कार्या विचारणा ॥
अदानाच्च दूतैर्ते गृहीता न तु धर्मै ।
इत्युक्त्वा यमराजाय ज्ञानानायां मायिरम् ॥
यमदूतास्तदा दूतास्तत्रिन्द्राज्ञया तदा ।

—G(ed ) om lines 545ᵇ-547ᵃ. — ( L. 546 ) M1 तत्रापि नरतु धर्मिष्ठा ( for ° ) D1 धौत ( for धूत- ). — ( L. 547 ) G2 दिवि ( for दिवम् ). D1 सर्वे गोदानतत्परा ( for ° ). — ( L. 548 ) G2 G(ed ) तत् ( for तत् ) — ( L. 550 ) D1 च समेत्य ; G(ed.) स स° ( for सम° ). — After line 550, D1 ins. :

48** उवाच वचनं धीमान्धर्मयुक्तो महाद्विजः ।

— ( L. 551 ) G(ed ) शृणुत ( for °त ). — ( 553 ) G1. 2 G(ed ) अशरीर- ( for °रं ). — ( L. 554 ) D1 G(ed ) सर्वे ( for परमं ) D1 G2 M1 सर्वत: ( for नित्यश ) — ( L. 556 ) G2 अन्त्य ( for अन्त्य ). D1 असमर्थान्त्यकालेऽपि ( for ° ) D1

दुर्भिक्षे वा सुभिक्षे वा ह्यन्नमेव सदा ददत् ।
द्विजशूद्रान्त्यवर्णेभ्यो मृष्टान्नं ददाति च ॥
अन्नदानं दृढं कृत्वा स्थिते तस्मिन्महात्मनि ।
सुरलोकेऽथ गन्धर्वाः कीर्तयन्ति स्म तं द्विजम् ॥
एतच्छ्रुत्वा देवपतिः परीक्षायां समुत्सुकः ।
आजगामाथ विप्रस्य मन्दिरं ब्रह्मपूजितम् ॥
संदिश्य च महामेघान्पुष्कलावर्तकान्द्रुतम् ।
वृष्टिमुत्पादयामास सप्तरात्रं निरन्तरम् ॥
जलाकुलमभूत्सर्वं दशयोजनमात्रकम् ।
तस्मिन्काले ह्यसौ देवो ब्राह्मणो विप्ररूपधृत् ॥
वृद्धः खञ्जो यष्टिहस्तः सूक्ष्मदृष्टिः क्षुधातुरः ।
स्वस्ती युक्त्या ययाचेऽन्नं घर्घराघोषसंयुतः ॥
विप्ररूपधरं देवं दृष्ट्वा राजेन्द्र धर्मवित् ।
प्रत्युत्थानाभिवादाभ्यां पादौ चापि प्रपीड्य च ॥
उवाच मतिमान्धर्मी ब्राह्मणेषु दृढव्रतः ।
कृतार्थोऽस्मि महाभाग भवदागमनेन हि ॥
कुलं वित्तं श्रुतं गेहं पुत्रपौत्रादयः सुहृत् ।
सर्वे ते मम पत्न्यश्च धन्या एव त्वदागमे ॥
पितरो मे महाभाग गावो मे जन्म चैव हि ।
धन्या एवाद्य मे सर्वा भूत्वा जन्मान्तराणि च ॥
इदानीं सुदिनं जातं जीवितं च सुजीवितम् ॥
एवं वदति विप्रेन्द्रे तस्मिन्धाराकुले दिने ।
भार्या प्रक्षाल्य यत्नेन साध्वी पाकमथाकरोत् ॥
तत्र प्रक्षाल्य विप्रेन्द्र पादौ तस्य द्विजस्य च ।
तदेव पात्रसात्कृत्वा विष्णुबुद्ध्या ननाम ह ॥
तस्मिन्नवसरे शक्रो ब्रह्मरूपी सुरेश्वरः ।
मनसाचिन्तयद्देवास्तेऽपि तत्र समागताः ॥
ब्रह्मरूपा महाभागा ज्वलदर्कसमप्रभाः ।
तत्र ययाचिरे विप्र स्वस्ती युक्त्या समुत्थिताः ॥
भोक्तुं समुद्यतः शक्रः श्रुत्वा तु करुणां गिरम् ।
सुराणां तु समाहूय वचनं चेदमब्रवीत् ॥ 63
शृणुष्व मद्वचो विप्र ते सर्वे क्षुधिता भृशम् ।
तैश्च सार्धमहं भोक्तुमिच्छामि न च तैर्विना ॥
तच्छ्रुत्वा वचनं तस्य ब्राह्मणोऽतिविस्मितः ।
कुरु पाकं क्षणेन त्वमिति पत्नीमभाषत ॥

ब्राह्मण्युवाच ।

किं करोमि च धर्मात्मन्निन्धनं नास्ति मद्गृहे ।
क्षुधिता ब्राह्मणश्रेष्ठा यदुपायं वदस्व तत् ॥

ब्राह्मण उवाच ।

वस्त्राणि च बहून्यत्र घृततैलघटास्तथा ।
संयोज्य वर्तिका तेषु दीपयस्व समृद्धवत् ॥

वैशंपायन उवाच ।

भर्तृवाक्यं तथा श्रुत्वा वस्त्रमेकं यथा भवेत् ।
घृतं तैलं तु निःशेषं तथा साध्वी चकार ह ॥
सर्वाभावे पतिं प्राह शृण्वतो वचनं प्रभो ।
वस्त्राज्यतैलं निःशेषं मा मुक्ति करवाण्यहम् ।
पाकश्च नाभवद्विप्र कर्तव्यं किमतः परम् ॥

श्रीभगवानुवाच ।

श्रुत्वा वचः पुनस्तस्याः कोपात्सरक्तलोचनः ।
अब्रवीत्परुषं वाक्यं सत्त्वादैवेन चोदितः ।
दुर्दिनाद्यैव तिष्ठन्ति क्षुधिता ब्राह्मणोत्तमाः ।
पादौ प्रमार्ज्य खे भार्ये कुरु पाकं हि दुर्जने ॥
पतिवाक्यं तदा श्रुत्वा प्रीता साध्वी नृपोत्तम ।

भर्तारमानयस्वेति तामूचुर्धर्मनन्दन ॥
शोकार्णवे पतिं दृष्ट्वा पतितं तं सुदुःखितम् ।
किमेतदिति सा साध्वी व्याजहार सुदुःखिता ॥
किं त्वं शोचसि कल्याण नित्यं प्राकृतो यथा ।
भुक्त्वा तुष्टा द्विजवराः करिष्यन्त्याशिषं शुभाम् ।
तेषां सकाशं गच्छ त्वं प्रार्थयस्व शुभान्द्विजान् ॥
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥

श्रीभगवानुवाच ।

स्वप्नदृष्टेव तत्सर्वं विचिन्त्य च मुहुर्मुहुः ।
गत्वा प्रणम्य तान्सर्वानुवाच कुरुनन्दन ॥
अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्य मे वशजाः सर्वे याता योऽनुप्रसादिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्तेषु विस्मृत्य क्षन्तुमर्हथ ॥
एवमुक्त्वा ननामाशु स विप्रो वै पुनः पुनः ।
ज्योतिर्मयांस्तदा दृष्ट्वा विस्मयं परमं गतः ॥
ततो देवपतिं प्राह प्रहसन्ब्राह्मणोत्तमम् ।
तृप्तोऽस्मि देवास्तृप्यन्ति मामिन्द्रं विद्धि धर्मभृत् ॥
देवा ह्येते वयं प्राप्तास्त्वत्परीक्षाभिलिप्सवः ।
यावत्स्थितोऽहं स्वर्लोके तावत्त्वं स्थितिमेष्यसि ॥
तव धर्मस्य विप्रेन्द्र प्रत्यूहो न भविष्यति ।
इत्युक्त्वा तां धर्मपत्नीमभिनन्द्य मुहुर्मुहुः ।
तिरोदधे स सुत्रामा देवैः सार्धमरिंदम ॥
स विप्रो भार्यया सार्धं भुक्त्वा भोगान्यथेप्सितान् ।
अन्ते जगाम स्वर्लोकं भार्यया सह धर्मज ॥
तस्मात्त्वमपि राजेन्द्र ददस्वान्नं नराधिप ।
अन्नदानेन ते स्वर्गं भविष्यति न संशयः ॥
भक्त्या परमया युक्तः स्त्रिया सार्धमरिंदम ।
सपत्नीको यथा विप्रस्तथा त्वं कीर्तिमेष्यसि ॥
ईश्वरः सर्वभूतानां हृद्देशे समवस्थितः ।
तस्मादतिथयः पूज्या भोक्ता च परमेश्वरः ॥
यस्य गेहे यदा तुष्टो ह्यतिथिर्भक्ष्यभोजनैः ।
तदा देवाश्च तुष्यन्ति तस्मादन्नप्रदो वरः ॥

वैशंपायन उवाच ।

इत्येवमुक्तः यदुपुंगवेन
धर्मं महात्मा कुरुनन्दनश्च ।
पुनस्तथोवाच निपत्य मूर्ध्ना
पादारविन्दं परमस्य पुंसः ।

Colophon

युधिष्ठिर उवाच ।

देवदेवारविन्दाक्ष शरणागतपालक ।
त्वमेव संशयच्छेत्ता सर्वदा मम सुव्रत ॥
धनाढ्या देवताभक्ता अन्नभक्ता बहुप्रदाः ।
सत्पात्रे दानशीलाश्च प्रयान्ति परमं पदम् ॥

— (L. 699) $G_1$ $M_1$ हेमाद्री (for जह्नोरू) G(ed) दधिना इक्षुरोमद्वौ (for °) $G_2$ ब्रह्मवेद (for जाम्बूनद) G(ed) पतिभक्तिसमन्विता (for ᵇ) — (L. 701) $D_1$ भुक्ता (for तृप्ता) $G_3$ च तऽमगा (for द्विजात्तमा) — (L. 702) $M_1$ आह्वयस्व (for आन°) — (L. 704) $G_3$ $M_1$ ह्याजुहाव (for व्याजहार) $D_1$ पतिं दुःखाकुलं तथा (for ᵇ) — (L. 706) G(ed) सर्वे (for तुष्टा) — (L. 707) G(ed) शुभ (for शुभान्) — After the ref, $D_1$ ins

56** इति तस्या वचः श्रुत्वा स विप्रो ज्ञानशीलवान् ।
सों पश्यन्सर्वतो गत्वा यत्रास्ते सुचि देवता ॥

— (L. 710) $D_1$ विचिन्त्य तदनि स द्विज (for ᵇ) — For line 710, G(ed) subst

57** स्वप्न दृष्ट्वा तु तत्सर्व दवदृष्ट्य द्विजस्ततः ।

— (L. 711) $M_1$ स गत्वा प्रणम्य स्नात्, G(ed) ह्यट्टिमुत्थाय ता सर्वान् (for °) — (L. 714) $D_1$ $G_2$ इदृशम् (for °शा) — (L. 715) $D_1$ $M_1$ चित्ते तु, $G_2$ चिन्तेन (for °षु) — (L. 717) $M_1$ ज्योतिस्य (for °यान्) — For line 717, G(ed) subst

58** ततः ज्योतिस्स्वरूपांस्तु तान्दृष्ट्वा विस्मयं गतः ।

— (L. 719) $M_1$ तृप्यन्तु, G(ed) तुष्टा स्युः (for तृप्यन्ति) G(ed) भूसुर (for धर्मभृत्) — (L. 720) $G_2$ वयमिह (for ह्येते वयं) — (L. 721) $M_2$ सुरस्त् (for स्थितिम्) — (L. 724) G(ed) तिरोहितोऽभूत्सुत्रामा (for °) $M_1$ सावम् (for साधम्) — $G_2$ om lines 725–726 — (L. 725) $M_1$ अपि (for यथा) — (L. 727) $M_1$ समाहित (for नराधिप) — $D_1$ om lines 728–729 — (L. 728) $M_1$ स्वर्गो (for स्वर्ग) — (L. 731) G(ed) हृद्देशे यस्य तिष्ठति (for ᵇ). — (L. 733) $G_3$ भक्ति (for भक्ष्य) — After line 734, G(ed) ins

59** अन्नं वेत्ति च भूतानि तस्मादन्नं तदुच्यते ।

— $D_1$ G(ed) om the ref — (L. 735) $G_1$ G(ed) नन्दनेन (for पुंगवेन) — (L. 736) $M_1$ महान्त (for महात्मा) G(ed) धर्मं समाकर्ण्य कुरुप्रवीर — (L. 737) $G_1$ तदा, $G_2$ च च, $M_1$ स च (for तथा) — After line 738, $G_1$ G(ed) ins

60** य इदं पुण्यमाख्यानं शृणुयाद्देवसंनिधौ ।
ब्राह्मणानां समाजे वा स विप्रो नाकमश्नुते ।

Colophon — *Sub-parvan* $D_1$ $G_1$ आश्चर्यपर्वणि शेषधर्मो, $G_2$ $M_1$ G(ed) शेषधर्मा — *Adhy name* $D_1$ $G_1$ $M_1$ अन्नदानप्रशंसनम्, $G_2$ अन्नदानमाहिमा, G(ed) अन्नदानप्रशंसा. — *Adhy no* $D_1$ $G_1$ 5 $M_1$ G(ed) 6

(L. 742) G(ed) प्रयाति परमां गतिम् (for ᵇ) — (L.

रिक्तास्तु सर्वे मनुजा ह्यशक्ता दानकर्मसु ।
का गति कानि दानानि तेषा मे कृपया वद ॥

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि श्रोतॄणामघनाशनम् ।
यस्य श्रवणमात्रेण वाजपेयफल भवेत् ॥
निष्किंचना हि मुनय सर्वे धर्मपरायणा ।
सदा सर्वहिते युक्तास्तोयदानादिव गता ॥
काञ्चनादीनि दानानि गृह्णन्ति गृहमेधिन ।
उपर्युपरि वाञ्छन्ति तोयात्तृप्ता भवन्ति हि ॥
दानानामुत्तम दानमन्नदान तथा जलम् ।
सद्यस्तुष्टिकर दान प्राणिना जीवन च यत् ॥
प्रीणनमपि सर्वेषा प्राणा वारिणि सस्थिता ।
तज्जल ये प्रयच्छन्ति प्राणदा परिकीर्तिता ॥
अत्रैवोदाहरन्तीममितिहास पुरातनम् ।
श्रोतॄणा सर्वपापघ्नमायुरारोग्यवर्धनम् ॥
पुरा किल महाराज सुशीलो ब्राह्मणोत्तम ।
शान्तो जितेन्द्रियो विद्वान्मद्भक्तो नि स्पृह शुचि ॥
वेदे च धर्मशास्त्रे च वेदान्ते परिनिष्ठित ।
उञ्छवृत्ति सदानन्द सदा सर्वहिते रत ॥
आतिथेय सदा मौनी जलदाने सदा रत ।
पशुपक्षिमृगादीना मनुजाना विशेषत ।
मा च सर्वगत ध्यात्वा जलदान करोति स ॥
पुण्यवृक्षा-समारोप्य सुपुष्पानपि पादपान् ।
पशुपक्षिमृगादीना शीतल तोयमुत्तमम् ॥
अवग्रहेऽपि राजेन्द्र महाकूपात्समुद्धृतम् ।
जल ददन्सर्वकालमास्ते बदरिकाश्रमे ॥
देवा यक्षास्तथा सिद्धा गुह्यका अपि चारणा ।
तस्याश्रमपद प्राप्य सदा क्रीडन्ति नि स्पृहा ॥
कदाचिद्बलभिद्देव शङ्कितस्तस्य कर्मणा ।
सप्तार्चिषा समागम्य ययाचे जलमार्तवत् ॥
मित्रातपातपरिभ्रष्टौ जलपानसमुत्सुकौ ।
आवाभ्या दीयता विप्र जल परमशीतलम् ॥

सुशील उवाच ।

कृतार्थोऽस्मि महाभागौ युवाभ्या तारितोऽस्म्यहम् ।
अद्य मे सफल जन्म जीवत च सुजीवितम् ।
अद्य मे वशजा सर्वे मुक्ता एव न सशय ॥
एवमुक्त्वा सुशीलस्तु पादौ प्रक्षाल्य तौ द्विज ।
अद्य मे प्रीयता विष्णुरित्युक्त्वासौ ददौ जलम् ॥
स पीत्वा तज्जलं सर्वमपि तृप्त पुरंदर ।
दीयतां दीयतामस्मै शीतवारि च सत्वरम् ॥
तच्छ्रुत्वा वचन तस्य ब्राह्मणो मयि तत्पर ।
पानीयशालिकामध्ये शून्य भाण्ड ददर्श ह ॥
किमेतच्छून्यमभवद्भाण्ड पानीयपूरितम् ।
ध्यात्वा सर्वगतं विष्णुं पाहि पाहीत्यचिन्तयत् ॥
पानीयं नैव पश्यामि पिपासुर्ब्राह्मणोत्तम ।
किं करोमि जगन्नाथ पाहि मां ब्राह्मणोत्तमम् ॥
कर्ता त्वं मम धर्मस्य देवदेव जगत्पते ।
कथ धर्मं तु भृत्यस्य भङ्गीकर्तुमिहार्हसि ॥

743) M1 रक्तास्तु (for रि°) —(L. 746) D1 M1 लभेत् (for भवेत्) —(L. 747) G1 2 M1 G(ed) पूर्वे (for सर्वे). —(L. 748) G3 सर्वदा सर्वतो युक्तास् (for °) —(L. —(L. 749) G(ed) गृह्णन्ते (for °न्ति) —(L. 750) M1 तोय (for तोयात्) G(ed) ते (for हि) —(L. 752) G1 द्वयम् (for च यत्) D1 G3 प्राणिनां जीवन( G3 °वित )द्वयम् (for °) —(L. 754) D1 ते प्र (for परि) —(L. 757) G(ed.) सुशीलो नाम ब्राह्मण (for °) —(L. 758) G3 श्रीमान् (for विद्वान्) —(L. 761) G(ed) सत्य धर्मरत सुधी (for °) —(L. 762) M1 मनुष्याणां (for °जानां) G(ed) om lines 762ᵇ-765ᵃ —(L. 764) D1 सुफलान् (for सुपुष्पान्) —(L. 766) G1 G(ed.) महाकूपात् (for ऽपि राजेन्द्र) and राजन्द्र चैव (for महाकूपात्) —(L. 767) G(ed) सार्वकालम् (for सर्व°) —(L. 770) G1 2 ययाचे (for कदाचित्) —(L. 771) G(ed) आगताम् (for आर्तवत्) —After line 771, G(ed) ins

61** विप्रावूचतु ।
आवां विद्धि महाभाग चण्डांशसमभाह्वयौ ।

—(L. 773) D1 मित्रांशुसारिणौ दुष्टौ (for °). D1 G1 2 G(ed).) -पानात् (for -पान-). (L. 773) D1 अस्माकं (for आवाभ्यां) G1 अद्य (for विप्र) G(ed) तस्मान्नो दीयतां क्षिप्रं (for °) G(ed) शीतकम् (for °लम्) —After line 773, G(ed) ins

62** तद्दीनवचन श्रुत्वा स विप्रो वेदवित्तम ।
प्रोवाचाविनीतात्मा वचनं चेदमादरात् ॥

—G1 G(ed) om the ref —(L. 774) G(ed) धारितो (for ता°) —(L. 778) D1 G3 M1 ददाति च (for ददौ जलम्) —(L. 779) M1 अवितृप्त (for अपि तृप्त) —For line 778, G(ed) subst.

63** स पीत्वा त्रिदिशाधिपेन्द्रो ययाचे पुनरप्यहो ।

—(L. 780) M1 मेति, G(ed) मह्य (for अस्मै) M1 प्रोवाच -भास्वविस्तरम्, G(ed) शीत वारीति सत्वर (for °) —(L. 781) D1 ब्राह्मणो मत्प्रियः पर, G(ed) °णो मत्परायण (for °). —After line 781, G(ed) ins

64** मां स्मरन्नगमच्छीघ्रं पानीयागारमुत्तमम् ।
तत्रापश्यद्भाण्डजातं सर्वं विरहितं जलैः ॥

—G(ed) om line 782 —G1 2 M1 G(ed) -शालिकां (for °का) —(L. 783) M1 पात्रं (for भाण्डं) G(ed) भाण्डजातमिति स ह (for °) —(L. 786) D1 पाहि मां

पिता माता गुरुस्तीर्थं धर्मो बन्धुः सुहृत्तम ।
अतस्त्वं मम देवेश मत पाहि नमोऽस्तु ते ॥
तथा वदति तस्मिन्वै ब्राह्मणे पाण्डुनन्दन ।
पूरयामास तद्ब्रह्माण्डमन्तर्यामी जगद्गुरु ॥
शिलावान्समनुप्राप्य जलं वै सर्वतोदिशम् ।
अपिबत्सहसा राजन्कल्पान्ते वारिधिं यथा ।
भूयोऽपिबद्दहस्वेति प्रार्थयित्वा स धर्मज ।
ययौ पुरंदरपुरं वज्रिणा सह विस्मित ॥
आश्रयं परम गत्वा स विप्रो भार्यया सह ॥
खानयामास तत्कूप तदा पातालसंनिभम् ।
प्रार्थयामास लोकेश मामेव पाण्डुनन्दन ॥
नमस्ते लोकनाथाय भुक्तिमुक्तिप्रदाय च ।
नमस्ते वासुदेवाय देवाना मूलरूपिणे ।
*पाहि मा पुण्डरीकाक्ष त्वद्भक्त कमलापते ॥*
यथा हि मम धर्मस्य ह्यन्तराया न सन्ति हि ।
तथा मा पालयस्वेति भूयो भूयो ननाम च ॥
एव भक्त्याऽद्वितीय सर्वेषा प्राणिनामिह ।
आस्ते तत्र च विप्रेन्द्र ऋषिसघनिषेवित ॥
तत पुरंदरो देवैरागत्य सह धर्मज ।
पपौ तत्र जल सर्वं ग्रीष्मे तु पथिको यथा ॥
त्रि सप्तकृत्वस्तत्रैव परीक्ष्य च पुन पुन ।
तद्धर्ममपहर्तुं वै न शशाक स वृत्रहा ॥
तथा हि मम भृत्यस्य कामाँल्लोके व्यपोहितुम् ।
क समर्थो महाराज ममापि च न शक्यते ॥
भक्ताधीनो ह्यहं पार्थ तेषामिष्ट ददामि च ।
ताँल्लोकेऽप्यन्यथा कर्तुं क समर्थो नु पण्डितः ॥
स्वर्लोक समनुप्राप्य शक्रस्तस्य कर्मणा ।
द्वादशाब्द सहस्राक्षो न ववर्ष तदाश्रमे ॥
कृपया मम धर्मात्मन्वर्धित तोयमुत्तमम् ।
ददन्वै सर्वभूतानामास्ते तत्र मम प्रिय ॥
ततस्तु प्रेषयामास महान्सर्वान्शचीपति ।
ते सर्व समनुप्राप्य पपु पानीयमुत्सुका ॥
स्थितेषु तेषु सर्वेषु ह्येकत्र कुरुनन्दन ।
वृष्टिस्तदाभवद्भीम कल्पान्ते महाणो यथा ॥

इन्द्र उवाच ।

अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा ।
अहमन्यच्चिन्तयामि दैवमन्यत्र चिन्तयेत् ॥
*एवं चिन्ताकुलो राजन्सुनामा तु सुरै सह ।*
स्वर्गार्होऽयमिति ज्ञात्वा तान्महान्समचिन्तयत् ॥
अर्दितान्वृष्टिभि सम्यक्कम्पमानान्महीसुरान् ।
सुखोत्थिता मह्ना सर्वे ह्यब्रुवन्ब्राह्मणोत्तमम् ॥
सुशील सर्वधर्मज्ञ तृप्ता सर्वे दिवौकस ।
पितरस्तव सुप्रीता प्रशसन्तो दिव गता ॥
कर्मणा तव धर्मात्मँल्लोका सर्वे चराचरा ।
तुष्टो हि पुण्डरीकाक्षो वेत्ति धर्म न चेतर ॥
त्वमद्य गच्छ स्वर्लोकमनया भार्यया सह ।
सुनामा प्रार्थते त्वा तु वस्तुं धर्मभृता वर ॥
वय मह्ना इति ख्याता सूर्यचन्द्रादयो द्विज ।

जगदीश्वर ( *for* °) —( L 788 ) G(*ed*) शिनष्टं कर्तुमर्हसि ( for °) —( L 789 ) $G_1$ सुहृत् ( for गुरुस् ) $D_1$ धर्म ( for धर्मो ) —( L 790 ) G(ed) सर्व ( for अतस् ) $G_1$ हुत, G(ed) धर्म ( for मत ). —( L. 792 ) $G_1$ जगत्पति ( for °द्गुरु ) — For line 792, G(ed) subst

65** जलेन पूर्णमकरोद्ब्रह्माण्डगतं जगत्पति ॥

— *After the above,* G(*ed*) cont

66** तत शिलावान्स सर्वं विलीनमकरोज्जलम् ।
देवदत्ता तत्र पुन पूर्णमभूत्तदा ॥
एतच्चित्रं विलोक्येन्द्रो विप्रं संमान्य सत्वर ।
ययौ स्वर्गं स्वच्छन्दश्च विप्रं मार्गमकारयत् ॥
तत स विप्रप्रवरस्तत्र भूपान्बहूदकान् ।
कारयामास राजेन्द्र स्वधर्मपरिपालन ॥

— G(ed) om lines 793-798 —( L. 794 ) $G_1$ जलधि ( for वारिधि ) —( L. 795 ) $M_1$ ऽपि स ( for ऽपिबद् ) $D_1$ $D_2$ समुपत्या तु ( for प्रार्थयित्वा ) —( L. 802 ) $D_1$ त्वद्भक्त ( for त्वद्भक्त ) —( L 804 ) $G_1$ नमामि ( for ननाम ). —( L. 805 ) G(ed) बहु ( for इह ) —( L. 806 ) G(ed) ब्रह्म स च विप्रेन्द्र ( for ° ) $D_1$ $G_2$ निषेवित ( for °त ) —( L 807 ) G(ed) पुन ( for तत ) G(ed) सार्धमागत्य धर्मज ( for ° ) —( L 808 ) G(ed) पपौ जल यथापूर्वं ( for °) —( L 813 ) $G_2$ $M_1$ भृत्याधीनो ( for भक्ता° ) G(ed.) तदभीष्टप्रदो ह्ययम् ( for ° ) —( L. 814 ) $M_1$ न पण्डित ; G(ed) महीपते ( for नु पण्डित ) — After line 814, G(ed) ins

67** तस्मिन्द्वेषं समुत्पाद्य सहसाक्षोऽतिदुःखित ।

— G(ed) om line 815 —( L 816 ) G(ed) तदा राजन् ( *for* सहस्राक्षो ) —( L. 817 ) $G_2$ वासित ( *for* वर्धित ) —( L. 818 ) G(ed) सुखदे तत्र स द्विज ( for ° ) —( L. 820 ) G(*ed*) तत्र ( *for* सर्वे ) — $G_2$ *om the ref* —( L. 824 ) $D_1$ $G_1$ $M_1$ अहम् यत् चिन्तानि ( for ° ) $G_1$ $M_1$ चिन्तितम् ( for चिन्तयेत् ) G(ed) दैवमन्यत्र चिन्तयत् ( for ° ). —( L. 825 ) G(ed) सुधामा तमृषि तदा ( for ° ) — For line 826, G(ed) subst

68** महाभागवतं दृष्ट्वा चिन्तयामास वीरहन् ।

— G(ed) om lines 827-829 $D_1$ om line 827 —( L. 828 ) $G_1$ सुरा ( for मह्ना ) —( L. 831 ) धर्मेश ( for धर्मात्मँल्लोका ) — After line 831, G(ed) ins

69** सुनामा अमरैर्विप्र नन्व कार्यं विचारय ।

—( L. 834 ) $D_1$ वस्तु धर्मभृतां वर ( for ° ) — For line 834, G(ed) subst

70** सुनामा च द्विजश्रेष्ठ चेष्टेऽस्मिन्नर धर्मत ।

विमानं सूर्यसंकाशं त्वदर्थं वै समागतम् ।
पश्यारोहतु यास्यामो भवान्भुङ्क्ष्व सुखं दिवि ॥

श्रीभगवानुवाच ।

ब्रह्माणां तच्छ्रुतं वाक्यं निशम्य कुरुनन्दन ।
ययाचे लोकरक्षार्थं वरं नत्वा पुनः पुनः ॥
अन्नत्यानां तु सर्वेषामद्यप्रभृति धर्मिणाम् ।
दूरस्थानामपि यदि मुक्तिरत्र भविष्यति ।
नाकं भवतु लोकानां यदि मां नतुमिच्छथ ॥
अन्यथा चेदह ह्यत्र वसेयं तु यथासुखम् ।
नाकं गच्छथ यूयं वै प्रार्थयिष्ये रमापतिम् ।

ब्रह्मा ऊचुः ।

तरुगुल्मलतानां तु मृगाणामानतायिनाम् ।
सांनिध्याल्लोकनाथस्य मुक्तिश्चापि भविष्यति ॥
इत्युक्त्वा तं समारोप्य विमाने सूर्यवर्चसि ।
सपत्नीकं समारोप्य विविशुर्नाकमव्ययम् ॥
चतुर्युगसहस्राणि भुक्त्वा भोगाननेकशः ।
ततस्तु ब्रह्मणो लोकमवाप्य सुखमश्नुते ॥
तस्मात्त्वं सर्वदा राजन्प्रपां कृत्वा सुशोभनाम् ।
पानीयं शीतलं राजन्ददस्व सततं नृणाम् ॥
दरिद्राणामयं धर्मः स्वर्गमोक्षप्रदायकः ।
सुराणां दुर्लभो ह्येष सुरलोके सुखप्रदः ॥
यमिममभिनिशाम्य यः शृणोतीह नित्यं
सकलकलुषशान्तिं सद्य एवेति विद्धि ।
सुरपतिवरलोके शृण्वतां भूसुराणां
भवति हि खलु वासो नात्र संदेहमस्ति ॥

Colophon

युधिष्ठिर उवाच ।

श्रियः पते नमस्तुभ्यं वृष्णीनां वंशवर्धन ।
त्वमेव सर्वशास्त्राणि वेदांश्चापि महामते ॥
तस्मात्त्वां प्रार्थयाम्यद्य पातु धर्मामृतं प्रभो ।
पालयस्व च धर्मेण शाश्वतं जगतीपते ॥
कन्यादानं प्रशंसन्ति मुनयः पुण्यदर्शिनः ।
धर्मं तं वद तत्त्वेन लोकनाथ नमोऽस्तु ते ॥
दानस्य को विधिस्तस्य कः कालः समुदाहृतः ।
त्वमेव वेत्सि तत्सर्वं कृष्ण संप्रति कथ्यताम् ॥
भगवंस्त्वद्वचः सत्यं हितं परमपावनम् ।
अस्माकं हितकृत्त्वं च साक्षाज्जगतः प्रभुः ॥
कांल्लोकान्समवाप्नोति कन्यादाता सुरोत्तम ।
तद्भवान्वेत्ति तत्त्वेन वद संप्रति मेऽनघ ॥

श्रीभगवानुवाच ।

साधु पृष्टं महाबाहो त्वया कुरुकुलोत्तम ।
धर्मश्रवे यथाप्रीतिस्तथा ख्यातिर्भविष्यति ॥

---

—(L 835) एते (for वय) —(L 837) $G_1$ G(ed) पत्नी (for पश्य) G(ed) मुने (for भवान्) $G_2$ सुखानि च (for सुखं दिवि) —(L 838) $D_1$ तु (for तद्) G(ed) इन्द्रेणोक्तं तु तद्वाक्य (for °) —(L 839) $D_1$ वरम् (for वरं) —(L 840) $G_{1.2}$ अमर्त्यानां $M_1$ तत्रत्यानां (for अ°) $D_1$ कर्मणां (for धर्मिणाम्) — For line 841 G(ed) subst.

71** दूरदेशादिहागत्य जनानां च पुरंदर ।

G(ed.) cont

72** स्वर्गप्राप्तिर्भवेन्नित्यं या मद्रूपजल्पानतः ।

—(L 842) $G_2$ लोकार्हे (for °नां) G(ed) एवं वरं प्रयच्छ त्वं (for °) — For line 844 G(ed) subst

73** यूयं गच्छत वै नाकं नाहमागन्तुमुत्सहे ।

—(L 845) G(ed) लतादीनां (for °नां तु) — For line 846, G(ed) subst

74** मद्रूपोपस्पर्शान्मुक्तिश्चापि भवेद् ध्रुवम् ।

—(L 847) G(ed) समाहूय (for °रोप्य) —(L 848) G(ed) जगाम त्रिदिवं हरिः (for °) —(L 849) G(ed) त्रिविष्टपे (for अनन्त°) —(L 850) G(ed.) स (for तु) G(ed) सुखमागमत् (for °मश्नुते) —(L 855) $G_1$ परम् (for यम्) $G_2$ $M_1$ इदम् (for इमम्) G(ed) भक्त्या (for नित्यं) —(L 856) $G_{1.2}$ सच एवाभवद्धि, $M_1$ सच एवाभिवृद्धि, G(ed) धर्मबुद्धिश्च सद्य (for सद्य एवेति विद्धि) —(L 857) $G_1$ नरवर (for °पतिवर°) —(L 858) G(ed) [अ]स्ति संदेहबुद्धि (for [अ]त्र संदेहमस्ति)

COLOPHON — *Sub-parvan* $D_1$ $G_{1.2}$ $M_1$ G(ed) शेषधर्मा, $G_{1.2}$ भविष्यपर्व — *Adhy name* $D_1$ $G_1$ G(ed.) पानीयदानप्रशंसा, $G_2$ पानीयदानम्, $M_1$ पानीयप्रशंसनम् — *Adhy no* $D_1$ $G_{1.2}$ $M_1$ G(ed) 7

(L 860) G(ed) त्वमेव वेत्सि वेदांश्च (for °) $D_1$ वेत्सि, $G_1$ चैव (for चापि) G(ed) शास्त्राणि च सर्वशः (for °) —(L 861) $M_1$ शास्तु (for पातु) —(L 862) G(ed) माधव (for धर्मेण) $D_1$ शाश्वतेन जगतां पते, $M_1$ °ण च महीपते, G(ed) धर्मेण त्रोपवेत (for °) —(L 863) $M_1$ शालिन (for °र्शिन) —(L 864) $G_1$ नमः (for ऽस्तु ते) — For line 864 G(ed) subst :

75** तद्दानस्य च माहात्म्यं कृपया वद सुव्रत ।

—(L 865) $G_1$ ऽहो लोकेश $G_2$ ऽहो नाथ क (for विधि- स्तस्य) $M_1$ कन्यायाः लोके को नाथ (for °) — G(ed) om lines 866 868 —(L 868) $D_1$ जगतां (for °त) $M_1$ त्वं साक्षाज्जगतीपतिः (for °) —(L 869) $G_1$ G(ed) °दानात्, $G_2$ $M_1$ °दाने (for °दाता) — $G_1$ G(ed) om line 870 —(L 871) $D_1$ G(ed) महाभाग (for °बाहो) — For line 872 G(ed) subst

76** धर्मो प्रष्टुं तथा शास्तुं त्वमेवार्हसि नेतरः ।

सुरूपाय सुशीलाय कुलीनाय निरोगिणे ।
कन्यां दद्याच्छुभाल्लोकाल्लभते नात्र संशयः ॥
सुश्रुताय दरिद्राय श्रोत्रियस्यात्मजाय च ।
यो दद्यात्तु स्वकां कन्यां ब्रह्मलोकं स गच्छति ॥
कन्याभारे धनं दत्त्वा विवाहं कारयेद्बुधः ।
न तस्य लोकाः क्षीयन्ते यावदाचन्द्रतारकम् ॥
विषुवायनसंक्रान्तौ चन्द्रसूर्योपरागयोः ।
पुण्यक्षेत्रे पुण्यतीर्थे कन्यादो मोक्षमश्नुते ॥
पितृदेवगणास्तात कन्यादानात्सुपूजिताः ।
गन्धर्वैः स्तूयमानास्ते प्रयान्ति मम मन्दिरम् ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सर्वपापप्रशमनमायुर्वर्धनकारणम् ॥
पुरा कृतयुगे राजन्नर्मदायास्तटे शुभे ।
धर्मव्रतो महानासीत्कौण्डिन्यकुलसंभवः ॥
शान्तो जितेन्द्रियो विद्वान्वेदवेदाङ्गपारगः ।
अग्निहोत्री महामौनी तस्मिन्नास्ते तपोवने ॥
स कदाचिन्महाभाग शिष्यैः सह जितेन्द्रियः ।
वनं जगाम धर्मात्मा इध्मानाहर्तुमुद्यतः ॥
कन्दमूलफलाकीर्णे समित्पुष्पकुशाकुले ।
इन्धनार्थं विसृज्यैतान्वनमन्यदुपाविशत् ॥
महावातनिघातैश्च घातकीगुल्मसेवितम् ।
शार्दूलैः श्वापदैः सिंहैर्गजैरृक्षैर्वृकैरपि ॥
ऋक्षजम्बूकनागैश्च वानरैश्चमरीगणैः ।
डाकिन्यादिगणैः क्रूरैर्भूतनागैरनेकशः ॥
महाघोरैरजगरै राक्षसैः पिशिताशनैः ।
एवं बहुविधैर्वन्यैर्जन्तुभिः परिवारितम् ।
पश्यन्वनं भयकरं प्रविवेश महामतिः ॥
वनक्षोभो क्वचित्पश्चात्किलासीत्तत्र च ।
शुश्राव च महानादं रक्ष रक्षेति चाग्रतः ॥
तेन शब्देन महता विस्मयं परमं गतः ।
भयंकरे महाघोरे मन्दं मन्दं चचार ह ॥
तमन्वेष्टुमना विप्र किंचिद्दूरगतो मुनिः ।
वृक्षवल्लीसमाकीर्णं कूपमेकं ददर्श ह ॥
कण्टकीद्रुमसंकीर्णं दर्भैराच्छादितं महत् ।
हुंकारनादितं घोरं महोरगनिषेवितम् ॥
तं दृष्ट्वा सहसा राजन्किंचित्साध्वससंयुतः ।
आससाद पुनस्तत्र कूपकस्थानं धर्मवित् ॥
तस्मिन्कूपवरे राजन्महारूपे महास्वनः ।
त्रायाहि रक्ष रक्षेति वचसानुगतो भृशम् ॥
श्रुत्वा तद्दुःखसारं पुनर्वीक्ष्य महाबलम् ।
को भवान्यत्र कष्टेन किं करोमीति चाब्रवीत् ॥
इत्याकर्ण्य वचस्तस्य तदाक्रन्दस्य उत्थित ।
तस्मात्कूपात्समाकृष्य मा भैषीरित्युवाच तम् ॥
धर्मव्रत महाभाग कस्मात्त्वद्य महामते ।
पितरस्त्वदीयास्ते विद्धि सत्यं वदामि ते ॥

धर्मव्रत उवाच ।

किमर्थमत्र क्षीयन्ते युष्माभिः पितृभिः ।
पितृलोकं विसृज्यैव सत्यमेव ब्रुवन्तु मे ॥

पितर ऊचुः ।

येनेदानीमीदृशी त्राता नास्ति गतिर्नो वर ।
यद्यामो यमलोकं च शृणु तत्कारणं हि तत् ॥
अस्मिन्कुले महाभाग धर्मिणो नैव सन्ति हि ।
तस्मादिमामवस्थां वै प्राप्ता एव न संशयः ॥
अधना गृहदाश्चैव भूमिदा गोप्रदास्तथा ।
गङ्गास्नानरता नैव गङ्गायां पिण्डदास्तथा ॥
पुण्यतीर्थरता नैव सत्पात्रे दानदास्तथा ।
तिलदा घृतदा नैव अन्नदा जलदास्तथा ॥
अयने विषुसंक्रान्तौ व्यतिपाते तथाष्टके ।
सोमसूर्योपरागे च नार्चयन्ति हि किंचन ॥

न स्मरन्ति पितृंस्तात कथं कुर्वन्ति तेऽधुना
पञ्चयज्ञपराश्चैव ह्यातिथया न सन्ति हि ॥
वासन्तिके तथा काले जलदा पुण्यदा न च।
वसुदा न तु धर्मिष्ठास्तथा ताम्बूलदा न च।
शाकमूलफलाना तु दातारो नैव सन्ति हि।
प्रात स्नानरताश्चैव मध्याह्ने स्नानतत्परा ॥
कार्तिक मासि माघे च दीपदा देववेश्मनि।
नैव सन्ति हि यज्वानो स्वहत वत्स सप्रति ॥
उपवासरता नैव ह्येकादश्या शुभे दिने।
अनन्तफलद माघे ह्येकभुक्तरता न च ॥
उपवासरता नैव शिवरात्रिशुभे दिने।
वृषोत्सर्गं न कुर्वन्ति कार्तिक मासि कन्यदा ॥
नैव सन्ति हि धर्मान्मनुपरागे तथान्नदा ॥
माघस्नानरता नैव व्यतीपातव्रत परा।
स्वकर्मनिरताश्चैव नैव सन्ति हि केचन ॥
पुराणधर्मशास्त्रज्ञा वेदवदाङ्गपारगा।
पुराणश्रवणे सक्ता क्षणमात्रमपि द्विज ॥
पुराणे भक्तिमन्तश्च श्रौतस्मार्तेषु तत्परा।
अर्कद्विपर्वरात्रीषु ह्येकभुक्तरता न च ॥
कन्यागत यदा सूर्ये पितृश्च प्रीणयन्ति च।
ज्ञानिना विष्णुभक्ताश्च सूर्यभक्तास्तथा न च ॥
अग्निशुश्रूषवश्चैव काल काले न सन्ति हि।
शुश्रूषवश्च महता सेवका केशव प्रभुम् ॥
अभिषेकरता नैव विष्णौ रुद्रे महामत।
रुद्रपौरुषसूक्ते च जपशीला न सन्ति हि ॥
अध्यात्मशास्त्रपठने नमस्कारे विवस्वत।
सौराध्यनिरता विप्रा नैव सन्ति हि भूतले।
तेनेमामीदृशीं प्राप्ता गतिं धर्मभृता वर ॥

श्रीभगवानुवाच।

एतान्धर्मांस्तदा श्रुत्वा कम्पमानो महामति।
क्षमध्वमिति मत्कर्म पपात भुवि मूर्छित ॥

वैशंपायन उवाच।

आश्वास्य विप्र ते देवा पितृमूर्तिधरा शुभा।
मैव तेऽप्युक्तमात्रे तु विस्मितो ब्राह्मणोऽब्रवीत् ॥

ब्राह्मण उवाच।

किं करोमि च हे तात युष्माकमपि यत्प्रियम्।
तत्सर्वमद्य मे यूय ब्रुवन्तु ह्यविशङ्कया ॥
येन धर्मेण युष्माक ब्रह्मलोको भविष्यति।
तदद्य एव च प्रीत्यै यतिष्ये कर्तुमुत्तमम् ॥

पितर ऊचु।

पितृणा मोक्षद दानमसत्यात महीतले।
तथापि शृणु वक्ष्याम सर्वदानफलात्मकम् ॥
ब्रह्मणा हि पुरा दत्त पितृणा मुक्तयेऽनघ।
वक्ष्यामस्तद्वच सत्य श्लोकरूपमनामत ॥
दास्यन्ति यदि कन्यां स्वा सर्वदानफलात्मिकाम्।
युष्माक स्वप्रसूतां वै ब्रह्मलोको भविष्यति ॥
कन्याभावे स्वकाद्द्रव्याद्विवाह कारयन्ति ये।
तेषामपि पितृणा च ब्रह्मलोको भविष्यति ॥
स्वयंभुवा पुरादत्त पितृमुक्तिकर परम्।
तदाप्रभृति धर्मिष्ठा वाञ्छन्ति पितरोऽनिशम् ॥
ब्रह्मलोकप्रद ह्येतत्कन्यादानमनुत्तमम् ॥
पश्य कूपं महाभाग पूरित विपन्नभि।
धूमाकुलान्कृशान्दीनान्प्रार्थ्यमानास्तिलोदकम् ॥

---

धेया ( for ह्या° ) — M1 om lines 932 934 — (L 933) D1 वस्त्रदा न, G3 वस्त्रदा ये ( for वसुदा न ) — (L 934) G(ed) फलादीना ( for °ना तु ) — (L. 935) G(ed.) माध्याह्निकपरा न च ( for ° ) — (L 936) D1 G3 माघमासे ( for मासि माघे ) — (L. 937) D1 त्वादृशा, M1 G(ed) वामृत ( for °वहने ) — D1 om lines 938 939 — (L. 940) D1 व्रता शुभे ( for शुभ दिन ) — (L 941) G(ed) पामरा ( for कन्यदा ) — (L. 943) G(ed) रता ( for परा ) — (L 945) D1 G1 वेदाङ्ग ( for °वेदात ) — (L 946) D1 पुराणश्रवणासक्ता ( for ° ) — (L. 948) G1 s रात्रौ च ( for रात्रीषु ) — (L. 954) G1 सूक्ताभ्या G(ed) सूक्ताना ( for °सूक्ते च ) G(ed) जापका नैव सन्ति हि ( for ° ) — (L. 953) G1 अध्यात्मशास्त्रोक्तपत्नेन ( for ° ) G(ed) विवस्वानि ( for °त ) — (L 956) G1 सौराराध्य ( for °ध्य ) D1 नियता ( for निरता ) — For line 956 G(ed) subst

7 ** सौराराधनसूक्तपठने निरता नैव सन्ति हि।

— (L. 958) G(ed) वाचं धर्म्यामिमा श्रुत्वा ( for ° ) — (L 959) G1 प्रापतद्, G(ed) सोऽपतद् ( for पपात ) D1 चाशु स ( for मूर्छित ) — G3 श्रीभगवान् ( for वैशंपायन ) — After the ref G(ed) ins

78** सनस्त्र प्रणतं भूमौ विषण्णमतिविह्वलम्।

— After line 960 G(ed) ins

79** उत्तिष्ठ साधो विप्रर्षे शृणुस्मद्वाक्यमादरात्।

— (L 961) G1 G(ed) एतावद् ( for मैव तेऽपि ) — (L. 965) G1 तदद्यैव वत्र प्रीत्यै ( for ° ) — For lines 965–966, G(ed) subst

80** तदद्यैव च संप्रीत्या वक्तुमर्हथ सादरा।
पितर।
पितृणा मोक्षदा यत्र वसुदानानि सन्ति हि ॥

— (I 96") G1 फलाधिकम् ( for °मकं ) G(ed) दानं सर्वोत्तमं महत् ( for ° ) — (L. 968) G(ed) सृष्ट ( for दत्त ) — (L 969) G1 G(ed) वक्ष्यामस्तव यत्नेन ( for ° ) G3 मोक्षरूप, M1 °रूपं ( for °रूपम् ) G(ed) कर्तव्य श्लोकरूपत ( for ° ) — (L. 9"0) D1 फलात्मकाम्, G3 °मकम् ( for °मिकाम् ) — (L. 9"1) G(ed) सुता ब्राह्मेण विधिना ( for ° )

न कृतं चेदिदं नूनं भवद्भिर्लोकविश्रुतैः ।
अस्मिन्कूपे वय मग्ना जीर्णदूर्वावलम्बिता ध्रुवम् ॥
तद्गच्छ साधो तत्सर्वं कारयस्वास्मदाज्ञया ।
स्वस्ति तेऽस्तु गमिष्याम इत्युक्त्वान्तर्दधुस्तदा ॥
ब्राह्मणो विस्मयाविष्टः प्रणम्य च मुहुर्मुहुः ।
इत्याश्रमं प्राप धर्मिष्ठ द्विजैः सह महामते ॥
सर्वेषामपि विप्राणां नृपचैव युधिष्ठिर ।
कारयामास तत्सर्वं विप्रैः सर्वैर्नरैरपि ॥
तस्मात्त्वमपि राजेन्द्र बहु दत्त्वा वसु स्वकम् ।
कारयस्व विवाहं वै विप्राग्निप्रहितेः सह ॥
पितरस्तृप्तिमेष्यन्ति देवास्तृप्ता भवन्ति हि ।
धन्यादानाच्च ते वृद्धिर्भविष्यति न संशयः ।
सर्वदानफलं तेऽस्तु कन्यादाने युधिष्ठिर ॥
श्राद्धकाले तु यो विप्र कीर्तयेत्पितृसंनिधौ ।
पितरस्तृप्तिमेष्यन्ति सोऽपि पापैः प्रमुच्यते ॥

वैशंपायन उवाच ।

इदं रहस्यं परमं पवित्रं
य श्रावयेद्ब्रह्मसभासु विद्वान् ।
श्रान्तैरपि श्राद्धकृतैरघौघैः
सद्यो विमुक्तः सुरलोकमेति ॥

Colophon

वैशंपायन उवाच ।

मुरारेः पादकमलं धर्मपुत्रः प्रणम्य च ।
पुनरेवापरं धर्मं पृष्टवानरिसूदनम् ॥

युधिष्ठिर उवाच ।

सर्वेषामेव धर्माणां सत्यमाहुरनुत्तमम् ।
लोकनाथ नमस्तेऽस्तु सत्यस्य वद स्व मे ॥
यत्र देवा दिवं यान्ति यत्र सर्वं प्रतिष्ठितम् ।
यत्र वेदविदो यान्ति तथापि मनुजोत्तमाः ॥
यत्र पुण्यान्प्राप्नुवन्ति श्रावाणि पुरुषोत्तम ।
यत्र चानुत्तमा विद्या कीर्तिं च विपुलां श्रियम् ।
तद्धर्मं वद तत्त्वेन लोकनाथ नमोऽस्तु ते ॥
हरिश्चन्द्रादयो भूपा धर्मिष्ठाः सत्यवादिनः ।
सुरलोके वासुदेव तिष्ठन्त्यद्यापि नः श्रुतम् ॥
तस्मिन्नवसरे देवी द्रौपदी शुभदर्शना ।
यदूनां पतिमव्यक्तं जगौ लोकगुरुं प्रति ॥

द्रौपद्युवाच ।

भगवन्पुण्डरीकाक्ष सत्यातीत महामते ।
कृतानुग्रहोऽस्म्यजिन मामुपार्जुमर्हसि ॥

वैशंपायन उवाच ।

उभयोस्तद्वचः श्रुत्वा कृष्णस्तु जगतीपतिः ।
सस्मितं वचनं चेदमब्रवीद्वदतां वर ॥

श्रीभगवानुवाच ।

साधु साधु महाप्राज्ञ प्रसिद्धोऽसि जगत्त्रये ।
यस्मादत्र प्रतिष्ठन्ते धर्मं जायते धर्मवाहो ॥
सत्यं पिता च माता च सत्यं भ्राता युधिष्ठिर ।
लोकान्पालयिता हन्ता सत्यमाहुर्मनीषिणः ।
सत्येन जायते मुक्तिः सत्यात्पापक्षयो भवेत् ॥

युधिष्ठिर उवाच ।

असत्यवादिनो देव स्वर्गं यान्तीति न श्रुतम् ।
तत्कथं देवदेवेश भवान्वर्णीति मे मतिः ॥

श्रीभगवानुवाच ।

गोब्राह्मणार्थे धर्मार्थे न्यर्थे च भरतर्षभ ।

त्रिषत्तावनृत भूयान्घ तस्य न विद्यते ॥
एतानृते तु राजेन्द्र वदेद्वेदनृतं नर ।
नरक तस्य विज्ञेय युगानामयुत प्रभो ॥
सत्य ममेति सकल्प्य योऽवतिष्ठति भूतले ।
तेन पूतमिद सर्व नगरस्थावरजङ्गमम् ॥
सत्येन स्थापिता पूर्व चन्द्रसूर्यादयो ग्रहा ।
दिवि देवगणा सर्वे सेन्द्रा दिग्दन्तिनस्तथा ॥
बहुविद्याप्रद सत्य बहुकीर्तिप्रद शुभम् ॥
पापघ्न दुरितघ्न च सत्य तस्माद्वदेत्सुधी ॥
अत्रैवोदाहरन्तीममितिहास पुरातनम् ।
वक्ष्ये पापहर नृणा श्रोतृणा च सुखप्रदम् ॥
सुमतिर्नाम विप्रेन्द्रो वेदवेदाङ्गपारग ।
व्याघ्रस्य काञ्चनाक्षस्य सत्यमुक्त्वा दिव गत ॥
युधिष्ठिर उवाच ।
सुमतिर्व्याघ्रयो सत्य कथ जात महामते ।
कुत्र स्थितौ महात्मानौ सर्व तत्कथयस्व मे ॥
श्रीभगवानुवाच ।
पुरा कृतयुगे राजन्कावेर्या सरितस्तटे ।
शङ्खतीर्थमिति ख्यात सर्वसिद्धनिषेवितम् ॥
यक्षगन्धर्वनिचयैर्मुनिवृन्दैर्निषेवितम् ।
चम्पकाश्वत्थपुनागपनसै फलमण्डितै ॥
कपित्थचूतबिल्वैश्च कदलीजम्बुनिम्बकै ।
एतैरन्यै पुण्यवृक्षैर्नानामृगगणैरपि ।
मयूरै परभृताभिश्च चक्रवाकोपशोभितम् ॥
तत्रासीत्सुमतिर्नाम ब्राह्मणो वेदपारग ।
शिष्यै प्रशिष्यैरन्यैश्च साक्षादिव पितामह ॥
एकदा तु महाराज शिष्यै परिवृतो वशी ।
कन्दमूलफलान्येधास्याहर्तु वनमाविशत् ॥
आहूय सर्वान्सुमतिमान्शिष्यान्प्राज्ञान्सुशीलवान् ।
अब्रवीच्च तदा वाक्यमेकैक प्रति धर्मज्ञ ॥
शृण्वन्तु मद्वच शिष्या यदर्थ वयमागता ।
कन्दमूलफलान्येधांस्यानयध्व ममान्तिकम् ॥
तावदत्र समित्पुष्पमाहरिष्ये कुशानपि ।
व्याघ्रचोरभय नास्ति युष्माकं तु वने द्विजा ॥
इत्युक्त्वा तु महातेजा सर्वांस्तान्पर्यमोचयत् ।
पश्यन्वनानि पुण्यार्थमेक एवाचरत्तदा ॥
त्रिषोल्वणैर्महानागैर्वृकजम्बुकसकुलै ।
ऋक्षव्याघ्रसमूहैश्च वृकनादैर्भयकरम् ॥
वनमेव बहुविध पश्यन्सुमतिरात्मवान् ।
ध्यायन्सर्वगत मा च विचचार नृपोत्तम ॥
एतस्मिन्नन्तरे मूर्खो व्याघ्रो वै मांसलोलुप ।
उड्डीयोड्डीय वेगेन द्विजस्य निकट गत ॥
ब्राह्मणो विस्मयाविष्टो दिशो दश विलोकयन् ।
पश्यन्व्याघ्र भयकर गन्तु समुपचक्रमे ॥
गच्छन्त ब्राह्मण प्रेक्ष्य शार्दूल विनिहत्य च ।
समुल्लिखन्पदाभ्या तु जगृहे दक्षिण भुजम् ॥
हन्तु कृतमतिं व्याघ्र ब्राह्मणो गतभीस्तदा ।
रक्ताक्ष दीर्घलाङ्गूल दीर्घदंष्ट्र तदाब्रवीत् ॥
भो भो साधो वृथा मा त्व हनिष्यसि निरागसम् ।
*मया किमपराध ते कृत व्याघ्र वदस्व तत् ॥*
कृतापराधिन लोके शिक्षा कुर्वन्ति भूमिपा ।
न हिंसन्ति वृथा सौम्य सज्जना अपि प्राणिनम् ॥
अस्मिञ्जन्मनि हे व्याघ्र मया कस्यापि विप्रियम् ॥
न कृत पूर्वजनने ह्यस्ति चेत्तद्वदस्व म ॥
कन्दमूलफलाहारैर्वर्तयन्तमनागसम् ।
*मा वृथा बाधसे व्याघ्र वने कृच्छ्रादिभि कृशम् ॥*
ग्रीष्मे पञ्चाग्निमध्यस्थ हेमन्ते जलवासिनम् ।
वर्षतौ पतिता वृष्टि मेघवृन्दात्समन्तत ॥
सहिष्णु सर्वदा शुद्ध मुकुन्दप्रियदर्शनम् ।
मां वृथा बाधसे व्याघ्र निर्मांस मांसलोलुप ॥
परपीडापर नित्य परनिन्दापरायणम् ।
असत्यनिरत मूर्ख देवब्राह्मणनिन्दकम् ॥
गुरुनिन्द दुराचार धर्मविक्रयिण खलम् ।
पञ्चयज्ञविहीन च प्रात स्नानविवर्जितम् ॥
जपोपासनहीन च सध्यावन्दनवर्जितम् ।
राक्षसाश्च पिशाचाश्च बाधन्ते त्वादृशा अपि ॥

विघ्ने ( for ° ) — ( L 1026 ) G1 यावद्, G2 यो वा ( for योऽत्र ) — ( L 1029 ) G1 प्रभो ( for तथा ) — ( L 1031 ) G(ed ) दुःखनाश ( for दुरितघ्न ) G1 कृत्य ( for सत्य ) — G1 om lines 1032 1033 G2 G(ed ) om line 1033 — ( L 1037 ) G1 G(ed ) कुत्र स्थितो महात्मासौ; G2 कुत्रस्थ कौ महात्मानौ ( for ° ) — ( L 1039 ) G1 2 G(ed ) सिद्धि ( for सिद्ध ) — ( L 1043 ) G1 G(ed.) पुष्प ( for पुण्य- ) — ( L 1044 ) Hypermetric D1 परभृतैश्च M1 °गुहा भिश्च ( for °भृताभिश्च ) D1 G(ed ) चक्रवाकैश्च शोभि( D1 सेवि )- तम् ( for ° ) — ( L 1046 ) G(ed ) शिष्यवृन्दान्वितो नित्य ( for ° ) — ( L 1048 ) G1 2 corrupt, G(ed ) फलादीनि हि ( for °न्येधासि ) — ( L 1049 ) M1 आनाय ( for आहूय ) D1 धृतिमान् ( for मति° ) G(ed.) सुशीलान ( for- °वान् ) — ( L 1051 ) D1 G1 2 M1 पुत्रा ( for शिष्या ) — ( L 1052 ) G(ed ) स्तान् ( for एधासि ) — ( L 1054 ) M1 G(ed ) सुता ( for द्विजा ) D1 G1 युष्माक शृणु तद्वच, G2 °क शृण्वता सुता ( for ° ) — ( L 1056 ) G(ed ) चिरात्रि हि ( for पुण्यार्थम् ) G2 चरन् ( for [अ]चरत् ) — ( L 1058 ) G2 वराहैश्च ( for समू° ) M1 सूकराद्यैर् ( for वृकनादैर् ) G(ed ) तथा नादैर्भयंकरै ( for ° ) — ( L 1066 ) D1 समुत्थित्य ( for °खन् ) — ( L 1070 ) G(ed ) अपराद्ध ( for °ध ) G2 मे ( for तत् ) — ( L 1072 ) G(ed ) दुर्जना अप्यपापिनम् ( for ° ) — G(ed ) om ( hapl ) lines 1076°–1080° — ( L 1081 ) G1 G(ed ) -वरं ( for -परं ) G2 -बाधा, G(ed ) पीडा ( for निन्दा ) — ( L 1082 ) G1 हिंसकम् ( for निन्द° ) — ( L 1083 ) G(ed ) गुरुनिन्दा

शुचिं गोविन्दभक्तं मां वृथा त्वं बाधसेऽधुना ।
शुष्केनानेन देहेन तव चेन्न प्रयोजनम् ॥

वैशंपायन उवाच ।

निशम्य वचनं तस्य ब्राह्मणस्य नृपोत्तम ।
व्याघ्रोऽवदन्महाघोरो ब्राह्मणं विगतस्पृहम् ॥
शृणुष्व विप्रशार्दूल क्षुधितस्य च मद्वचः ।
अस्थि चापि त्वचं चापि भक्षिष्ये त्वत्कलेवरम् ॥
महापापानि कृत्वापि परपीडामथापि वा ।
आत्मा संरक्षणीयो हि सर्वथा सर्वदेहिनाम् ॥
एवं निशम्य वचनं घोरं व्याघ्रस्य धर्मज्ञ ।
प्रहसन्ब्राह्मणोऽप्याह व्याघ्रं प्रति सुनिर्भयः ॥
मांसमूत्रमलौघैश्च पूरितं श्लेष्मराशिभिः ।
शिरास्थिनिचयैः पूर्णमेतदस्थं कलेवरम् ॥
रजस्वलमनित्यं च दुर्गन्धपरिचर्चितम् ।
ईदृक्शरीरकं व्यर्थमस्वतन्त्रं विनिन्दितम् ॥
प्रयोजनविहीनेन शुष्कास्थिनिचयेन मे ।
तव तृप्तिर्यदि भवेन्मत्त कोऽप्यधिको भुवि ॥
कृतार्थोऽस्मि महाभाग ह्यात्मानं ते ददाम्यहम् ।
आत्मा हि परितुष्ट्यर्थं भवेद्यदि मम प्रियम् ॥
मद्वाक्यं श्रूयतां व्याघ्र सत्यं परमपावनम् ।
गत्वा ममाश्रमं तूर्णमागमिष्ये तवान्तिकम् ॥

व्याघ्र उवाच ।

बान्धवैर्विप्रकृष्टस्य मृत्युवक्त्रगतस्य ते ।
किं कार्यमाश्रमे ह्यस्ति चेत्तद्वदस्व मे ॥

सुमतिरुवाच ।

समारोप्य कृतान्शीघ्रमिहोऽग्रगृहं गतान् ।
शिष्यानाश्वास्य पश्चाच्च स्वामिष्ये तवान्तिकम् ॥

व्याघ्र उवाच ।

अनागते यदि त्वं तु मद्धन्भूयो ममान्तिकम् ।
तदुपायं वद त्वं मे तप्येऽहं जाठराग्निना ॥

सुमतिरुवाच ।

करोमि तेऽहं शपथं येन चित्तं सुनिश्चितम् ।
यथा भवेत्तव व्याघ्र तद्ब्रवीमि हि संमति ॥
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।
महापातकिनश्चैते तत्संयोगी च पञ्चमः ॥
मातृहा पितृहा चैव ह्यात्महा भ्रूणहा तथा ।
गोहन्ता वीरहन्ता च अश्वहा नृपहा तथा ॥
स्त्रीहन्ता पुत्रहन्ता च भ्रातृहा भार्यहा तथा ।
या गतिं प्राप्नुवन्त्येते महापातकिनोऽधमाः ।
अनागतश्चेद्भवतु सा गतिः सर्वथा मम ॥
यन्मातृगमने पापं भगिन्या गमने तथा ।
पुत्रिकागमने यत्तु स्नुषाया गमने तथा ॥
व्याधस्त्रीगमने यत्तु पुल्कसागमने तथा ।
विश्वस्तागमने यत्तु यज्ञपत्न्यास्तु संगमे ॥
विधवागमने यत्तु उदक्यागमने तथा ।
एतासां गमने यत्तु तत्पापं तु भवेन्मम ॥
पतिं त्यक्त्वा तु या नारी अन्यसंगमतत्परा ।
प्रतिकूला पतौ या तु बहुभाषी विरोधिनी ॥
सदा कलहशीला च सदा निष्ठुरभाषिणी ।
सदा रोदनशीला या सदा द्वारपुरःस्थिता ॥
पुत्रताडनशीला या पुत्रद्वेषपरा तथा ।
दानविघ्नकरा या तु सदा मलिनमूर्धजा ॥
सदा मलिनवस्त्रा च सदा कार्पण्यभाषिणी ।
आत्मनिन्दापरा या तु परनिन्दापरा तु या ॥
श्वशुरं श्वश्रुरं चैव विनिन्दन्ती स्वकं शिशुम् ।
भर्तृबन्धुषु या नारी ह्यौदासीन्यपरा तु या ॥
भर्तारं वञ्चयित्वा या संचितार्थपरा सती ।
अन्यसंभाषणपरा ह्यन्यवेश्मनि या स्थिता ॥

---

परं दार- (for °) — $D_1$ om line 1085 — (L. 1088) $G_1$ नास्ति (for चेन्न) G(ed) किं भवेत्तव तद्वद (for °) — (L. 1089) G(ed) सत्यं (for तस्य). — (L. 1097) $G_1$ °पुरीषैः (for °मलौघैः). — For line 1103, G(ed) subst.

82** भगवान्सर्वसाक्षी यश्चकारैतन्मम प्रियम् ।

— (L. 1105) $G_{1,2}$ G(ed) नित्य (for सत्यं) — (L. 1106) $G_1$ G(ed) [आ]श्रमपदम् (for [आ]श्रमं तूर्णम्) — (L. 1109) $G_1$ $M_1$ G(ed.) तु तान् (for कृतान्). — (L. 1110) $G_{1,2}$ शिष्यांस्तान्बोधयित्वा च, G(ed) शिष्यान्पुत्रान्बोधयित्वा (for °) — (L. 1111) $M_1$ G(ed) अनागतो (for °गते) — (L. 1112) $M_1$ G(ed) वदस्व त्वं (for वद त्वं मे). — (L. 1115) $M_1$ च सुरापश्च, G(ed) मद्यपायी (for च सुरापी). — (L. 1118) $G_1$ नृप (for वीर), $G_2$ गजहा (for नृपहा) $M_1$ भ्रातृहन्ता यथा तथा; G(ed.) °हन्तार्यहा तथा (for °). — After line 1119, G(ed) ins :

83** परदारपरद्रव्यपरद्रोहपरायणाः ।
विश्वासघातका ये च दीनानां दुःखदास्तथा ॥
असत्यवादिनो ये च पिशुना गरदास्तथा ।
कृतघ्नाविहीनाश्च अनिद्राश्च तथा परे ॥

— $D_1$ $G_3$ om line 1123 — (L. 1123) $G_1$ $M_1$ पुत्रस्त्रीगमने यत्तु (for °) $G_1$ ह्यात्मजा-, $M_1$ दुहितुः (for स्नुषाया) — (L. 1124) $M_1$ चाण्डाली (for व्याधस्त्री°) $M_1$ पुल्कस्या; G(ed) °स्त्री (for °सा-) — (L. 1125) $G_2$ विश्वासि- (for विश्वस्ता°) — After line 1126, G(ed) ins

84** शूद्रस्त्रीगमने यत्तु ब्रह्मस्त्रीगमने तथा ।

— (L. 1129) G(ed) पदे (for पतौ). — After line 1130, $D_1$ ins

85** सदा बन्धुविहीना सदा स्वजनवर्जिता ।

— (L. 1131) $G_2$ दानविघ्नकरी या तु, G(ed) सदा विघ्नकरी या तु (for °). — (L. 1133) $G_1$ °परा तु या; $M_1$ °परा तु या;

मग्निनाद्री तु या नारी वेश्यालावण्यकारिणी ।
होमकाले विप्रयुक्ता या नारी शयने तथा ॥
अनुत्थिता तु या नारी तल्पाच्चैव पते पुर ।
भर्तु पूर्व स्वपन्ती या दीर्घनिद्रापरा तु या ॥
पुंश्चली दीर्घनिद्रा च ऋतुकालमदर्शिनी ।
आत्मताडनशीला या कुटिला दु खभाषिणी ॥
असूयाया परा या तु विधवासहचारिणी ।
परप्रेष्यपरा या तु या नारी पितृनिन्दका ॥
भ्रातृघ्नीभ्रातृनिन्दा च मातृनिन्दात्मजास्तथा ।
अग्रभोजनशीला या स्वकृतं पाकसंचयम् ॥
सदा कलहकल्याणी चोरवृत्तिपरा दृढा ।
अग्निदा गरदा या तु रज्जुभिर्मरण गता ॥
कूपान्ते पतिता या तु तटाके देहनाशिनी ।
विष पीत्वा मृता या तु अग्निदग्धा स्वय रुषा ॥
आसा तु पतिपत्नीना नरक यद्विदुर्बुधा ।
मम्लाते यदि मयि कन्ये भवतु शाश्वतम् ॥
किं तु वक्ष्यामि शार्दूल वैधव्ये दुष्टचारिणी ।
स्नानहीना तु या नारी विधवा सङ्गलोलुपा ॥
हरिसेवाविहीना या विधवा केशधारिणी ।
उपवासविहीना या व्रतहीनातिदु खिता ॥
कामादिकलहैर्युक्ता सदाताम्बूलभक्षिणी ।
सदामण्डनशीला च विधवा कामचारिणी ॥
सदारोदनशीला या सदामलिनवस्त्रका ।
उष्णोदकेन या स्नाति सदा तु जपवर्जिता ॥
नामत्रयविहीना या मातृवाक्यविरोधिनी ।
विप्रपादोदक या तु शिरसा नैव धारिणी ।
प्रदक्षिणानमस्कारविहीना देवतागृहे ॥
पूर्वभागे तु या भुङ्क्ते दिवसस्य पदे पदे ।
बहुभाषी स्तोत्रहीना व्रतहीना ह्यनिर्मला ॥
गर्भिणी विधवा या तु तद्गीत्या मरण गता ।
काषायवस्त्रहीना या नीलीवस्त्रधरा तु या ॥
द्विभुक्तनिरता या तु भक्ष्यभोज्यरता तु या ।
तैलनिर्मलदेहा तु शिरस्तैल तु धारिणी ॥
अलङ्काररता या तु भूषणादिसुवस्त्रके ।
सुतीर्थविमुखा या तु सत्पात्रे दानवर्जिता ॥
पाददृष्टिविहीना या तिर्यग्दृष्टिरता तु या ।
सदा कर्मविहीना या सदा सलापतत्परा ॥
यां गतिं प्राप्नुवन्त्येता सा मे भवतु शाश्वती ।
न दास्ये यदि मद्देहस्तव तृप्त्यै मृगाधिप ॥

श्रीभगवानुवाच ।

तां वाच सत्यसयुक्तां निशम्य कुरुनन्दन ।
नमस्कृत्य द्विजवर गच्छ सौम्येत्यथाब्रवीत् ॥
गत्वा स्वमाश्रमपदं पुनरेव महामते ।
आगच्छ मम तृप्त्यर्थं प्राणान्रक्ष नमोऽस्तु ते ॥
ब्राह्मणो दक्षिणकर दत्वा व्याघ्रस्य मूर्धनि ।
मा भैषीरुक्त्वान्राजन्निर्भय स्वाश्रम ययौ ॥

Colophon

G(ed) -परायणा (for °कुला) —D1 om lines 1133 1134 —(L. 1135) G(ed.) पर (for पाति) —(L. 1137) D1 -परायणा, G(ed) परा सा (for परा तु या) G2 क्षुत्क्षीणपरायणा (for °) —(L. 1138) D1 परा तु या, G2 परायणा (for परा सती) G(ed) सचिनोत्यर्थसंचयम् (for °) —(L. 1142) G(ed) तल्पात्पश्चौ समुत्थिते (for °) — For lines 1143–1144 G(ed) subst

86** स्वभर्तु पुरतो या तु सपत्नी गाढनिद्रया ।
पुंश्चली सङ्गनिरता या नारी पतिवर्जिता ॥

—(L. 1146) G1 2 M1 अन्या(G2 °न्य)सूयापरा ये तु; G(ed) सन्ततासूयापरा ये तु (for °) —(L. 1147) D1 M1 -प्रेष्यरता (for °परा) G3 विप्र (for पितृ) G(ed) -दूषिणी (for नि दका) —(L. 1148) G1 -परा (for [आ]त्मजास्तथा) G(ed.) भ्रातृघ्नीभ्रातृमातृणां निन्दाया रमते तु या —(L. 1149) D1 G1 2 M1 पान (for पाक) —(L. 1150) M1 -कार्याणि, G(ed) -नीता या (for -कल्याणी) G(ed.) शठा (for दृढा) —(L. 1152) G1 कूपान्त, G3 कूपे नि; G(ed) कूपान्त (for °न्ते) G(ed) तटाके पतिताथ वा (for °) —(L. 1153) G1 2 M1 विषपीत (for विष पीत्वा) —(L. 1154) G(ed) दुष्ट (for पति) G3 आसां च मृगशार्दूल (for °) —(L. 1156) G3 M1 चारिणाम् (for °णी) —G1 om lines 1159 1162 G1 om lines 1159-1161 —(L. 1160) G(ed) कामाता कलहे युक्ता (for °) —(L. 1162) G1 G(ed) विमल (for मलिन) —(L. 1163) G1 G(ed) सदा जपविवर्जिता (for °) — G3 om line 1167 —(L. 1167) D1 G1 च सरिमता (for पदे पदे) —(L. 1168) G(ed) वृत्त (for व्रत) G2 च कल्मषा (for ह्यनिर्मला) D1 पितृवाक्यविरोधिनी (for °) — For line 1169 G(ed.) subst.

87** विधवा गर्भिणी या तु गर्भं भित्वा मृता तु या ।

—(L. 1170) G1 2 M1 G(ed.) शुद्ध (for नीली) —G3 om line 1173 —(L. 1176) G(ed) धर्म (for -कर्म) —(L. 1177) D1 G2 M1 शाश्वतम् (for °ती) — After line 1177, G3 ins

88** कृच्छ्रलब्धधनं क्षेत्रमन्यायेन बलाद्धरेत् ।
योऽतिघोरेण पापेन लिप्येय मन्यनागने ॥

—(L. 1178) G(ed) भयकर (for मृगाधिप) —(L. 1179) G1 G(ed) युक्तां च (for -सयुक्तां) —(L. 1181) G2 तु स्वाश्रम (for स्वमा°) —(L. 1182) G2 नृप- (for मम) —(L. 1184) G1 2 [इ]त्युक्तवान (for उक्तवान्) M1 मा भैरित्युक्तवा राजन्, G(ed) मा भैषीरित्यवोचत्स (for °)

Colophon —*Sub-parvan* D1 G1 2 G(ed) आश्चर्यपर्वणि

युधिष्ठिर उवाच ।

गत्वा स्वमाश्रमपदं ब्राह्मणो बन्धुवत्सल ।
किमब्रवीन्महाभाग भार्यां चैव स्वपुत्रकान् ॥
क्षमावाक्यः पुनर्ज्ञात्वा व्याघ्रपार्श्वं कथं गतः ।
तन्मे कथय सर्वेश पाण्डूनां हितकृत्तम ॥

श्रीभगवानुवाच ।

मां ध्यायन्सर्वलोकेशं सृष्टिस्थित्यन्तकारिणम् ।
मामकं पौरुषं सूक्तं जपन्नाश्रममाययौ ॥
आश्रमस्थान्स्वकाञ्शिष्यानाहूय ब्रह्मवित्तमः ।
स्वपत्नीमात्मजांश्चैव इदं वचनमब्रवीत् ।
शृण्वन्तु मद्वचः पुत्राः सत्यं ब्रूयां हिताय च ॥
वेदे च धर्मशास्त्रे च यो धर्मः प्रोच्यते बुधैः ।
तमेव सर्वकालेषु कुरुध्वमविशङ्कया ॥
चराचरात्मकं विश्वं देवतिर्यङ्नरादिकम् ।
विष्णुरूपमिदं सर्वं पश्यध्वमविशङ्कया ॥
वाङ्मनःकर्मभिर्नित्यं हीनैश्च द्रव्यसंचयैः ।
मा वृत्तिं सर्वथा हीनां कुरुध्वमविशङ्कया ॥
सर्वधर्ममयं सारं वक्ष्यामि च हिताय व ।
परदारान्परद्रव्यं स्वप्ने वा न स्मरिष्यथ ॥
इत्युक्त्वा ब्राह्मणश्रेष्ठ सत्यवाग्गतहंकृतिः ।
अग्निहोत्रगृहं विद्वानाससादातिहर्षितः ॥
अग्नीन् हुत्वा सदारस्तु प्रणम्य प्रयतेन्द्रियः ।
समारोप्याग्नींस्तान्स्वात्मनि महाशये ॥
स्वकां पुत्रवतीं भार्यां साध्वीं तां प्रियवादिनीम् ।
आहूय वचनं वाग्मी प्रोवाच भरतर्षभ ॥
हे प्रिये शृणु मद्वाक्यं कल्याणि ह्यतिथिप्रिये ।
पुत्रान्संरक्ष धर्मेण परं श्रेयो गमिष्यसि ॥
धर्मं भजस्व सततं भूतहिंसां सदा त्यज ।
जहि कामान्स्वदेहस्थान्साधुसङ्गं सदा कुरु ॥
हरिमर्चय भद्रे त्वं सत्यशीला तथा भव ।
देहेऽस्मिन्बुद्बुदाकारे ममतां त्यज सर्वदा ॥
इति वादिनि धर्मिष्ठे भार्या तस्य प्रिया सती ।
शिरस्यञ्जलिमाधाय दुःखिता वाक्यमब्रवीत् ॥
भगवन्नीदृशी वाणी मोक्षपूर्वा त्वयानघ ।
साशङ्का इव मे भाति कथं वक्तुं त्वमर्हसि ॥

सुमतिरुवाच ।

समित्पुष्पकुशार्थं तु ह्यागतस्य तनुर्मम ।
व्याघ्रस्य दत्ता तृप्त्यर्थं क्षुधितस्य मयानघे ।
तन्निमित्तमहं वच्मि सत्यकालं प्रजाम्यहम् ॥
एवमुक्ता तदा साध्वी ब्राह्मणी शोककर्शिता ।
पपात सहसा भूमौ हा हतास्मीति दुःखिता ॥
समुत्थाप्य तदा साध्वीं ब्राह्मणो ब्रह्मवित्तमः ।
निःस्पृहः सर्वकामेषु तदा वाक्यमभाषत ॥
मद्वचः श्रूयतां भीरु धर्मबुद्धिं सदा कुरु ।
धर्ममार्गपराणां तु धर्म एव परा गतिः ॥
पतिवाक्यरतानां तु स्त्रीणां चैव शुभानने ।
स्त्रीजन्म नास्ति नास्त्येव देवा एवं वदन्ति हि ॥
धर्मनिष्ठा तपोनिष्ठा सत्यनिष्ठा सदा भव ।
मदर्थं कुरु वक्ष्यामि यदि चेद्धि ददासि च ॥
एवमुक्ता तदा साध्वी ब्राह्मणी धर्मनन्दन ।
तथा करोमीत्युटजं प्रविवेश सुतान्विता ॥
ध्यायन्ती पर्णशालायां सर्वधातारमच्युतम् ।

---

शेषधर्मः ; M1 शेषधर्मो . — *Adhy. name* : D1 व्याघ्रद्विजसंवाद° ; G1 सत्यमतिशः ; G(ed.) सत्यव्रतप्रशंसायां द्विजव्याघ्रसंवाद° — *Adhy. no.* : D1 G1, 3 M1 G(ed.) 9

( L. 1185 ) G3 G(ed.) धर्म- ( for बन्धु- ). — ( L. 1186 ) G(ed.) स्वभार्यां च ( for भार्यां चैव ). — ( L. 1187 ) G1, 3 M1 -वाक्यात् ( for -वाक्य ). — For line 1187, G(ed.) subst. :

89** स सत्यवचनो धीमान्पुत्रकान्प्रति कथं गतः ।

— ( L. 1188 ) G3 सर्वेण ( for सर्वेश ). — ( L. 1189 ) D1 -कारणम्, G3 -कारकम् ( for -कारिणम् ). — ( L. 1191 ) M1 सर्वांश्च ब्राह्मणोत्तम ( for ° ). — Before line 1193, D1 M1 ins. सुमतिरुवाच. — ( L. 1193 ) G3 शृणुध्व ( for शृण्वन्तु ). G1 G(ed.) ब्रूम ; G3 वच्मि ( for ब्रूयां ). — ( L. 1194 ) G1, 3 ये धर्मा° ( for यो धर्मः ). — ( L. 1195 ) G3 तान् ( for तम् ). M1 -लोकेषु ( for -कालेषु ). D1 शृणुध्वम् ( for कुरु° ). — ( L. 1196 ) G3 पक्षिनिर्दिग्जनादिकम् ( for ° ). — ( L. 1197 ) G(ed.) विश्वं ( for सर्वं ). — G3 om. lines 1198–1199. — ( L. 1198 ) G1 [illegible] ( for ° ). — ( L. 1199 ) [illegible] ( for ° ). — ( L. 1200 ) G3 -सार- ( for -धर्म- ). — ( L. 1201 ) G(ed.) [illegible] ( for परद्रव्य ). — ( L. 1202 ) G3 M1 [illegible] ( for °ति ). — ( L. 1203 ) G(ed.) [illegible] ( for [अ]तिहर्षित° ). — ( L. 1204 ) G(ed.) सदारान् ; G1 [आ]हुताग्नीन् ; M1 सदारांस्तु ( for सदारस्तु ). G(ed.) विजितेन्द्रिय° ( for प्रय° ). — ( L. 1205 ) D1 महाशयः ( for °ये ). — ( L. 1206 ) G1 M1 [illegible] ( for प्रिय- ). — ( L. 1207 ) G(ed.) सोऽपि ( for वाग्मी ). — ( L. 1209 ) G(ed.) भविष्यति ( for गमिष्यसि ). — ( L. 1210 ) G1 G(ed.) [illegible] ; G3 परित्यज ( for सदा त्यज ). — ( L. 1215 ) D1 D2 आरोप्य ( for आधाय ). — Before line 1216, D1 M1 ins. ब्राह्मणी उवाच. — ( L. 1216 ) D1 [illegible] ( for भगवन् ). G1, 3 M1 ईदृशा ( for °शी ). D1 G3 -पूर्वं ( for पूर्वा ). — For line 1217, G(ed.) subst. :

90** [illegible]

— D1 [illegible] ( for [illegible] ). — ( L. 1219 ) G3 M1 [illegible] ( for -कुशार्थं ). G(ed.) [illegible] ( for ° ). — ( L. 1220 ) D1 G3 [illegible] ; G3 M1 [illegible] ( for [illegible] ). — ( L. 1225 ) M1 [illegible] ( for ° ). — ( L. 1227 ) G(ed.) [illegible] ( for ° ). — ( L. 1233 )

तुष्टाव पुण्डरीकाक्षं योगिध्येयमरिंदमम् ॥
ब्राह्मणी उवाच ।
लक्ष्मीपते नमस्तुभ्यं सृष्टिस्थित्यन्तकारिणे ।
चिरकालं ममानन्त सौमङ्गल्यं ददस्व ह ॥
अनाथबन्धो देवेश पाहि मां पतिदानतः ।
त्वत्पादकमलादन्या गतिर्मम न विद्यते ॥
कालात्मन्सर्वभूतात्मन्बालापत्यां तपस्विनीम् ।
पाहि मां सर्वलोकेश पतिदानात्प्रतापने ॥
शिष्येषु वा मयि सुते कृपा यदि तवास्ति चेत् ।
*सौमङ्गल्यं ददस्व त्वं भूयो भूयो नमोऽस्तु ते ॥*
ध्यायन्ती देवदेवेशमिति नत्वा पुनः पुनः ।
अध्यास्ते पर्णशाला तु गतशोका पतिव्रता ॥
ब्राह्मणो गतवास्तूर्णं शिष्यैः परिवृतो वशी ।
व्याघ्रो मृगारिर्यत्रास्ते स देशः पाण्डुनन्दन ॥
स्थाप्य दूरे स्वकाञ्शिष्यान्शान्तिसूक्तं निवेद्य च ।
व्याघ्रस्य समुखं चागाद्धर्मी कीर्तिवर्धनः ॥
तस्मिन्नवसरे शिष्या जप्त्वा सूक्तानि पौरुषान् ।
दिशां पतीन्नमस्कृत्य प्रार्थयामासुरव्ययान् ॥
*नता स्म देवराज त्वां पाहि लोकपते प्रभो ।*
यज्ञांशभागिने तुभ्यमस्मद्गुरुमवत्स्वपम् ॥
वैवस्वत नता स्म त्वां धर्मरूप सतां पते ।
अपमृत्युभयात्पाहि गुरुं नो लोकवन्दितम् ॥
अपां पते नता स्म त्वां पाहि न पाशधारिणे ।
व्याघ्रघोरभयादेव गुरुं निष्कल्मषं प्रभो ॥
निधीश निःस्पृहं शान्तं पाहि नो गुरुमव्ययम् ।
त्वत्पादं तु वयं सर्वे प्रपन्ना एव धर्मप ॥
इति स्तुता दिक्पतयो देवगन्धर्वकोटिभिः ।
उद्गीयमानाः सर्वत्र तं देशमगमन्नृप ॥
पिण्डीकृतां तनुं दृष्ट्वा ब्राह्मणस्य नृपोत्तम ।
विस्मयं परमं जग्मुर्देवाः सर्वे दिवि स्थिताः ॥
भक्ष्यतां भक्ष्यतां व्याघ्र क्षुधितोऽसि तनुर्मम ।
इत्याकर्ण्य वचस्तस्य सर्वे विस्मयमागताः ॥
सर्वे दिवौकसो राजन्सर्वशास्त्रविशारदम् ।
पुरस्कृत्य गुरुं श्रेष्ठं सुत्रामाणं बभाषिरे ॥
*तृप्तिमस्मै प्रयच्छ त्वं व्याघ्राय त्रिदशेश्वर ।*
त्रिविष्टपं ददस्व त्वं ब्राह्मणाय महात्मने ॥
*तथेति च समाहूय ब्राह्मणं* विगतस्पृहम् ।
दिवस्पतिरुवाचेदं सर्वभूतहिते रतम् ॥
सुमते ब्राह्मणश्रेष्ठ मत्तः स्वर्गं ददामि ते ।
सत्यप्रतिज्ञा दत्ता हि मयैव हि तवैव हि ॥
सुरलोके तथा सौख्यं तेन सत्येन सुव्रत ।
भुङ्क्ष्व भोगान्विचित्रांश्च यानमारोह तेऽर्पितम् ॥
दिवस्पतिवचः श्रुत्वा सुमतिर्ब्राह्मणोत्तमः ।
दृष्ट्वा देवान्दिविस्थांश्च ननाम च सुविस्मितः ॥
सुमतिरुवाच ।
*शिष्याणां चैव सर्वेषां भार्यायाश्च दिवस्पते ।*
यदि नाकं ददासि त्वं व्याघ्रस्य च तथास्तु मे ॥
सुमतेस्तु वचः श्रुत्वा तदा देवपतिः प्रभुः ।
अब्रवीन्मधुरं वाक्यं ब्राह्मणं गतकल्मषम् ॥
भुक्त्वा भोगान्यथेष्टं त्वं सशिष्यैर्भार्यया सह ।
दिवं गच्छ महाभाग कीर्तिस्ते शाश्वती भवेत् ॥
दासौ ते मित्रतानुचिरेष्टा नान्येषु सुव्रत ।
तस्मात्त्वेप्सितं सर्वं प्रदास्यामि वरं द्विज ॥
परीक्षार्थंपराः सर्वे ह्येते त्रिदशपुंगवाः ।

---

G(ed) -प्यागरम् (for धा°) — (L. 1234) G₁ अनुत्तमम् (*for* मरिंद°) — D₁ G(ed) *om* the ref — (L. 1235) D₁ कारणम् (for कारिणे) — (L. 1236) D₁ [मा]नन्द (for [म]नन्त) — (L. 1240) D₁ G₁ -कालेषु, M₁ कामेषु; G(ed) -कावेषु (for -लोकेश) — (L. 1241) G(ed) मयि (for यदि) — (L. 1245) G(ed) -पूर्ण (for तूर्णं) — (L. 1247) G(ed) सूक्तान् (for सूक्त) C₁ जपन्ति (for निवेद्य च) — (L. 1248) G₁ C(ed) यावाद (for चागाद्) — (L. 1249) M₁ G(*ed*) सूक्तांश्च (*for* सूक्तानि) D₁ जप्त्वा सूक्तानि देवतान् (for°) — (L. 1251) G(ed) नमस्कुर्मो देवराज (for°) — For line 1252, C(ed.) subst. :

91** यज्ञांशभागी भगवानस्मद्गुरुं रक्ष्य च ।

— (L. 1253) G(ed) नमस्कुर्म (for नता स्म त्वां) G₁ M₁ -कल्पिन् (for रूप) — (L. 1254) G(ed.) -लोकनाम् (for -वन्दि°) G₂ गुरुनो लोकवन्दितम् (for°) — (L. 1255) G(ed) पाहि न परमं गुरुम् (for°) — (L. 1256) D₁ G₂ घर (for देव) — For line 1256, G(ed) subst.

92** पाहि व्याघ्रभयात्स्मान्नाथगुरुं महात्मनः ।

— (L. 1257) C(ed) निधीश (for °श) M₁ निधीश महाभाग गुरुं (hypermetric) (for°) — (L. 1258) G₁ धर्मेश, G(ed) हरः (for धर्मप) — (L. 1261) G(ed) -कृत (for -कृतां). D₁ ब्राह्मण सुरसत्तमाः (for°) — (L. 1266) D₁ नमस्कृत्य (for पु°) M₁ तत्र (for श्रे) — (L. 1267) D₁ C(ed) त्रिदिवेश्वर (for त्रिद°) — (L. 1268) G(ed) महात्मन (for °त्मने) — (L. 1269) G₁ समाहत्य; G₂ समाहूय, G(ed) समाचार (for °हूय) G(ed) -स्पृहम् (for स्पृहम्) — (L. 1270) G(ed) रत (for रतम्) 1272) G₁ सदेव च न मानवे; G₂ M₁ चादेव न च मानव, C(ed) तदेव च न सदय (for°) — (L. 1273) G(ed) यथा सर्वे (for तथा सौख्यं) — (L. 1277) D₁ M₁ महात्मने (for दिवस्पते) — (L. 1278) G(ed) दिवस्पते (for तथास्तु मे) — After line 1278, G(ed) ins :

93** मम मे आयते बुद्धिः यथा मे तवे दिवम् ।

— (L. 1280) G₁ विविधान् (for -वद्ध°) — (L. 1283) M₁ कौतुकार्थं च ते बुद्धिः, G(ed) दृष्टो न विबुद्धिश्च (for°) — (L. 1285) G(ed) परीक्षार्थं सुराः सर्वे (for°) G(ed.)

व्याघ्रव्याजेन सुप्रीतास्त्वान्तिकमुपागता ॥
इत्युक्त्वान्तर्दधे पार्थ गोत्रभिरसपुरोहित ।
विमाने व्याघ्रमारोप्य ह्लादिसेया दिव गता ॥
ब्राह्मणो विस्मयाविष्ट शिष्यै सह युधिष्ठिर ।
आश्रम प्राप धर्मज्ञो भार्यावाक्यत्रयेद्वयत् ॥
कर्मकाण्डमशेषेण कृत्वा शिष्यान्विवाह्य च ।
भुक्त्वा भोगान्यथेष्ट तु शिष्यै सह दिव गत ॥
तस्मात्सत्य पर धर्म दैवतैरपि दुर्लभम् ।
स्वर्गलोकप्रद पार्थ सत्यमेव वदन्ति हि ॥
सत्यशीलो भव त्व च धृति मा मुञ्च सप्रति ।
सत्येन ते भवेत्स्वर्गस्त्वमप्येव समाचर ॥
य इद पुण्यमाख्यान शृणोति श्रद्धया नर ।
स विधूयेह पापानि स्वर्गलोके महीयते ॥

Colophon

युधिष्ठिर उवाच ।

प्राणिना रक्षणे पुण्य सर्वलोकप्रदायकम् ।
एव वदन्ति धर्मिष्ठ मुनयो मुनिकीर्तन ॥
तस्य धर्मफल देव दर्शयाद्य यदूत्तम ।
मम प्रीत्या वद श्रीमन्भूयो भूयो नमाम्यहम् ॥

श्रीभगवानुवाच ।

यो दद्यादभय भूप भयविह्वलचेतसाम् ।
तस्य पुण्यफल वक्तु नाल वर्षशतैरपि ॥
एकत क्रतव सर्वे समग्रवरदक्षिणा ।
एकतो भयभीतस्य प्राणिन प्राणरक्षणम् ॥
सरक्षति महीपाल भयविह्वलचेतसम् ।
स स्नातोऽब्दशत साम गङ्गाया नात्र सशय ॥
कपोतस्याभय दत्त्वा शिबिर्नाम जनेश्वर ।
प्राप्तवान्दैवत लोक सत्य सत्य मयोदितम् ॥

युधिष्ठिर उवाच ।

शिबिर्नाम महातेजा राजा धर्मपरायण ।
कपोतस्याभय दत्त्वा कथ मुक्तिमवाप्तवान् ॥
त्वमेव वेत्सि तत्सर्व लोकनाथ नमोऽस्तु ते ।
मयि कारुण्यभावेन कृष्ण सप्रति कथ्यताम् ॥

श्रीभगवानुवाच ।

आसीत्पुरा महाराज सत्यवादी दृढव्रत ।
शिबिर्नाम महातेजा सर्वैश्वर्यसमन्वित ॥
वर्तमाने महायज्ञे शिबेस्तस्य महात्मन ।
देवलोकेऽथ गन्धर्वा गायन्ति स्म हि तद्यश ॥
तत्परीक्षा करोमीति वृत्रारि समचिन्तयत् ।
सहाय वरयामास वैश्वानरमरिंदम ।
इन्द्र श्येन कपोतोऽग्निर्भूत्वा तत्रोपजग्मतु ॥
कपोतो भीतिसयुक्त श्येनात्तस्मान्महामते ।
राजान शरण गत्वा प्रणिपत्येदमब्रवीत् ॥
भो भो राजन्महाराज शोभन चरित तव ।
श्येनो हिंसितुमुद्युक्तो मा पालय कृपालय ॥
इत्युक्त्वा सहसा राजन्राजान शरण ययौ ।
राजापि भयसविग्न कम्पमान वचोऽब्रवीत् ॥
इत एहि कपोत त्व भयशोकौ विमुञ्च ह ।
मृत्युतोऽपि भय नास्ति मत्समीपे स्थितस्य ते ।
किमुतान्यन्महाबुद्धे त्यज कम्प सुखी भव ॥
एवमुक्ते तु राजेन्द्रे श्येनरूपी सुरेश्वर ।
आजगाम नृपस्याशु यज्ञवाट महामते ।

सभया ( for पुगवा ) —D1 om lines 1287–1288 —( L. 1287 ) G(ed) वलभित् ( for गोत्र° ) —( L 1289 ) D1 तथा गत ( for युधिष्ठिर ) —( L 1290 ) G(ed) धर्मिष्ठो ( for धर्मज्ञो ) G1 आश्रम प्राप्य धर्मिष्ठो ( for ° ) — For lines 1293 1294, G(ed) subst

94** तस्मात्सत्य परो धर्म सत्ये सर्व प्रतिष्ठितम् ।
तस्यैव नास्त्युपमान पारावारस्य नौर्यथा ॥

—( L. 1295 ) G(ed) सुव्रत ( for सप्रति ) —( L. 1297 ) D1 G(ed) [अ]न्वित ( for नर ) —( L. 1298 ) M1 G(ed.) सत्य ( for स्वर्ग ) — After line 1299 G(ed) ins.

95** सत्य सत्यमह वच्मि नात्र कार्या विचारणा ।

Colophon — *Sub-parvan* D1 G1 2 M1 आश्चर्यपर्व — *Adhy name* D1 M1 सत्यप्रशसनम्, G1 2 सत्यप्रशसा, G(ed) सत्यप्रशसाया विप्रव्याघ्रसवादसमाप्ति —*Adhy no* D1 G1 2 M1 G(ed) 10

( L 1299 ) G(ed) रक्षणे ( for °णे ) G(ed) स्वर्ग ( for सर्व ) —( L 1300 ) G(ed) सर्वे ( for एव ) M1 धर्मिष्ठा ( for °ष्ठ ) D1 -कीर्तित ( for -कीर्तन ) —( L 1301 ) G(ed) पुण्य ( for धर्म ) G2 तस्य धर्मस्य रूप हि ( for ° ) G(ed) तापनाशनम् ( for ° ) —( L 1302 ) G(ed) मयि ( for मम ) G1 G(ed) नमोऽस्तु ते ( for नमाम्यहम् ) — D1 om lines 1304–1307 —( L 1304 ) G(ed) नाह शक्तो नराधिप ( for ° ) —( L 1308 ) D1 G1 G(ed) स स्नाने, G2 सुस्नाने ( for स स्नातो ) —( L 1309 ) G(ed) नराधिप ( for जनेश्वर ) —( L 1310 ) G1 [इ]रितम् ( for [उ]दितम् ) G(ed) सर्वदेवै सुपूजित ( for ° ) —( L 1312 ) D1 अवाप्तवान् ( for °प्तवान् ) — After the ref, D1 ins

96** अत्रैवोदाहरन्तीममितिहास पुरातनम् ।
अवाप्तस्वर्गपावर्ग यशस्य पुण्यवर्धनम् ॥

—( L 1316 ) G(ed) शिबिर्नामातिविख्यात ( for ° ) —( L. 1318 ) D1 M1 लोकेषु ( for -लोकेऽथ ) D1 G2 महामते ( for हि तद्यश ) —( L. 1320 ) G1 G(ed) सहाय ( for सखाय ) D1 सहाय कारयामास ( for ° ) —( L 1322 ) D1 श्येनार्तस्तु, G1 °स्त स ( for °स्मान्म ) —( L 1325 ) G1 कृपानिधे ( for °लय ) —( L 1326 ) G1 G(ed) गत ( for ययौ ) —( L. 1327 ) G(ed) भयार्त ( for सविग्न ) —( L. 1328 ) G1 एहीहि च ( for इत एहि ) D1 भयशोक ( for °कौ ) — For line 1330, G(ed) subst.

विभावसो नमस्तेऽस्तु गृह्यतां मत्प्रदत्तवि ।
काले पुण्ये महाभाग पालयस्व नमोऽस्तु ते ॥
कर्मेप्सोर्यजमानस्य वाच श्रुत्वा मनोरमाम् ।
प्रादादग्निश्च शक्रश्च वर लोक बहुश्रुतम् ॥
यावत्काल चन्द्रसूर्यौ दिवि देवनिषेवितौ ।
तावत्ते कीर्तिरतुला लोके ख्यातिं गमिष्यति ॥
दिव्यरूपधरो भूत्वा भुक्त्वा भोगान्यथेच्छया ।
ब्रह्मलोकं व्रज श्रीमन्नित्युक्त्वान्तरधीयत ॥
तस्मात्त्वमपि राजेन्द्र पौरव कुरु सर्वदा ।
पुरुषार्थादिव यान्ति बहवोऽन्ये नरोत्तमा ॥
प्राणेन मनसा वाचा कर्मणा कुरुनन्दन ।
परेषा दुःखितानां तु साहाय्य कुरु सर्वदा ॥
अप्यह भक्तवर्गाणां मयि सन्न्यस्तकर्मणाम् ।
करोम्यहर्निश पार्थ योगक्षेम महात्मनाम् ॥
परेषा हितकृन्नित्य यो वा को वापि भूपते ।
मत्कृत्य स हि विज्ञेयस्तस्याहं सुलभोऽनिशम् ॥
य इद पुण्यमाख्यान शृणुयाद्भक्तिमान्नर ।
यथा ययौ शिबिर्लोक ब्रह्मणोऽभ्येति सोऽपि च ॥

Colophon

युधिष्ठिर उवाच ।

श्रिय पते नमस्तेऽस्तु सर्वलोकस्य कारण ।
त्वत्पादाम्बुजनिष्ठस्य सर्वसम्पत्प्रदायक ॥
अष्टादशपुराणेषु यो धर्म प्रोच्यते बुधै ।
तत्सर्वं भगवान्वेत्ति स्वय धर्मेश्वरो यत ॥
सूक्ष्मधर्ममनेकार्थं बहुलोकप्रद ध्रुवम् ।
सुलभं सर्वजन्तूनां सादरमपि कामदम् ॥
पुण्यद पुण्यशीलानां स्वर्गद स्वर्गगामिनाम् ।
मोक्षद मोक्षकामानां पुत्रद पुत्रकामिनाम् ॥
पापघ्न पापजन्तूनां स्वत्पादकमलाद्विपीश्वर ।
सर्वयज्ञफलं तात सर्वतीर्थफलप्रदम् ॥
शिवमायुष्कर देव कीर्तनीय त्वदाश्रयम् ।
ज्ञानद भक्तिद नाथ त्वत्प्रिय परमेष्ठिन ॥
प्रिय शक्रस्य धर्मस्य वरुणस्य तथा प्रियम् ।
धनदस्य च शर्वस्य तथा वै चन्द्रसूर्ययो ॥
नक्षत्राणां च सर्वेषां गन्धर्वाप्सरसामपि ।
देवतानामृषीणां च ब्राह्मणानां प्रिय च यत ॥
पुण्यदेश पुण्यकाल पुण्ययोग तथा क्षयम् ।
एतान्सर्वान्महाभाग विस्तराद्वक्तुमर्हसि ॥
अस्माकं त्वद्वच पथ्य पवित्र पापनाशनम् ।
श्रोतुकामा अमी विप्रा यज्वानो ऋषयस्तथा ।
भ्रातरो मे महाभाग पाञ्चाली पापवर्जिता ॥
गता स्म सर्वे जगता निवास
पाण्डो सुतानां प्रियकृत्सुरेश ।
त्वत्पादमूल तु वय हि सर्वे
गता स्म पाहीति तमित्यवोचत् ॥

वैशम्पायन उवाच ।

भक्तिं विज्ञाय भृत्यानां पाण्डूनां हितकृद्धरि ।
उवाच मधुरं वाक्यं प्रीणयन्सर्वमानस ॥

श्रीभगवानुवाच ।

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ।
धर्मे ते वर्तते बुद्धिमान्मत्त्व लोकविश्रुत ॥
शृणु पार्थ महाभाग सर्वशास्त्रविशारद ।
वक्ष्यामि तव सप्रीत्यै धर्मसारसमुच्चयम् ।
नारदाय पुरा गीत नैमिषारण्यवासिने ॥
मरुत्वन्त दिवि स्थाप्य बदरीवनवासिना ।
विस्तराद्वदितु नाल मया वर्षशतैरपि ॥
तस्मात्समासतो वक्ष्ये शृणु नान्यमना प्रभो ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
धर्म श्रुतो वा दृष्टो वा कृतो वा कारितोऽपि वा ।
अनुमोदितो वा राजेन्द्र नयतीन्द्रपुर महत् ॥

---

देवदुन्दुभयो नेदुर्दिव्या कुसुमवृष्टय ।
श्येनरूपी सहस्राक्ष स्वदेह प्राप्तवांस्तदा ॥
— (L 1379) D1 G1 हव्यवाहन (for °डयम्). — (L 1380) M1 G(ed) वरम् (for वयम्) — (L 1381) D1 M1 धर्मिष्ठ, G1 भद्र त (for धमष्ठ) — G1 om line 1383 — (L 1387) G(ed) मां पालय (for पालयस्व) — (L 1389) D1 ब्रह्मलोके बहुश्रुतान् (for °) — (L 1390) G1 निषवितौ (for °तौ) — (L 1392) D1 यथेप्सितम्, G1 °प्सितान् (for °च्छया) — (L 1395) D1 G(ed) नृपोत्तम (for नरो°) — (L 1396) G(ed) कायेन (for प्राणेन) — (L 1398) D1 G(ed) भृत्य, G1 s भ्रात (for भक्त) COLOPHON — *Sub-parvan* D1 G1 3 आश्वमेधिकं — *Adhy name* D1 अभयप्रदानम्, G1 अभयप्रदानम्, M1 G(ed) अभयप्रदानप्रदानम् — *Adhy no* D1 G1 3 M1 G(ed) 11

— (L 1407) G(ed) तु भवान् (for भगवान्) G1 G(ed) सर्वलोकेश्वरो यत (for °) — (L 1408) G1 G(ed) यच्च सूक्ष्मम् (for सूक्ष्मधर्मम) — (L 1410) M1 स्वर्गिनाम्; G(ed) -कामि° (for गामि°) — (L 1413) D1 नाथ (for प्रीय) — (L 1414) D1 प्रियम्, G1 शीघ्रम् (for प्रियम्) — (L 1416) D1 सोमस्य (for धर्मस्य) D1 धर्मस्य वरुणस्य च (for °) — (L 1421) G1 एता धर्मान्, G(ed) एतान्सर्वे (for एता सर्वान्) — (L 1424) G(ed) पाञ्चाली सुखमाकुला (for °) — Before line 1425, D1 ins वैशंपायन उवाच. — (L 1425) G1 M1 G(ed) अधीश (for निवास) — (L 1428) G(ed) [उ]वाच (for [अ]वोचत्) — D1 om the ref — (L 1430) D1 मुमुदे, G1 मानसम् (for °स) — (L 1433) D1 महाप्राज्ञ, G1 °ज्ञ (for °भाग) — (L 1434) M1 G(ed) तु (for स) D1 धर्मसारसमुच्चयम् (for °) — (L 1439) D1 G1 स्मरन् (for श्रुत) — (L 1440)

धर्मा बहुविधा प्रोक्ता पुण्यलोकप्रदायका ।
तेषा मध्य यदेकैक कृतवान्नाकमश्नुते ॥
तनुना मम सर्वासा ब्राह्मणो हि विशिष्यते ।
तत्राप्यध्यात्मनि?ष्ठे दत्त भवति चाक्षयम् ॥
कलत्रिण वा शाखश श्रोत्रिय वा गुणान्वितम् ।
यो दत्त्वा स्थापयेद्वृत्ति तस्य पुण्यफल शृणु ॥
मातृत पितृतश्चैव द्विको ऽकुलसयुत ।
मम लोकमवाप्नोति यत्र गत्वा न शोचति ॥
गण्यन्ते पासवो भूमेर्गण्यन्ते वर्षबिन्दव ।
न गण्यते विधात्रापि ब्राह्मणस्थापने फलम् ॥
समस्तदेवतारूपो ब्राह्मण परिकीर्तित ।
जीवन ददतस्तस्य क पुण्य गदितु क्षम ॥
देवपूजासु सत्त्राय पुराणश्रवणे तथा ।
देय प्रयत्नतो राजन्पुराणपठकाय च ॥
यो विप्रहितकृच्चित्त स सर्वान्क्रतवान्मखान् ।
स स्नात सर्वतीर्थेषु तप्त तेनाखिल तप ॥
यो ददात्येव विप्राणा जीवन प्रोच्यते नर ।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितै ॥
भूमिदानसम दान सर्वलोकेषु नो नृप ।
पर निर्वाणमाप्नोति भूमिदो नात्र सशय ॥
भूमिद सवद प्रोक्ता भूमिदो मोक्षभाग्भवेत् ।
भूमिदान तु यो दद्यात्सर्वपापै प्रमुच्यते ॥
द्विजस्य वृत्तिहीनस्य सदाचाररतस्य च ।
जीवनार्थं महीं दत्त्वा तस्य पुण्यफलं शृणु ॥
गङ्गातीरेऽश्वमेधाना शतानि विधिवन्नर ।
कृत्वा यत्फलमाप्नोति भूमिदस्तु तदश्नुते ॥
भूमिदान महादानमतिदान प्रकीर्तितम् ।
सर्वपापप्रशमनमपवर्गफलप्रदम् ॥

तस्मात्त्वमपि राजेन्द्र भूदान कुरु सर्वदा ।
पुराणवेदशास्त्राणा वक्तृणा त्व ददस्व ह ॥
तटाक कारयत्यस्तु स्वयमेव करोति वा ।
तस्यैव वशजा सर्वे ब्रह्मलोक व्रजन्ति हि ॥
कर्तुं तटाक यो मर्त्य प्रारम्भ कुरुते यदि ।
सोऽपि तत्फलमाप्नोति तदुपायप्रदश्च य ॥
मृद तु भारमात्र यस्तत्तटाकाद्बहि क्षिपेत् ।
त्रिविष्टपमवाप्नोति यावदाचन्द्रतारकम् ॥
तटाकार्धफल राजन्कासारे परिकीर्तितम् ।
कूप पादफल ज्ञेय कुल्याया तच्छतोत्तरम् ॥
देवालय तटाक वा ग्राम वा पालयेत्तु य ।
तेषा शतगुण श्रेय कर्तृभ्योऽपि महीयते ॥
देवतायतन यस्तु कुरुते कारयत्यपि ।
स चन्द्रधवलैर्यानैर्मम लोके सुखी भवेत् ॥
शिवस्य वा हरेर्वापि य करोति ममालयम् ।
ब्रह्मलोकादिका-भुक्त्वा तदन्ते मामुपैति स ॥
इष्टाद्भि कारयेद्यस्तु धनाढ्यो देवतागृहम् ।
मृदा दरिद्र कुरुते समपुण्य प्रकीर्तितम् ॥
आराम कारयेद्यस्तु बहुजन्तूपकारकम् ।
स चन्द्रधवलैर्यानैर्मम लोक हि गच्छति ॥
स्थापयेद्वृक्षमेकं वा दरिद्रो लाकसाधनम् ।
स याति ब्रह्मणो लोक यमेन परिपूजित ॥
गावो वा ब्राह्मणो वापि पथिको वा नृपोत्तम ।
क्षणार्धमपि तच्छाया निषेवन्ते नयत्यमुम् ॥
पुरोपकण्ठे पथि च वृक्षारामप्रवर्तक ।
तत्र यावन्ति पर्णानि बीजानि कुसुमानि च ।
तावत्काल वसत्नाके शतकोटिकुलान्वित ॥
तुलसीरोपण ये तु कुर्वन्ति मनुजोत्तमा ।

D1 G3 वधिनो ( for व ?नो ) —( L. 1441 ) Hypermetric. G(ed ) प्र ( for अनु ) D1 जनान्, G1 G(ed.) जनम् ( for महद ) M1 स याति परमा गतिम् ( for ᵇ ) —( L. 1442 ) G(ed ) च बहुधा ( for बहुविधा ) —( L. 1444 ) G1 ₃ दानानामपि सर्वेषा ( for ᵃ ) —( L. 1450 ) G3 भूमौ ( for भूमे ) G(ed.) वृष्टि ( for वर्ष ) —( L. 1453 ) D1 च ददस् ( for ददतस ) —After line 1453, D1 M1 G(ed ) ins

101** सर्वेषामेव वर्णानां ब्राह्मण परमो गुरु ।
तस्य देयानि दानानि स तारयति पण्डित ॥
स कर्म निरताथैव श्रोत्रियायाहिताग्नये ।
वृत्तिहीनाय वै देय दरिद्राय कुटुम्बिने ॥

[( L. 2 ) D1 M1 नारकान् ( for पण्डित ) ]

—( L. 1456 ) G ₁ G(ed ) सत्र ( for सवान् ) G3 मखम् ( for मख न् ) —( L. 1458 ) G1 M1 G(ed ) जीवन वक्ति मानव ( for ᵃ ) —( L. 1460 ) D1 M1 विप्र ( for सक ) —( L. 1461 ) D1 भूमिदानाग्र मानव , G2 ᵃदान न सशय ( for ᵇ ) —( L. 1463 ) G1 ₁ G(ed ) सर्वपापप्रणाशनम् ( for ᵃ ) —( L. 1465 ) G(ed ) न्य युक्त ( for महीं दत्त्वा ) —( L. 1466 ) D1 विधिना ( for विधिवन् ) — G1 om lines 1471–1472 —( L. 1471 ) G(ed ) धम ( for वद ) —( L. 1473 ) G1 ₃ तव ( for तस्य ) D1 M1 मम ( for ब्रह्म ) —After line 1473 D1 G(ed ) ins

102** य कश्चित्पशवो वापि तटाकेषु जलं पिबेत् ।
तत्तु सर्वाणि पापानि नाशयन्ति न सशय ॥
एतस्मादपि वो नेय भूमिस्थमुदक कुरु ।

[( L. 1 ) D1 राजन् ( for वापि ) —( L. 3 ) D1 भूमिष्ठमधिकं कुरु ( for ᵇ ) ]

—( L. 1475 ) G3 M1 तत्क्षणम् ( for तत्फलम् ) —( L. 1476 ) G(ed ) मात्रं ( for मात्र ) D1 तटाक च ( for तत्तटाकाद् ) G(ed ) तटाकात्प्रक्षिपद्बहि ( for ᵇ ) —( L. 1478 ) M1 कासार ( for ᵒरे ) G3 कासार परिकीर्तित ( for ᵇ ) —( L. 1479 ) G(ed ) कूपे ( for कूप ) M1 वा फलम् ( for पादफल ) —( L. 1480 ) D1 M1 मठ ग्राम च पालयेत् ( for ᵃ ) —( L. 1485 ) G3 मम लोक स गच्छति ( for ᵇ ) —( L. 1488 ) G1 स ( for

सर्वान्विशान्ममुद्धस्य यमेन परिपूजिता ।
तप्तहाटकवर्णैश्च यामैर्यान्ति ममालयम् ॥
ऊर्ध्वपुण्ड्रकरो यस्तु तुलसीमूलमृत्कणैः ।
तत्रैव तेन तत्रासीन्मूर्ध्निन्दोर्बिभृयारलम् ॥
तृणानि तुलसीमूलाद्यावदुत्पाटितानि वै ।
तावती ब्रह्महत्या वै छिनत्त्येव न संशय ॥
तुलसीं सेचयेद्यस्तु चुलुकोदकमात्रकम् ।
पितरस्तृप्तिमेष्यन्ति ब्रह्मलोकं व्रजन्ति हि ॥
ददाति ब्राह्मणाना यस्तुलसीदलकोमलम् ।
यमेन पूजितो याति मम लोकं च शाश्वतम् ॥
तुलसीकाष्ठमणिना निर्मितेन प्रयत्नत ।
गायत्र्यादिजप कुर्यात्तस्य नास्ति महद्भयम् ॥
सदा सधारयेद्यस्तु तुलसीमणिमालिकाम् ।
भूतप्रेतपिशाचैस्तु न दृष्टो वर्तते सुखी ॥
कण्ठे भुजद्वये यस्तु धारयेत्तुलसीमणिम् ।
यमदूता महात्मानो नमस्यन्ति हि तं द्विजम् ॥
कण्टकावरण चापि प्राकारं चापि भूपते ।
तुलस्या कुरुते यस्तु मम लोकं स गच्छति ॥
योऽर्चयेद्धरिपादाब्ज तुलसीकोमलैर्दलैः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥
तुलसीकानन यत्र यत्र पद्मवनानि च ।
वसन्ति वैष्णवा यत्र तत्र संनिहितो हरि ॥
तुलसीमञ्जरीभिस्तु पितॄनर्चन्ति ये नरा ।
प्रहृष्टा पितर सर्वे मम लोकं व्रजन्ति हि ॥
गङ्गा तु तुलसी चैव सर्वकालेषु संस्मरेत् ।
दु स्वप्ने दुर्निमित्ते च दुष्टभावे क्षुते स्खले ॥
तस्मात्त्वं पितृकार्येषु पितॄनर्चय मा स्मरन् ।
पितरस्ते प्रदास्यन्ति यत्ते मनसि रोचते ॥
ब्रह्मा देवास्तथा सिद्धा यक्षगन्धर्वकिंनरा ।
पितरो लोकपालाश्च पार्थिवा मम मूर्तय ॥
अमृतांशु कठोरांशुराकाशो भूमिरेव च ।
आप पर्वतजालानि विद्धि पार्थ ममाशव ॥
महानद्यो महाभाग वायुरग्निश्च सागर ।
अव्यक्त व्यक्तरूप च विद्धि मां पाण्डुनन्दन ॥
अर्च्यो वन्द्यस्तथा ध्येयो जप्य स्तुत्य परा गति ।
मामेव विद्धि भूपाल मयि सर्वं प्रतिष्ठितम् ॥
ममार्चनपरो नित्य मामेव समुपैष्यसि ।
तव देहाभिमानस्य कर्ताहं सर्वदानघ ॥
किं नु वक्ष्याम्यहं पार्थ यत्ते मनसि वर्तते ।
तदाचक्ष्व विचार्यं त्वमत्र मुञ्चसि साध्वसम् ॥

वैशंपायन उवाच ।

इत्युक्तो देवदेवेन धर्मपुत्रो महामति ।
मति चक्रे पुनर्धर्मान्श्रोतु देवे जनार्दने ॥
इद भगवता प्रोक्त देवदेवेन चक्रिणा ।
य शृणोति सदा भक्त्या पातकेभ्य स मुच्यते ।

Colophon

वैशंपायन उवाच ।

कृपा विज्ञाय देवस्य धर्मराजो महामति ।
पुनरेवापर धर्मं पप्रच्छ द्विजसंसदि ॥

---

ष्टु ) — ( L 1492 ) G(ed ) गौश्चैव ( for गावो वा ) — ( L 1493 ) G(ed ) कृष्णार्थं स्नानच्छायाया ( for ° ) $D_1$ निष्ठशोके ( for °शोक ) — ( L 1497 ) $D_1$ मनुजात्तम ( for °मा ) — ( L 1498 ) G(ed ) सर्वांल्लोकान्समुत्तीर्य ( for ° ) — ( L 1500 ) $G_1$ G(ed ) धरो ( for करो ) $D_1$ °मृत्तिका, $G_2$ मृद्गणे ( for मृत्कणै ) — ( L 1501 ) $G_1$ धन्यस्य, $M_1$ तस्य स्नान्, G(ed ) शिरसि ( for तत्रासीन ) $D_1$ तस्यैव पत्र तत्स्था ( for ° ) G(ed ) कला च हृदय धारयेत् ( for $^b$ ) — ( L 1502 ) $D_1$ G(ed ) यावन्त्यु( $D_1$ °न्त्य )ग्रहणानि वै, $G_1$ °न्त्युत्पाटयन्ति वै ( for $^b$ ). — ( L 1504 ) G(ed ) मात्रक ( for °कम् ) — ( L 1506 ) G(ed ) यो ददाति ब्राह्मणाय ( for ° ) $D_1$ $M_1$ G(ed ) तुलस्या कोमल दलम् ( for ° ) — ( L 1507 ) G(ed ) सनातनम् ( for च शाश्वतम् ) — ( L 1509 ) $G_3$ कुर्वन् ( for कुर्यात् ) G(ed ) तस्य स्नान समस्तस्य ( for $^b$ ) — ( L 1511 ) G(ed ) स्पृष्टो ( for दृष्टो ) — ( L 1512 ) After line 1512$^a$, G(ed ) ins

103** स्पर्शयावां शिरस्यथ ।
धारयेद्यस्तु तुलसीमणिमालां नरोत्तम ॥

— ( L 1513 ) G(ed ) महात्मान ( for °नो ) — ( L 1514 ) $D_1$ भूतले ( for भूपते ) — ( L 1520 ) $D_1$ मानवा ( for ये नरा ) — ( L 1521 ) G(ed ) तुष्यन्ति पितरस्तस्य ( for ° ) — ( L 1523 ) $M_1$ दु स्वप्ने वा दुर्निमित्ते ( for ° ) $D_1$ $M_1$ क्षुतस्खले, $G_2$ क्षुधे स्थिल ( for क्षुते स्खले ) — ( L 1525 ) $G_1$ G(ed ) प्रदास्य ते ( for °न्ति ) — ( L 1526 ) $G_1$ यक्षा ( for सिद्धा ) $G_1$ रक्षो ( for यक्ष ) — ( L 1529 ) G(ed ) [ए]ते ते ( for पार्थ ) $D_1$ $G_1$ $M_1$ ममांशका ( for °व ). — ( L 1530 ) G(ed ) सागरा ( for °र ) — For line 1531, $D_1$ subst

104** आद्यो वन्द्य स्त्रिया ध्येयो सदा जप्यपरा गति ।

— ( L 1535 ) कर्ताह पाण्डुनन्दन ( for $^b$ ) — ( L 1538 ) G(ed ) महात्मना ( for °मति ) — ( L 1539 ) $M_1$ तथा ( for पुनर् ) G(ed ) ध्यात्वा ( for धर्मान् ) G(ed.) श्रोतु धर्माञ्जनार्दनात् ( for $^b$ ) — ( L 1541 ) $G_1$ पातकैस्तु, $G_2$ °कैस्तद् ( for °भ्य ). $M_1$ पातकै स तु मुच्यते ( for $^b$ )

Colophon — *Sub parvan* $D_1$ $G_1$ $M_1$ आश्चर्यपर्व, $G_2$ $M_1$ G(ed ) शेषधर्मा — *Adhy name* $D_1$ शेषधर्मे सकलधर्मप्रशंसनम्. G(ed) नानाधर्मप्रशंसा — *Adhy no* $D_1$ $G_1$ 2 $M_1$ G(ed ) 12

$D_1$ $G_2$ युधिष्ठिर ( for वैशंपायन ) — ( L 1542 ) G(ed ) धर्मपुत्रो ( for °राजा ) — ( L 1543 ) G(ed ) पृष्टवान्गरुड

युधिष्ठिर उवाच ।

यज्ञमूर्ते सहस्राक्ष धर्ममूर्ते नमोऽस्तु ते ।
पूजाभिषेककर्माणि कथयस्व ममानघ ॥

श्रीभगवानुवाच ।

शृणु पार्थ प्रवक्ष्यामि पुण्यकाल च पूजनम् ।
पूजाद्रव्य च धर्म च ब्राह्मणाना प्रपूजनम् ॥
द्वादश्या पौर्णमास्या च एकादश्या नृपोत्तम ।
सोमसूर्योपरागे च सक्रान्तावयने शुभे ।
सिद्धयोगे पुण्यदिने व्यतीपाते च वैधृतौ ॥
पुण्यक्षेत्रे पुण्यकाले पुण्यर्क्षे पाण्डुनन्दन ॥
शन्यश्विन्या बुधाश्विन्या माघमासे नृपात्मज ।
वस्त्रपूतेन पयसा तथा पञ्चामृतेन च ।
पुष्पगन्धोदकैश्चैव य स्नापयति केशवम् ॥
नैवेद्यैर्विविधाकारैर्भक्ष्यमुख्यैर्नृपोत्तम ।
य पूजयति मा पार्थ शूलपाणिमथापि वा ॥
मातॄन पितृतश्चैव प्रियाया वंशजानपि ।
सर्वान्वशान्समुद्धृत्य देवगन्धर्वसेवित ॥
तप्तकाञ्चनसवीतैर्नानामणिविराजितै ।
किङ्किणीजालसयुक्तैर्यानैर्हंसनियन्त्रितै ॥
अप्सरोगणसकीर्णैर्विमानैरुपशोभित ।
याम्यादिषु च लोकेषु भुक्त्वा भोगान्यथेच्छया ।
मम लोकमनुप्राप्य तत्रैव परिमुच्यते ॥
शकर मा च सर्वेश भेदबुद्धिविवर्जित ।
य पूजयेत्सदा भक्त्या काङ्क्षित लोकमेष्यति ॥
केतकीकरवीराब्जचम्पकाजातिमल्लिका ।
अमूनि ये प्रयच्छन्ति पुष्पाणि सुरभीणि मे ॥
तां पूजा प्रतिगृह्णाति रुद्रो वै लोकशासन ।
पालकोऽहं च राजेन्द्र ह्यावयोरन्तर न च ॥
पूजयस्व च मां पार्थ तत्र त्व सुखमेष्यसि ॥
तिलतैलान्वित दीप मम रुद्रस्य भारत ।
दत्त्वा नर सर्वकामान्सप्राप्नोति न सशय ॥
घृतदीप तु यो दद्यान्महादेवस्य संनिधौ ।
स मुक्त सर्वपापेभ्य सर्वयज्ञफल लभेत् ॥
यद्यदिष्टतम भोज्य तत्तदीशाय दापयेत् ।
सर्वपापविनिर्मुक्तो मम लोक स गच्छति ॥
कार्त्तिके मासि माघे च दीप मम गृहे सदा ।
वर्तयस्व च कौन्तेय ब्राह्मणान्भोजयस्व ह ।
भोजिते ब्राह्मणे सृष्ट मम तृप्तिर्भवेद्ध्रुवम् ॥
यद्यदिष्टतम भोज्य तत्तद्विप्राय दापयेत् ।
स याति ब्रह्मभवन सर्वमोहविवर्जितम् ॥
भ्रूणहाप्यन्नदानेन शुद्धो भवति भूपते ।
नान्नतोयसम दान त्रिषु लोकेषु विद्यते ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकै ।
शृणुष्व चित्र भूपाल शुद्ध्यत्यन्नजलप्रद ॥
शरीरमन्नज प्राहु प्राणमन्न प्रचक्षते ।
तस्मादन्नप्रदो श्रेय प्राणदो नात्र सशय ॥
अन्नदस्य कुले जाता आसहस्र नृपोत्तम ।
नरक ते न पश्यन्ति तस्मादन्नप्रदो वर ॥
पथि श्रान्त द्विज दृष्ट्वा यस्तु भक्त्या प्रपूजयेत् ।
सर्वदेवगणा पूज्यश्च दत्त्वा तु धर्मज ॥
अन्नदानेन मतिमान्ब्रह्मलोक स गच्छति ॥
आयान्मम तिथि राजन्सर्वदेवा अनुव्रता ।
तस्मिंस्तुष्टे जगत्तुष्ट देवास्तृप्यन्ति धर्मज ॥
दिव प्रपेदिरे मुक्तास्तस्मादन्नप्रदो वर ।
नास्तिवाक्य स कृत्वा यो ब्राह्मणे गृहमागते ।
तस्य पाप महाघोर रौरव नरक भवेत् ॥
अन्न ददाति यो राजन्स सर्वान्कृतवान्मखान् ।
पशुराज्यधनापत्यस्वर्गमोक्षाँल्लभेन्नर ।
अन्नदाच्च कौन्तेय तस्मादन्नप्रदो वर ॥
विप्ररूपेण भोक्ताह विप्ररूपेण पूजित ।
ददामि विप्ररूपेण सर्वान्कामान्नृपोत्तम ॥
पादाभ्यङ्ग भक्तियुक्तो ब्राह्मणाना करोति य ।
स स्नात सर्वतीर्थेषु गङ्गास्नानपुर सरम् ॥
तैलाभ्यङ्ग महाराज ब्राह्मणाना करोति य ।
स स्नातोऽब्दशत साग्र गङ्गाया नात्र सशय ॥
उष्णोदकेन यो राजन्ब्राह्मणान्स्नापयेन्नर ।
स कोटिकुलसंयुक्तो वसेद्ब्रह्मपुरे नर ॥
कर्मणा मनसा वाचा यो रक्षेदामयान्वितम् ।

स्त्रजम् ( for ° ) — G3 om the ref — ( L 1548 ) M1 नराधिप ( for नृपोत्तम ) — G3 om lines 1551-1552 — ( L 1554 ) G3 G(ed ) गन्धाद्भिश्च ( for गन्धोदकैश्च ) — ( L 1559 ) G1 विचित्रितै D2 विकुट्टिमै , M1 त्रिपट्टितै ( for विराजितै ) — ( L 1561 ) G1 सेवीनैर् ( for सकीर्णैर् ) — ( L 1562 ) D1 सत्यादिषु ( for याम्या° ) D1 यथेप्सितान् ( for °च्छया ) — ( L 1566 ) G1 मल्लिके ( for °का ) — ( L 1568 ) G(ed ) नाशन ( for शासन ) — ( L 1571 ) G(ed ) संनिधौ ( for भारत ) — ( L 1572 ) G3 सवृणोति ( for सप्राप्नोति ) — ( L 1573 ) G3 मम रुद्रस्य संनिधौ , M1 G(ed.) मम देवस्य स° ( for ° ) — ( L 1577 ) G(ed ) च संनिधौ ( for गृहे सदा ) — ( L 1579 ) G(ed ) भोजन ( for भोजिते ) G(ed ) तृप्त्यै ( for तृप्तिर् ) — ( L 1580 ) ब्राह्मणेभ्यो निवेदयेत् ( for ° ) — ( L 1584 ) G(ed ) सयुक्तो ( for युक्तो वा ) — ( L 1585 ) G3 शुद्ध्यर्थं च ( for शुध्यत्यन्न ) — G1 om lines 1586-1589 — ( L 1587 ) G3 प्राणद परिकीर्तित ( for ° ) — ( L 1588 ) D1 आसाहस्र ( for आस° ) — D1 om lines 1590-1600 — ( L 1593 ) G1 अनुद्रुता ( for °व्रता ) — M1 om ( hapl ) lines 1596-1600 — ( L 1596 ) G1 अश्रुत्वा च ; G(ed ) अकृत्वा तु ( for स कृत्वा यो ) — G1 G(ed ) om line 1597 — G3 om lines 1604 1605 — ( L 1607 ) D1 G(ed.) प्रियान्

स याति वज्रिणो लोकं पुनरावृत्तिवर्जितम् ॥
यो ददाति महीपाल निवासं ब्राह्मणाय च ।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोति पुष्कलम् ॥
अन्येभ्य प्रतिगृह्यापि स्वां गामपि पयस्विनीम् ।
यो ददाति च विप्राय स याति ब्रह्मणः पदम् ॥
कपिलां वेदविदुषे यो ददाति पयस्विनीम् ।
स एव रुद्रो भूपाल सर्वदेवप्रपूजितः ॥
विप्राय ब्रह्मविदुषे दद्यादुभयतोमुखीम् ।
तस्यैव वशगाः सर्वे मम लोके वसन्ति हि ॥
यो मृत्युकाले संप्राप्ते गां ददाति पयस्विनीम् ।
मया दर्शितमार्गेण ब्रह्मलोकं स गच्छति ॥
व्याधिना पीडितो यस्तु ग्रहनक्षत्रपीडया ।
अपमृत्युं च सम्प्राप्य तीव्रां सुखमश्नुते ॥
अपत्यधनरत्नानि राज्यानि विविधानि च ।
गोदानात्प्राप्यते मर्त्यो निष्पापश्च दिवं व्रजेत् ॥
तस्मात्सर्वप्रयत्नेन गोदानं कुरु भूपते ।
अनेन ते भवेद्वृद्धिः स्वर्गमोक्षौ च सुव्रत ॥
वरिष्ठ मर्त्यलोकानां गोप्रदाता नृपोत्तम ।
मे प्रियो मम भक्तश्च पूज्यो लोकेषु विश्रुतः ॥
सदा दानेषु निरतस्य सदा शास्त्रानुवादिनः ।
प्रियवदस्य साधोश्च कृपा मम सदा भवेत् ॥
सर्वलोकप्रभुं वीर सर्वभावात्मनमच्युतम् ।
योगीश्वरं सदानन्दं विद्धि मां भरतर्षभ ॥
स्रष्टारं सर्वभूतानां रक्षितारं जगन्मयम् ।
संसारोत्तारणं देवं विद्धि मां भरतर्षभ ॥
धर्मदं धर्मशीलानां तापसानां तपःफलम् ।
ध्यातृणां ध्यानयोगं मां विद्धि त्वं धर्मनन्दन ॥
मया प्रोक्तमिमं धर्मं च शृणोति मदाश्रयः ।
ददामि तस्य वै स्वर्गं यावदाचन्द्रतारकम् ॥

Colophon

युधिष्ठिर उवाच ।
नानाद्रव्याणि देयानि वस्त्रादीनि फलानि च ।
सुगन्धश्च सुपुष्पाणि धान्यानि विविधानि च ।
कस्य देयानि योगीन्द्र तन्मे त्वं कृपया वद ॥

श्रीभगवानुवाच ।
सर्वेषामपि दानानां कर्तारं पाण्डुनन्दन ।
मम मूर्तिधरायेह विप्रायैव ददस्व ह ॥
वस्त्रं ददाति यो राजन्ब्राह्मणाय सदक्षिणम् ।
शिवलोकमवाप्नोति शतवर्षसमन्वितः ॥
कौबेरं कम्बलाद्यानि कञ्चुकं सूर्यसंनिधिम् ।
चित्राम्बरप्रदाता च स्वर्गलोकाधिपो भवेत् ॥
सुरक्तवस्त्रदश्चैव नृप माञ्जिष्ठरक्तथा ।
क्षीराम्बरप्रदाता च मम लोकं स गच्छति ॥
यानदश्छत्रदश्चैव पादुकां च ददाति यः ।
उपानहप्रदाता च सर्वलोकवरो भवेत् ॥
गजाश्वमहिषान्राजन्यो ददाति सदक्षिणम् ।
अपमृत्युभयान्मुक्तस्तथा मेधमदः सुखी ॥
शत्रूञ्जयति संग्रामे राजा जयति मण्डलम् ।
तस्य भृत्यं दास्युजनं पूज्यं सर्वधनुर्भृताम् ॥
तस्मात्त्वं भूभृतां श्रेष्ठ कुरु दानं मयोदितम् ॥
अजकृष्णाजिनं दानं सर्वव्याधिविनाशनम् ।
आयुष्करं प्रियं मृत्यो स्वर्गदं स्वर्गमिच्छताम् ॥
अनड्वान्दत्तमात्रेण पापव्याधिविनाशनम् ।
दातारं ब्रह्मणो लोकं नयत्येव न संशयः ।
कृष्णाजिनप्रदातृणां क्षयगुल्मादिनाशनं ॥

---

(for नर) — (L 1612) G(ed) आप्नोति (for प्रा°) G2 मानव (for पुष्कलम्) — (L 1613) D1 -गृह्णाति (for -गृह्यापि) G1 अन्येभ्यो ब्राह्मणेभ्यश्च (for °) D1 यस्तु गां हि (for स्वां गामपि) — (L 1616) D1 रुद्रलोके (for एव रुद्रो) — (L 1617) D1 विप्राय वेदविदुषे (for °) — (L 1620) D1 G1 G(ed) मया (for मया) — (L 1621) D1 M1 व्याध्यादि (for व्याधिना) D1 पीडित (for पीडया) — (L 1622) M1 गां दत्त्वा (for तामवाप्य) — (L 1626) G(ed) ऋद्धि (for वृद्धि) G2 च भारत, G(ed) मुखप्रदौ (for च सुव्रत) D2 स्वर्गमोक्षसुखानि च (for [4]) — (L 1627) D1 गोदानं च, G1 G(ed) गोप्रदानात् M1 °दानं (for °दाता) — (L 1629) G1 दानैक, G(ed) दाने तु (for दानेषु) G(ed) दानेषु (for शास्त्रानु) — (L 1631) G(ed.) -दाता रम् (for धा°) — (L 1634) D2 -संसाररोगोच्चरणं, M1 G(ed) °रोत्तारकं देव (for °) — (L 1636) M1 विद्धि पाण्डुनन्दन (for [4])

Colophon — *Sub-parvan* D1 आश्चर्यपर्व — *Adhy name* D1 G(ed) शेषधर्मे दानप्रशंसा, G1 2 शेषधर्मा — *Adhy no* D1 G1 2 M1 G(ed) 13

G2 om line 1640 — (L 1640) D1 गन्धधूप, M1 सुगन्धीनि (for सुगन्धश्च) — (L 1641) D1 त्वमेव (for तन्मे त्वं) — (L 1643) D1 रूप (for मूर्ति) — (L 1646) G(ed) कौशेय कम्बलादीनि (for °) G(ed) कञ्चुकं सूर्यसंनिभम् (for [b]) — For line 1646, G(ed) ins

105** यो ददाति च विप्राय स्वर्गलोकं स गच्छति ।

— (L 1647) D1 स्वर्गलोकं स गच्छति (for [4]) — (L 1649) M1 G(ed) चीनाम्बर (for चीरा°) — After line 1649, G(ed) ins

106** वैशाखमार्गशीर्षमासयोश्च ब्राह्मणानां विशेषतः ।

— (L 1651) G1 लोकेश्वरो M1 G(ed) लोकपती (for °वरो). — (L 1653) D1 G1 M1 अपमृत्यु नश्यत्याशु (for °) — (L 1655) G1 M1 पुण्यजना, G1 G(ed) दस्युजनैः (for °जनं). D1 पूज्य सर्वधनुर्भृत (for °) — (L 1657) D1 G(ed) आर्द्र

दारिद्र्यनाशन राजन्नपमृत्युभयापहम् ।
दारुणा निर्मितं पात्रं पूरितं गन्धवारिणा ॥
यो राजन्मुखजेभ्यस्तु दक्षिणा च ददाति च ।
उपेन्द्रो भगवान्विष्णुः सुधामस्मै प्रयच्छति ।
सुधां पिबन्हस्मपात्रे स्वर्गलोके महीयते ॥
यो राजल्लोहपात्रं तु स्वादुपानप्रपूरितम् ।
ददाति भूसुरेभ्यस्तु तस्य पुण्यफलं शृणु ॥
मार्गे सुधां पिबन्राजन्यमलोकं स गच्छति ।
पूजितो धर्मराजेन चन्द्रलोकं स गच्छति ॥
ताम्रपात्रं महाराज गन्धोदकसमन्वितम् ।
ददाति ब्राह्मणानां च सूर्यलोकं स गच्छति ॥
रजतं राजशार्दूल पात्रं जलसमन्वितम् ।
वेदशास्त्रविदे दद्यात्तस्य पुण्यं ब्रवीमि ते ॥
पञ्चाशद्युगपर्यन्तं चन्द्रलोके सुखी भवेत् ।
ततो भूमिं समासाद्य चक्रवर्तीह जायते ॥
सौवर्णनिर्मितं पात्रं स्वादुपानप्रपूरितम् ।
श्रोत्रियाय तु यो दद्याद्दरिद्राय विशेषतः ।
तस्य पुण्यफलं चित्रं सावधानमतिः शृणु ॥
यक्षकिंनरगन्धर्वचारणाद्यैरभिष्टुतः ।
सुधापानं प्रकुर्वाणः प्रयाति मम मन्दिरम् ॥
पञ्चकोटिकुलैर्युक्तो मेरुमूर्ध्नि चिरं वसेत् ।
भूलोकं समनुप्राप्य सार्वभौमश्च जायते ॥
इष्ट्वा दिव्यक्रतून्सर्वांस्तथा जित्वा भुवःस्थलम् ।
दत्त्वा सर्वाणि दानानि मम सायुज्यमश्नुते ॥
कांस्यपात्रं तु यो दद्याद्वस्त्रदक्षिणसंयुतम् ।
ददामि विष्णवेत्युक्त्वा यो ददाति सुवाग्मिने ।
कोटित्रिंशत्समायुक्तः सत्यलोके सुखी भवेत् ॥
तस्मात्सर्वेषु कालेषु यत्किंचिद्धि ददाति च ।
मम बुद्ध्या महीपाल तत्सर्वं मेरुतां व्रजेत् ॥
नवं वै मृण्मयं पात्रं स्वादूदकसमन्वितम् ।
दरिद्रोऽपि च मां ध्यात्वा मम सालोक्यमश्नुते ॥
वृद्धेभ्यो ब्राह्मणेभ्यस्तु यतये योगिने नृप ।
यद्दत्तं यद्धुतं तप्तं तत्सर्वं मदनुग्रहात् ॥
कोटिकोटिगुणं राजन्स्वल्पं वापि महद्भवेत् ।
अक्षय्यलोकमाप्नोति ह्यक्षय्यं सुखमश्नुते ॥
वृद्धेभ्यो ब्राह्मणेभ्यस्तु यतये रोगिणे नृप ।
वस्त्रयष्ट्यजिनं पथ्यमौषधं च ददाति यः ।
सर्वान्वंशान्समुद्धृत्य ब्रह्मलोकं स गच्छति ॥
हिरण्यं राजतं वापि यो दद्याद्दानमुत्तमम् ।
महदैश्वर्यमाप्नोति ब्रह्मणा परिपूजितः ॥
पशुपुत्रधनादीन्वै विन्देत्सौवर्णदानतः ।
पुण्यलोकानिमान्सर्वानमृतत्वं च गच्छति ॥
रजतं निष्कमात्रं तु यो दद्यात्पाण्डुनन्दन ।
शिवलोकमवाप्नोति शतवर्षसमन्वितः ॥
सीसं कांस्यं तथा ताम्रं पलत्रितयसंमितम् ॥
यो ददाति नरश्रेष्ठो रुद्रलोकं स गच्छति ॥
अयस्कान्तं(?) यतीनां तु यो दद्यात्पात्रमुत्तमम् ।
स कोटिकुलसंयुक्तो देवलोके चिरं वसेत् ॥
काषायं च तथा भैक्षं कौपीनं कम्बलं तु वा ।
यो ददाति यतीनां तु स मुक्तो नात्र संशयः ॥
कार्त्तिक्यां पौर्णमास्यां वा आषाढे वापि भूपते ।
वृषभं विसृजेद्यस्तु तस्य पुण्यफलं शृणु ॥
सर्वजन्मार्जितैः पापैर्विमुक्तो रुद्ररूपभाक् ।
कुलसप्ततिसंयुक्तो रुद्रेण सह मोदते ॥
पितरस्तस्य तृप्यन्ति देवाश्चिदशपुंगवाः ।
नरकस्था दिवं यान्ति दिविस्था ब्रह्मणः पदम् ।
ब्रह्मस्था विष्णुलोकं च सत्यं सत्यं मयोदितम् ॥
शिवलिङ्गाङ्कितं कृत्वा महिषं यः समुत्सृजेत् ।
यमस्य यातना तस्य नैव तत्र मयोदितम् ॥
यमेन पूजितः सम्यक्सुरलोकं व्रजेद्ध्रुवम् ॥
अनड्वाहं चिरं कालं कर्षयित्वा नृपोत्तम ।
उत्सृजेद्वार्धके भावे तस्य पुण्यं वदामि ते ॥
इहलोके सुखं भुक्त्वा पुत्रपौत्रादिसंयुतः ।

(for अज्ञ) — G1 om lines 1660-1661 — (L 1662) D1 अपमृत्यु प्रणाशयति, G1 M1 °मृत्युश्च नाशयति, G(ed) °मृत्यु च नाशयेत् (for °) — (L 1664) G(ed) स द्विजेभ्यश्च (for मुख°) — (L 1667) D1 -पानं प्र ; G1 -पानक (for -पान-प्र-) — (L 1670) D1 M1 यम (for धर्म) — (L 1673) M1 G(ed) राजन् (for र°) G1 पात्र जल-; M1 पात्रं वारि (for पात्रं जल) — (L 1675) G1 2 ब्रह्मलोके (for (for चन्द्र°) G(ed) महीयते (for सुखी भवेत्) — (L 1679) D1 G1 मनाः (for मतिः) — (L 1684) M1 दिव्यान्क्रतून् (for दिव्यक्रतून्) G(ed) राजन् (for सर्वान्) and निर्जित्य च (for तथा जित्वा) — (L 1685) G1 मम लोकं स गच्छति (for °). — (L 1686) G(ed) द्विजाय (for -दक्षिण) — (L 1687) G(ed) भक्तियुक्तस्तु वाग्मिने (for °). — (L 1688) G1 महीयते (for सुखी भवेत्). — (L 1690) G(ed) मयि भक्त्या (for मम बुद्ध्या). — G1 2 om lines 1694-1696 — (L 1702) G1 वस्त्र (for पुत्र). — D1 — D1 om (hapl.) lines 1704-1707 — (L 1706) G(ed) -संयुतम् (for संमि°) — (L 1707) M1 विष्णु- (for रुद्र) — (L 1708) D1 आयसं तु ; G(ed) मृण्मयं च (for अयस्कान्तं) — (L 1710) D1 पादुकां, G1 M1 चन्दनं (for च तथा) — (L 1712) G(ed.) आषाढ्यां (for °ढे) — (L 1714) G1 M1 -रूपकः (for °भाक्). — (L 1715) G1 कुलं सप्तत्रिंशैर्युक्तो (for °) M1 विष्णुना (for रुद्रेण) — (L 1718) G(ed) तपस्था (for ब्रह्मस्था). — (L 1719) M1 लिङ्गाङ्कितं (for लिङ्गाङ्कितं). — (L 1721) G(ed.) ब्रजत्यसौ (for व्रजेद् ध्रुवम्) — (L 1722) G(ed) वृषभं च (for अनड्वाहं) — (L 1723) G(ed) काले (for भावे). G1 दोत्सृजेद् (for उ°) — For line 1723, D1 subst..

सर्वान्वशान्समुद्धृत्य मम सालोक्यमश्नुते ॥
ददाति च भुवृत्ताय महिषीं च पयस्विनीम् ।
अपमृत्यु जयत्येव यमेन सह मोदते ॥
दर्शे प्रसूतिका गा च महिषीं च नृपोत्तम ।
अपमृत्यु दरिद्राय दत्त्वा तीर्त्वा दिव व्रजत ॥
ताम्बूल नित्यशो राजन्यो दद्याद्ब्राह्मणाय च ।
तस्याह च कुरुश्रेष्ठ ददामि श्रीयुत पदम् ।
अष्टैश्वर्य भवेदत्र ताम्बूलात्कुरुनन्दन ॥
क्षीरदान शिशुना तु स्वर्गलोकप्रद ध्रुवम् ।
शूलादिरोगयुक्ताय ब्राह्मणाय ददाति य ॥
क्षीरोदस्योत्तरे वारे पिबति क्षीरमुत्तमम् ।
मधूनि दधितक्राणि घृतानि च नृपोत्तम ।
यो दद्याद्ब्राह्मणेभ्यस्तु तस्य नो मृत्युतो भयम् ॥
इक्षुदण्ड गुड क्षीर ब्राह्मणाय प्रयच्छति ।
पथि श्रान्ताय यो दद्यात्सतत मयि तत्पर ॥
सर्वलोकप्रभुश्चैव सर्वयज्ञेषु दीक्षित ।
सर्वदानफल तस्य सर्वलोक च शाश्वतम् ॥
नाल्किकेरफल दद्याच्चैत्रवैशाखमासयो ।
कौबेर लोकमाप्नोति यमेन परिपूजित ॥
युगाना त्रिदश स्थित्वा तत कैलासमेति च ।
तत्र पञ्चयुग स्थित्वा ब्रह्मलोके महीयते ॥
शर्करारससयुक्त नाळिकेर ददाति य ।
तस्य पार्श्वे प्रसन्नोऽह देवास्तस्य वशानुगा ॥
एलाल्वङ्गकर्पूरमिश्रित शीतल जलम् ।
ददन्मार्गे सुधा पीत्वा मम लोक स गच्छति ॥
मार्गशीर्षे महाराज मरीचि लवण ददन् ।
सर्वपापविनिर्मुक्तो भजेद्रुद्रस्य मन्दिरम् ॥
इन्धन कम्बल वस्त्रमुपानत्कुङ्कुम घृतम् ।
मित्रलोकमवाप्नोति सर्वसिद्धनिषेवित ॥
ज्येष्ठे तु सर्वबीजानि कृषिकर्मप्रदश्चरेत् ।
ब्राह्मणाना सहायार्थं धनैरपि च कर्मणा ।
कुरुते य सदा भक्त्या तस्य पुण्यफल शृणु ॥
मातृत पितृतश्चैव दशकोटिकुलान्वित ।
गन्धर्वै स्तूयमानस्तु मम लोक स गच्छति ॥
सुशीलो ब्राह्मणो भक्त स च मे सतत प्रिय ।
तेन पूतमिद सर्वं जगत्स्थावरजङ्गमम् ॥

> घ्नन्त शपन्त परुष वदन्त
>     यो ब्राह्मण न प्रणमेद्यथार्हम् ।
> स पापकृद्ब्रह्मदवाग्निदग्धो
>     दण्ड्यश्च वध्यश्च न चास्मदीय ॥
> प्रियो यथा ब्राह्मणपुगवो मे
>     तथा न लक्ष्मी स्वपुरं महात्मन् ।
> त्रिविष्टपे ब्रह्मपुरे वसेत्स
>     त्वया हि पूज्यो गुरुदेवतात्मा ॥

तस्मात्त्वमपि राजेन्द्र ब्रह्मभक्त सदा भव ।
तस्मिंस्तुष्टे धरा सर्वा फलत्येव न सशय ॥
एवमाद्या महाभाग धर्मा बहुविधा नृप ।
तत्र सार प्रवक्ष्यामि धर्मं तव हिताय च ॥
मयि भक्तिर्यदि भवेदन्तकाले नृपोत्तम ।
अनन्तफलद प्रेत्य तद्दान सात्त्विक भवेत् ॥
इद रहस्यमाधुर्य य शृणोति सदा नर ।
सर्वदानफल तस्य सर्वपापक्षयो भवेत् ॥

Colophon

वैशपायन उवाच ।

श्रुत्वैव धर्मसवाद धर्मपुत्रो यदूत्तमात् ।

---

107** य उत्सृजेदाद्धकेपि तस्य पुण्यफल शृणु ।
— (L. 1725) G2 मम लोक स गच्छति (for $^b$) — D1 om (hapl.) lines 1729–1736 — (L. 1729) G1 दरिद्राच, G2 G(ed.) °द्रे च (for °द्राय) — (1732) M1 G(ed.) अर्थे अर्थ (for °ष्टै°) — (L. 1738) D1 G2 M1 G(ed.) इक्षुक्षीर गुड (M1 घृत) दण्ड (for $^a$) G(ed.) महामने (for प्रयच्छति) — (L. 1741) M1 सर्वलोकश्च शाश्वत (for $^b$) — (L. 1745) M1 पञ्चशत (for °युग) — (L. 1746) M1 मधु (for रस) — (L. 1747) D1 देवस्तस्य च किंकर (for $^b$) — (L. 1748) G2 सयुत (for मिश्रित) — (L. 1750) G(ed.) तथा माघ (for महाराज) — (L. 1751) G2 रुद्रस्य, M1 विष्णोश्च (for रुद्रस्य) D1 सनिधिम् (for मन्दिरम्) — (L. 1752) G1 रत्न, G(ed.) चित्र (for वस्त्र) D1 G2 कञ्चुक (for कुङ्कुम) — (L. 1753) M1 निषेवितम् (for °त) D1 मित्र सिद्धनिषेवितम् (for $^b$) — After line 1753, D1 M1 ins.

108** पुष्ये माघे ददन्तैलसर्वेषा निवसा भजेत् ।
[ M1 पुष्यमासे ददत्तैल (for $^a$) ]

While G(ed.) ins. after line 1553

109** पुष्यमासे ददत्तैल सर्वगात्रेषु भजेत् ।
— (L. 1755) G1 G(ed.) ब्राह्मणस्य (G1 °णे -य) सहायार्थं (for $^a$) — (L. 1759) D1 तस्याह स च मत्प्रिय G1 मम देहश्च स प्रिय, M1 तस्य मेऽहं स च प्रिय, G(ed.) परब्रह्मस्वरूपित (for $^b$) — (L. 1763) G1 2 मध्ये (for दग्धो) — (L. 1764) D1 G1 2 G(ed.) दण्डश्च (for दण्ड्यश्च) — (L. 1765) G2 पुगवन (for °वो मे) — (L. 1766) M1 च लक्ष्मा (for न लक्ष्मी) D1 यथा च लक्ष्मी स्वपुर यथात्मन्, G2 मेधा च लक्ष्मा स्वपुर महात्मन — (L. 1770) G(ed.) सर्वधर्मा फलन्ति (for धरा सर्वा फलन्ति) — (L. 1771) D1 G2 महाभागा, G1 °राज (for °भाग) G(ed.) बहुगुणा (for °विधा) — Before line 1775 D1 G(ed.) ins. वैशंपायन

COLOPHON — *Sub-parvan* D1 G1 आनुशासनिके, D1 G1 2 M1 G(ed.) वैष्णवे — *Adhy. name* G1 दानधर्म, G(ed.) नानादानप्रशंसा — *Adhy. no.* D1 G1 2 M1 G(ed.) 14

पप्रच्छ तं नमस्कृत्य धर्मं तत्र पितामह ॥
युधिष्ठिर उवाच ।
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥
यानि मङ्गलपुष्पाणि फलानि रसवन्ति च ।
साळग्रामशिलादाने लिङ्गदाने च यत्फलम् ॥
पुष्पदानानि चित्राणि स्फटिकादीनि वृष्णिप ।
एषां दानेषु यत्पुण्य तन्ममाचक्ष्व विश्वधृक् ॥
श्रीभगवानुवाच ।
माघमासं पुरस्कृत्य प्रपां कृत्वा सुशोभनाम् ।
सर्वेषामेव दानानां श्रेष्ठं पानीयमुत्तमम् ।
यो ददाति दयायुक्तस्तस्य पुण्यं वदामि ते ॥
इहलोके चिरं भुक्त्वा सर्वैश्वर्यसमन्वित ।
ब्रह्मलोकमवाप्नोति सत्य सत्य मयोदितम् ॥
चतुष्पथे महामार्गे शालां कृत्वा सुशोभनाम् ।
पानीयं च यवागूं च कृष्णधान्यमयीमपि ।
पथि श्रान्ताय यो दद्यात्तस्य पुण्यं वदामि ते ॥
शिबिकायानमारोप्य देवदूता प्रियंवदा ।
व्यजनानि प्रधून्वन्तो विशन्ति च सुरालयम् ॥
विमाने सूर्यसंकाशे समारोप्य ममाज्ञया ।
प्रविशन्ति च तं लोके ततस्तु ब्रह्मण पदम् ॥
तत्र कोटियुगं स्थित्वा द्विकोटिकुलसंयुत ।
मम लोकमवाप्नोति तत्रैव परिमुच्यते ॥
कस्तूरीकर्पूरयुतं श्रीगन्धं तु द्विजातये ।
यो ददाति नरश्रेष्ठ सोमलोके सुखी भवेत् ॥
कपित्थको दिव्यानि कौबेर पनसप्रद ।
चूतजम्बूफल दत्त्वा सूर्यलोके महीयते ॥
शर्करामधुरायुक्त पक्व रम्भाफलं नर ।
यो ददाति द्विजेभ्यस्तु सुरलोके सुखी भवेत् ॥
अपूपभक्ष्यभोज्यानि ब्रह्मविप्राय भक्तिमान् ।
भुवर्लोकमवाप्नोति यावदाचन्द्रतारकम् ॥
वारुणं लोकमाप्नोति महेश लवणप्रद ॥
रूक्षद्रव्यप्रदानेन तिर्यग्योनिमसुद्रकान् ।
कृष्णधान्यं यवव्रीहीन्गन्धर्वं पिप्पलादिकम् ।
एतेषां तु प्रदानेन ब्रह्मलोकं प्रयाति वै ॥
शाकमूलप्रदातॄणां तथा भोजनपात्रकान् ।
सुरलोकं स्थिरं स्थानमम भक्तिपरो यदि ॥
मल्लिकाजातिपुष्पाणि केतकीचम्पकानि च ।
ददामि विष्णव युक्त्या यो ददाति द्विजातये ।
तस्य चैवानिशं पार्थ योगक्षेमं वहाम्यहम् ॥
साळग्रामशिलादाने ह्येतेषां तु फलं भवेत् ॥
साळग्रामशिलादानं यो ददाति कुरूद्वह ।
तस्य पुण्यफलं चित्रं सावधानमना शृणु ॥
चतु सागरपर्यन्तां सशैलवनकाननाम् ।
दत्त्वा यत्फलमाप्नोति साळग्रामात्तदश्नुते ॥
साळग्रामशिलायास्तु मम चक्रं प्रशस्यते ।
तद्दानं ये प्रयच्छन्ति मत्प्रियान्विद्धि तान्प्रभो ॥
साळग्रामशिला यत्र तत्तीर्थं तत्तपोवनम् ।
तत्रैव मुनि वास्यन्ति मदर्चनपरायणा ॥
साळग्रामशिलादानमतिदानं प्रकीर्तितम् ।
सर्वेषामेव दानानामुत्तमं तत्प्रचक्षते ॥
साळग्रामं तथा लिङ्ग यो ददात कुरूद्वह ।
मम लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
ब्रह्माण्डकोटिदानेन यत्फलं भवति प्रभो ।
तत्फलं समवाप्नोति शिवलिङ्गप्रदानत ॥
यो ददाति नरो दीपं साळग्रामस्य संनिधौ ।

( L 1778 ) G2 धमरूप महामति ( for ᵇ ) —( L. 1781 ) G1 2 विविधानि ( for रसवन्ति ) —( L. 1783 ) D1 कुल्लाणि, M1 च विभो ( for चित्राणि ) D1 सुप्रसिद्धानि वृष्णिप ( for ᵇ ) —( L. 1784 ) M1 G(ed ) दाने च ( for दानेषु ) M1 विश्वसृट् ( for °धृक् ) D1 तन्निहाचक्ष्व विश्वसृट् ( for ᵇ ) — D1 om. ( hapl ) lines 1786 1790 —( L 1786 ) G1 °ति, G(ed ) स्थिरं ( for इति ) —( L 1788 ) G2 स्थिर स्थित्वा, M1 चिरं स्थित्वा ( for चिरं भुक्त्वा ) —( L 1789 ) G2 वदाम्यहम् ( for मयोदितम् ) —( L 1790 ) G2 महाभाग ( for °मार्गे ) —( L 1793 ) D1 M1 शिबिकायां तमारोप्य ( for ᵃ ) —( L 1794 ) D1 M1 प्रधुन्वन्ति ( for °न्तो ) —( L 1795 ) G1 2 G(ed ) यमाज्ञया ( for म° ) —( L 1796 ) G2 M1 प्रयान्ति ( for प्रविशन्ति ) D1 च लोकेषु, G1 च त लोके, G(ed ) वसोर्लोके ( for च त लोके ) —( L. 1798 ) D1 तत्रैव सुखमश्नुते ( for ᵇ ) — For line 1799, G(ed.) subst.

110** कर्पूरागरुकस्तूरीयुत गन्धं द्विजातये ।

—( L 1800 ) M1 महीयते ( for सुखी भवेत् ) —G(ed ) om lines 1801-1802 —( L. 1803 ) G1 M1 शर्करामधुसंयुक्तं ( for ᵃ ) D1 रम्भापक्वफलं नृप ( for ᵇ ) —For line 1804, G1 subst

111** यो ददाति भूसुरेभ्यस्तु सुरलोके महीयते ।

—( L. 1806 ) G1 2 मम ( for भुव ) —( L 1808 ) G(ed ) रूक्षद्रव्यं प्रदत्त्वा च ( for ᵃ ) —( L. 1809 ) G1 G(ed ) यवान् ( for यव ) G2 व्रीहिं ( for व्रीहीन् ) D1 कटुकं, G(ed.) द्वादक ( for गन्धर्वं ) —( L 1810 ) G(ed ) एतदादि ( for एतेषां तु ) —( L. 1811 ) G1 फलादीनां, G2 प्रदातॄणां, G(ed ) प्रदाता च ( for °तॄणां ) D1 पात्रकम्, G(ed ) °द ( for °कान् ) —( L. 1812 ) D1 °लोकस्थितो; M1 °लोकं स्थिर ) G(ed ) सुरलोके स्थितिस्तस्य ( for ᵃ ) — D1 om line 1816 —( L. 1818 ) D1 M1 मति ( for मना ) —( L 1820 ) G(ed ) दत्त्वा भूमिमाप्नोति (sic) ( for ᵃ ) —D1 om lines 1821-1836 —( L 1821 ) G(ed ) शिलायां तु, M1 शिलाचक्रं ( for °यास्तु ) M1 अर्चनं तु ( for मम चक्रं ) G1 प्रदृश्यते ( for प्रशस्यते ) —( L. 1827 ) D1 साळग्राम°

योगसिद्धिर्भवेत्तस्य शर्म च भुवि दुर्लभम् ॥
महतां च यतीनां च मठे दीपप्रदायकः ।
गङ्गास्नानफलं तस्य दिनैकैकेन सम्भवेत् ॥
रत्नान्वितसुवर्णस्य प्रदानेन नृपोत्तम ।
परं मोक्षमवाप्नोति महादानं यतः स्मृतम् ॥
पद्मरागमणिक्यरत्नं यो ददाति नृपसत्तम ।
मम लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
वैडूर्यविद्रुमान्राजन्ब्राह्मणाय ददाति यः ।
रुद्रलोकमवाप्नोति पुष्परागप्रदश्च यः ॥
गोमेदरत्नप्रदानेन स्थलकारप्रदश्च यः ।
सर्वत्र सुलभो लोके सर्वत्र सुखमश्नुते ॥
गवां तृणप्रदानेन सेवया भरतर्षभ ।
रुद्रलोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
स्वधर्माचारनिरताः सद्धर्मेषु सदोद्यताः ।
सदाम्भिका गतासूया प्रयान्ति सुरमन्दिरम् ॥
परोपदेशनिरता वीतरागा विमत्सराः ।
मम पादार्चनरताः प्रयान्ति ब्रह्मणः पदम् ॥
सत्सङ्गाह्लादनिरताः सर्वभूतहिते रताः ।
परापवादविमुखाः प्रयान्ति ब्रह्मणः पदम् ॥
नित्यं हितकरो यस्तु ब्राह्मणेषु च गोषु च ।
परस्त्रीसङ्गविमुखो न पश्यति यमालयम् ॥
सत्यवादी तथा मौनी मृदुभाषी क्षमारतः ।
परापवादविमुखाः प्रयान्ति ब्रह्मणः पदम् ॥
अग्निशुश्रूषयैव गुरुशुश्रूषयैव तथा ।
यतिशुश्रूषयैव न यान्ति यमयातनाम् ॥
अनाथं विप्रकुणपं यो वहेद्नृपसत्तम ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति पुष्कलम् ॥
पूजया रहितं विष्णुं लिङ्गं वा पूजयेत्तु यः ।
ब्रह्मलोके सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ॥
देवतायतने यस्तु समार्जनपरो भवेत् ।
पांसवस्तस्य पापानि नाशयन्ति न संशयः ॥
जलेन गोमयेनापि सेचनं देवतागृहे ।
करोति यः सदा भक्त्या सर्वपापैः प्रमुच्यते ॥
गन्धोदकेन धूपेन कर्पूरसहितेन च ।
धूपसेचनकृन्मर्त्यो गच्छेच्च मम मन्दिरम् ॥
प्रदक्षिणनमस्कारं काले काले करोति यः ।
सर्वपापविशुद्धात्मा वाजपेयफलं लभेत् ॥
राजन्प्रदक्षिणैकेन सर्वपापं व्यपोहति ।
द्वितीयेन दिवं याति तृतीयेनेन्द्रसत्पदम् ॥
चतुर्भिर्मम लोकं स्यात्पञ्चमे सर्वलोकभाक् ।
षष्ठे तु महदैश्वर्यं सप्तमे मम किंकरः ॥
अष्टमे मम सालोक्यं सामीप्यं नवमे नृप ।
सारूप्यं दशमे विद्धि सद्गमेकादशे तथा ॥
सायुज्यं द्वादशे विद्धि सायुज्यादपरो न च ॥
सहस्रप्रदक्षिणेनैव सर्वपापप्रणाशनम् ।
स्वरदोषं व्याधिपीडा च न च मृत्योर्भयं पुनः ॥
शिवप्रदक्षिणे मर्त्यः सोमसूत्रं न लङ्घयेत् ।
लङ्घने त्वेकमेकं स्यादलङ्घ्ये ह्ययुतत्रयम् ॥
रुद्रसूक्तं यो विप्रः प्रभाते स्नानतत्परः ।
अभिषेकपरो रुद्रे शिवसालोक्यमश्नुते ॥
वामदेवादिमन्त्रेण तथा त्र्यम्बकेन च ।
अभिषेकनमस्काराच्छिवसालोक्यतां व्रजेत् ।
एककालं द्विकालं वा त्रिकालं वापि नित्यशः ।
शिवदर्शनमात्रेण पातकैः परिमुच्यते ॥
वृषस्य वृषणं स्पृष्ट्वा शृङ्गमध्ये पिनाकिनम् ।
दृष्टमात्रे नरो याति कैलासे शिवसंनिधिम् ॥

---

शिलाचक्र (for °) —(L 1829) D1 ब्रह्माण्ड (for °ण्ड) —(L 1830) D1 शालग्राम (for शिवलिङ्ग) —(L 1834) D1 मम (for फल) G1 M1 G(ed) तद्भवेत् (for सभ°) D1 फलमाप्नु सम्भवेत् (for °) —(L 1835) G2 रत्नयुति (for रत्नान्वित) —(L 1837) D1 G(ed) रत्नानि (for रत्नं यो) D1 G1 M1 G(ed) यो ददाति नृपोत्तम (for °) — For line 1838, D1 G2 subst

112** परं मोक्षमवाप्नोति महादानं तु तत्स्मृतम् ।

—(L 1840) G2 G(ed) ब्रह्म (for रुद्र-) M1 पुनरावृत्तिवर्जितम् (for °) —M1 om lines 1841–1842 G(ed) om line 1841 —(L 1842) G(ed) सर्वलोकमवाप्नोति (for °) —(L 1845) G(ed) स्वधर्मेषु सदा रताः (for °) —(L 1846) G2 G(ed) मम (for सुर) —(L 1848) G2 G(ed) प्रयान्ति मम मन्दिरम् (for °) —(L 1849) D1 सत्सङ्गेषु निरताः, M1 सत्सङ्गाभ्यासाति° (for °) —(L 1851) G1 नित्यं हितकरा ये तु (for °) —(L 1852) G2 M1 विमुखा (for °खो) D1 प्रयाति ब्रह्मणः पदम् (for °) — G2 G(ed) om lines 1853 1854 —(L 1853) D1 M1 भाषी (for -वादी) M1 क्षमान्वित (for °रत) — For line 1854, D1 M1 subst

113** मनसा योगयुक्ताश्च न पश्यन्ति यमालयम् ।

—(L 1857) D1 वहेत् (for वहेत्) —(L 1859) G1 च हितं (for रहितं) G(ed) शिवं (for लिङ्गं) —(L 1860) D1 G2 चिरं भुक्त्वा, G(ed) सुखी भूत्वा (for सुखं भुक्त्वा) G1 अवाप्नुयात् (for °मुयात्) —(L 1870) M1 G(ed) याति (for यान्ति) —(L 1871) G(ed) चतुर्भिर्ब्रह्मणो लोकं (for °) G(ed) पञ्चभिः (for °मे) — G2 om lines 1872–1874 D1 om line 1874 —(L 1874) M1 सम च (for सद्गम्) —(L 1875) D1 om line 1875° D1 अपरेण, G1 अपरं न, G(ed) अपरं न (for अपरो न) —(L 1876) G(ed) सर्वपापं प्रणश्यति (for °) —(L 1877) D1 स्वरदोषव्याधिपीडाभ्यो (for °) —(L 1878) M1 मुक्त (for मर्त्य) —(L 1779) G1 G(ed) अलङ्घ्यम् (for °ङ्घ्ये) —(L 1883) G1 नमस्कारैः (for °रात्) G2 G(ed) शिव

मृदङ्गगीतवाद्यैश्च घण्टाकाहळशङ्खकैः ।
देव मां सेवयेद्यस्तु स मुक्तो नात्र संशयः ॥
समानयित्वा प्रथमं गोमयेन तु लेपयेत् ।
तस्य पुण्यफलं चित्रं शृणु वक्ष्यामि सुव्रत ॥
सर्वयज्ञफलं प्राप्य सर्वलोकान्विजित्य च ।
कोटिवर्षसमायुक्तो मम लोकं स गच्छति ॥
देवतायतने यस्तु ध्वजस्तम्भं प्रकल्पयेत् ।
तेन पुण्यप्रभावेन ध्वजी राजा भवेद्ध्रुवम् ॥
अखण्डदीपं यः कुर्यान्मम रुद्रस्य संनिधौ ।
दिने दिनेऽश्वमेधस्य प्राप्नोत्यविकलं फलम् ॥
एवमाद्या महाभाग धर्मा बहुविधा नृप ।
यस्मिन्धर्मे यस्य रुचिस्तेनैव सुखमश्नुते ॥
एतेषां धर्मकरणे प्रीतिरस्ति तवापि चेत् ।
कुरुष्व नृपशार्दूल परं श्रेयो गमिष्यसि ॥
धर्मादर्थश्च कामश्च मोक्षश्च भरतर्षभ ।
तस्मान्मयि सदा भक्तिं कुरुष्व च ददस्व च ॥
युधिष्ठिर त्वं भुवनस्य गोप्ता
गन्ता पुरं सर्वमहीपतीनाम् ।
शृणुष्व चित्रं पुनरेव वक्ष्ये
धर्मस्वरूपं परिपालनाय ॥

वैशंपायन उवाच ।

य इदं पुण्यमाख्यानं शृणोति सततं नरः ।
तस्य धर्मे स्थिरा बुद्धिर्जायते कुरुनन्दन ॥

Colophon

वैशंपायन उवाच ।

एवमुक्तस्तु कृष्णेन धर्मपुत्रो महामतिः ।
पुनरेव शुभं वाक्यं जगन्नाथमुवाच ह ॥
अणोरणीयांसमजं पुराणं
ब्रह्माणमीशं च विशां पतीनाम् ।
भक्तप्रियं त्वां यदुनाथमीड्यं
नमामि विश्वेश्वर शेषशायिन् ॥
दिनोदितानि कर्माणि वक्तुमर्हसि मे प्रभो ।
त्वत्पादकमलादन्यद्गतिर्मम न विद्यते ॥

श्रीभगवानुवाच ।

शृणु पार्थ महाभाग सर्वधर्मार्थकोविद ।
धर्मसारं प्रवक्ष्यामि पुनरेव महामते ॥
प्रातःकाले समुत्थाय धर्मकीर्तनतत्परः ।
स्नानं करोति राजेन्द्र स गच्छेद्वै सुरालयम् ॥
याम्यं तु नरकं घोरं नित्यस्नायी न पश्यति ।
नित्यस्नानेन शुद्धात्मा प्रयाति सुरमन्दिरम् ॥
प्रातःस्नानं हरेन्नृप सबाह्याभ्यन्तरं मलम् ।
मध्याह्ने वापि राजेन्द्र यो गच्छेत्सुरमन्दिरम् ॥
स्नानाद्विना तु यो भुङ्क्ते स मलाशी न संशयः ।
तस्मात्स्नात्वा तु योऽश्नीयात्स भृत्यो मम उच्यते ॥
स्नात्वा देवानृषींश्चैव पितॄनपि च तर्पयेत् ।
दिव्यनामानि मे जप्त्वा मुच्यते सर्वपातकैः ॥
धौतवस्त्रो नरश्रेष्ठ शुचिर्मौनी समाहितः ।
अर्घ्यं दत्त्वा च मां ध्यायन्पूज्यते च सदामरैः ॥
यदर्घ्यं यो नमस्कारो या पूजा क्रियते विभो ।
यज्जप्यं या स्तुतिर्भानोस्तन्मामेव प्रपद्यते ॥
समाधानमतिर्यस्तु जपं कुर्यात्कुरूद्वह ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
अष्टोत्तरशतं यस्तु गायत्रीं वेदमातरम् ।
जपेत्प्रयत्नतो यस्तु तस्य पुण्यफलं शृणु ॥
दिने दिने च यत्किंचिज्ज्ञानाज्ञानकृतं च यत् ।
तत्सर्वं विलयं याति पातकं पापवर्जित ॥
अष्टोत्तरसहस्रं यो गायत्रीं लोकवन्दिताम् ।
जपेत्तस्य फलं वक्ष्ये शृणु नान्यमना प्रभो ॥
षण्मासात्सर्वपापेभ्यो मुच्यते नात्र संशयः ।
संवत्सरजपाद्राजन्सर्वान्कामान्समश्नुते ॥
अपत्यधनरत्नानि पशुक्षेत्रं च भारत ।
जपमानो लभेद्विद्वान्गायत्र्यास्तु प्रभावतः ॥
सत्कर्मणां जपानां तु स्नानं मूलं हि पाण्डव ।
प्रभाते स्नानशीलानां नास्ति नास्ति महद्भयम् ।
तस्मात्स्नात्वा तु कौन्तेय सर्वान्धर्मांस्ततः कुरु ॥

---

सालोक्यमश्नुते ( for ° ) — ( L. 1885 ) G(ed.) -कृन्मर्त्यं ( for मात्रेण ) — ( L. 1887 ) $G_1$ कृष्णाश्रे, G(ed.) °क्षणात् ( for °मात्रे ) — ( L. 1888 ) $G_2$ शङ्खकाहलघण्टकैः ( for ° ) — ( L. 1889 ) $D_1$ त्रिदमासेवयेद्यस्तु ( for ° ) — ( L. 1895 ) $G_2$ ध्वज राजो, $M_1$ महाराजो ( for ध्वजी राजा ) — ( L. 1896 ) $G_2$ $M_1$ आत्यन्तीपं तु य कुर्यात् ( for ° ) — ( L. 1901 ) $G_1$ नर ( for नृप ) — ( L. 1902 ) $G_1$ G(ed.) धर्मश्चार्थश्च ( for धर्माद° ) — ( L. 1903 ) G(ed.) भवेत् ( for तस्मात् ) $D_1$ $G_2$ धर्मे ( for मयि ) — ( L. 1907 ) $M_1$ पशु, G(ed.) द्विज ( for परि ) $G_1$ धर्मस्य रूपं नगरस्थितेन — $D_1$ om. lines 1908–1909

COLOPHON — Sub-parvan: आश्वमेधिकपर्वणि वैष्णवधर्मे, $G_2$ $M_1$ G(ed.) वैष्णवधर्मे — Adhy. name: G(ed.) सर्वधर्मप्रशंसा — Adhy. no.: $D_1$ $G_{1, 2}$ $M_1$ G(ed.) 15

( L. 1910 ) $G_1$ महाद्युतिः, $G_2$ युधिष्ठिर ( for महामतिः ) — ( L. 1911 ) अभाषत ( for उवाच ह ) — Before line 1912, $D_1$ ins. युधिष्ठिर — ( L. 1917 ) $D_1$ सन्ध्या ( for स यत् ). — ( L. 1920 ) $M_1$ G(ed.) मम ( for धर्म° ) — ( L. 1922 ) $G_{1, 2}$ प्रातःस्नायी ( for नित्य° ) — $G_1$ om. lines 1924–1925 — ( L. 1925 ) G(ed.) स याति ( for यो गच्छेत् ) — ( L. 1927 ) G(ed.) स तु भुङ्क्ते समाश्नुते ( for ° ) — ( L. 1933 ) $M_1$ यत् ( for या ) $G_2$ जप्यं या च स्तुतिर्विष्णोः ( for ° ) — ( L. 1934 ) $G_2$ समाहित ( for °न ) — ( L. 1936 ) $D_1$ जपन्ति ( for यस्तु ) — ( L. 1937 ) G(ed.) नित्य ( for यस्तु ) — ( L. 1944 ) $G_1$ बहु ( for पशु ) G(ed.) वह्नि

युधिष्ठिर उवाच ।
देवदेव जगन्नाथ यदूनां कुलवर्धन ।
कांल्लोकान्समवाप्नोति गायत्र्यास्तु प्रभावत ॥
तत्सर्वं च भवान्वेत्ति त्वदधीनो महामते ।
कृपया वद सर्वज्ञ लोकनाथ नमोऽस्तु ते ॥
श्रीभगवानुवाच ।
गायत्र्यास्तु सम किंचित्त्रिषु लोकेषु नो नृप ॥
गायत्री मोक्षदा ज्ञेया गायत्री पापनाशिनी ।
स्वर्गलोकप्रदा देवी ब्रह्मलोकप्रदायिनी ॥
रुद्रलोकप्रदा सैव सूर्यलोकप्रदा तु सा ।
ध्रुवलोकप्रदा देवी चन्द्रलोकप्रदा तु सा ।
मम लोकं च कौन्तेय गायत्री संप्रयच्छति ॥
स स्नात सर्वतीर्थेषु सर्वयज्ञेषु दीक्षित ।
गायत्री सेव्यते येन तस्य तेनार्जितं तप ॥
गायत्रीं भजते यस्तु तन्मना हि महीपते ।
गन्धर्वैः स्तूयमानस्तु मम लोकं स गच्छति ॥
ब्रह्मयज्ञफल वक्ष्ये शृणु सोमकुलोद्भव ।
ब्रह्मयज्ञ तु य कुर्याद्ब्राह्मणो रूपमव्ययम् ।
मम सालोक्यमाप्नोति सत्य सत्य मयोदितम् ॥
प्रणव व्याहृतिं चोक्त्वा गायत्रीं वेदमारभम् ।
पाद पाद जप कुर्यात्ततो वेद यथाक्रमम् ॥
इद तु मन्मत राजन्मत्प्रिय कुरु पाण्डव ।
यज्ज्ञात्वा सर्वपापेभ्यो मुच्यते नात्र सशय ॥
ब्रह्मयज्ञमिद श्रौत य करोति स मुक्तिभाक् ।
ब्रह्मयज्ञात्तपोवृद्धिर्ब्रह्मतेज प्रवर्धते ॥
यशो बल च कौन्तेय धर्मवृद्धि प्रजायते ।
कुरुते यदि पापानि ह्यवधूय दिव व्रजेत् ॥
वैश्वदेव तत पश्चादाह्निककर्म विधानत ।
क्रियते येन राजेन्द्र नित्य तेन त्रिविष्टपम् ॥
बलिकर्म प्रकुर्वन्ति चक्राकार द्विजोत्तमा ।
ते सर्वे चक्रिणो भूत्वा प्रयान्ति मम मन्दिरम् ॥
राज्यकामो ध्वजाकार पुत्रार्थी शूर्पवत्सुप ।
चक्राकार तु भोगार्थी वल्मीक बहुपुत्रवान् ॥
चक्राकारप्रदातृणामेतेषा फलदो ह्यहम् ।
एव चतुर्विध ज्ञेय बलिकर्म नृपोत्तम ॥
तुर्यं तव हित ज्ञेय चक्राकार नृपोत्तम ।
मोक्ष संप्रापयत्याशु कामाश्च विविधास्तथा ॥
मा ध्यायन्भोजने काले मौनी सस्तुतवाग्द्विज ।
कुरुते भोजन यस्तु अमृतं च स गच्छति ।
द्वात्रिंशत्कवल यस्तु भोजन कुरुते द्विज ।
सुरलोकमवाप्नोति गन्धर्वैरुपसेवित ॥
मिताहारो भवेद्यस्तु नीरजो गतकल्मष ।
पुण्यलोकमवाप्नोति पूजितो दिवि दैवतै ॥
पश्चिमा तु तथा सध्या सादित्या प्रार्थयेत्तु य ।
भानौ ह्यनुदिते पूर्वा स गच्छेत्सूर्यसंनिधिम् ॥
देवानृषींस्तु सतर्प्य रवौ मध्याह्नमागते ।
नमस्कार प्रकुर्वीत ततोऽर्घ्य सवितु कुरु ॥
यद्येव कुरुते नित्य स मुक्तो नात्र सशय ॥
काले काले तु य कुर्याद्देवतापूजन गृहे ।
पुरुषसूक्तविधानेन स मुक्तो नात्र सशय ॥
गृहार्चना गृहस्थस्य सर्वपापप्रणाशिनी ।
मन्मूर्ति सर्वदा पूज्या ससार तर्तुमिच्छता ॥

---

क्षत्र च भारतानाम् ( for [1] ) — For line 1945 G1 subst

114** जप्यमाने भवेद्विद्वान् गायत्रीया (sic) प्रभावत ।

— G2 वैशपायन ( for युधिष्ठिर ) — ( L 1949 ) D1 कुलनन्दन, G1 कीर्तिवर्धन, M1 कुल° ( for कुर° ) — ( L 1951 ) G(ed) मदधीन ( for °नो ) — ( L 1956 ) D1 देवी ( for सैव ) D1 G2 प्रदायिनी ( for प्रदा तु सा ) — G2 om line 1957 — ( L 1958 ) G(ed) ध्रुव ( for मम ) G2 द्विजाना ( for गायत्री ) — ( L 1961 ) D1 जपते ( for भजते ) — ( L 1963 ) D1 कुलोत्तम ( for °द्भव ) — ( L 1964 ) D1 ब्रह्मणो लोकमुत्तमम् ( for [1] ) — ( L 1965 ) G1 G(ed) मम लोकमवाप्नोति ( for [2] ) — ( L 1968 ) G2 सर्वदा ( for पाण्डव ) — ( L 1970 ) D1 मुक्तिमान्, G2 M1 मुक्तवान् ( for मुक्तिभाक् ) — ( L 1973 ) G(ed) ह्यवधूय ( for ह्य° ) — After line 1973 D1 ins

115** सध्या माध्याह्निकीं कुर्याद् ब्रह्मयज्ञमत ।
समभ्यर्च्य तथा देव मा क्षीरोदनिवासिनम् ।
पौरुषेण तु सूक्तेन षोडशैरुपचारकै ॥
धूप दीपादिनैवेद्यैर्धूपपुष्पाञ्जलीनपि ।
समर्प्य देवदेवाय तद्गन्धाश्च विशेषत ॥

— ( L 1975 ) D1 यान् ( for येन ) — G(ed) om lines 1976–1977 — ( L 1978 ) D1 भाग्यार्थी तु ( for राज्यकामो ), — ( L 1979 ) M1 G(ed) रत्नाकार ( for चक्रा° ) D1 भोगार्थी ( for भो° ) D1 वल्मीकान् ( for °क ) G2 वल्मीका बहुपुत्रकान् ( for [2] ) — ( L 1980 ) D1 °कृता नृणाम् ( for °प्रदातृणाम् ) — ( L 1982 ) D1 कार्यं, M1 तुल्य ( for तुर्यं ) M1 G(ed) नरोत्तम ( for नृपो° ) — ( L 1983 ) D1 च, G(ed) त्वं ( for स ) M1 मोक्षस्थान प्रयात्याशु ( for [1] ) — ( L 1984 ) G(ed) सस्तुवाग् ( for सस्तुत° ) D1 मौनी सस्कृतवाक्शुचि, G2 मौनी सस्तुतवाक्र ( for [2] ) — ( L 1986 ) G2 नर ( for द्विज ) — ( L 1987 ) G1 M1 शोभित ( for सेवित ) — After line 1987, D1 ins

116** रागद्वेषादिभयक्रोधातिवरातिवर्जित ।
त्वरया भुङ्क्ते यस्तु स वैवाशौचमेत्यहम् ॥

— ( L 1988 ) G(ed) निरोगो ( for नीरजो ) — ( L 1990 ) G(ed) सावित्री ( for सादित्या ) — ( L 1991 ) G2 अर्ध ( for भानौ ) — ( L 1993 ) D1 [illegible] ( for ततोऽर्घ्य ) — ( L 1995 ) G2 G(ed) प्रातःकाले ( for काले काले ) M1

१ हरिवंश—१०४

य संसारार्णवं मर्तुमुद्योगं कुरुते यदि ।
शृणुयात्स पुराणानि सत्यं सत्यं मयोदितम् ॥
सर्वधर्मान्प्रवक्ष्यन्ति पुराणानि महामते ।
तस्मात्सर्वप्रयत्नेन पुराणेषु मतिं कुरु ॥
वेदव्यासस्तु धर्मात्मा वेदशास्त्रविभागकृत ।
प्रोक्तवान्सर्वशास्त्राणि पुराणे पाण्डुनन्दन ॥
पुरार्जितानि पापानि नाशमायान्ति यस्य वै ।
पुराणश्रवणे बुद्धिस्तस्य पुंस प्रजायते ॥
शृण्वतो वदतश्चैव पुराणं मोक्षदायकम् ।
तस्मात्सर्वप्रयत्नेन श्रोतव्यं जन्मभीरुभि ॥
श्रोतृणां सर्वपापानि पुराणं दहति ध्रुवम् ।
ज्ञानाज्ञानकृतं पापं जन्मान्तरकृतं च यत् ।
पुराणश्रवणादेव तत्क्षणादेव नश्यति ॥
गङ्गादिसर्वतीर्थेषु स्नातानां यत्फलं भवेत् ।
तत्फलं समवाप्नोति पुराणश्रवणान्नृप ॥
य शृणोति पुराणानि प्रभाते तु कुरूद्वह ।
रजन्यां यत्कृतं पापं तत्क्षणादेव नश्यति ॥
क्षपायां मध्यहे नित्यं य शृणोति नृपोत्तम ।
दिवाकृतं तु यत्पापं तत्क्षणादेव नश्यति ॥
य शृणोति पुराणानि नित्यं भक्तिसमन्वित ।
विधूय सर्वपापानि ब्रह्मलोकं स गच्छति ॥
पुराणं शृण्वतां नृणां नास्ति नास्ति महद्भयम् ।
तस्मात्पाण्डव राजेन्द्र पुराणेषु मतिं कुरु ॥
क्षत्रियाणां सुवृत्तानां यथाशस्त्रजीविनाम् ।
यथापराधदण्डानां ब्रह्मलोकं तु शाश्वतम् ॥
गुरुसेवापरो यस्तु ब्रह्मचारी सदा शुचि ।
भैक्षाग्निनिरत क्षान्तो स याति ब्रह्मण पदम् ॥
ऊरजानां सुशीलानां स्वधर्मे सत्यवादिनाम् ।
महता सेवया तात ब्रह्मलोकं तु शाश्वतम् ॥
कृषिमार्गरतानां च चतुर्थानां नृपोत्तम ।
शुश्रूषया पूर्वजानां ब्रह्मलोकस्तु शाश्वत ॥
यज्ञैर्दानैस्तपोभिश्च गृहस्थो ब्रह्मसेवया ।
आतिथेय सत्यवादी शुचिरेति ममाक्षयम् ॥
षोडशमासनिरतो वानप्रस्थाश्रमे रत ।
वेदशास्त्ररतो नित्यं भिक्षाशी मां च गच्छति ॥
त्रिदण्डमेकदण्डं वा सदा काषायचेलवान् ।
सदा प्रणवशीलश्च संन्यासी मां च गच्छति ॥
चराचरात्मकं विष्णुमेकमव्यक्तमक्षरम् ।
ध्यायन्सर्वत्र योगीन्द्र स दु खात्परिमुच्यते ॥
तत्त्वज्ञानं तु यो दद्याद्ब्राह्मणाय ब्रह्मवित्तम ।
स मामेव प्रपद्येत सर्वभूतहिते रत ।
पतिव्रता पतिप्राणा पतिसेवापरायणा ।
प्रियंवदा च कल्याणी नारी गच्छति मत्पदम् ॥
पतिरेव परो बन्धु पतिरेव परो गुरु ।
पतिरेव मम प्राणा यथा संगिरतेति च ।
तया जितो ब्रह्मलोके नात्र कार्या विचारणा ॥
स्त्रीणां पुरुषमुख्यानां द्विजानामग्रजन्मनाम् ।
मनुजानां तु सर्वेषां धर्म एव परा गति ॥
किमत्र बहुनोक्तेन धर्मं कलिमलापहं ।
धर्मं भजस्व सततं पुराणेषु मतिं कुरु ।
पुराणधर्मशास्त्राणां कीर्तनान्नाकमश्नुते ॥
धर्ममार्गरतानां तु श्रोतृणां धर्मसंहिताम् ।
नरकं नास्ति नास्त्येव सत्यमेव मयोदितम् ॥

धर्मस्य कर्ता भुवनस्य गोप्ता
भक्तस्य कर्ता गुरुरप्रमेय ।
मोक्षस्य कर्ता पतिरीश्वराणां
मयान्तरात्मा ह्यहमेक एव ॥
विश्वप्रभुं विश्वसृजं कृतज्ञं
भक्तार्तिहं विश्वतनुं महान्तम् ।
भजस्व नित्यं बहुरूपमार्जं
रर पार्थ मां सर्वजनाभिवन्द्यम् ॥

एवं तु गदितं पार्थ धर्मं धर्मभृतां वर ।
किं ते प्रीतिकरं वच्मि तद्ब्रूहि मम सांप्रतं ॥

वैशंपायन उवाच ।

धर्मसारमिदं राजञ्शृणोति सततं नर ।
स मुक्त सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥

Colophon

---

$D_1$ गूढितम्, $M_1$ -वोदि° ( for नदि° ) —( L 2047 ) G(ed) कौशाम्बेण्डथ वा सुतम् ( for ᵇ ) —( L 2049 ) $D_1$ एव वदेद्धि भो राजन् ( for ᵃ ) —( L 2054 ) $G_2$ शृणुयात्सर्वे शास्त्राणि ( for ᵃ ) —( L 2057 ) $G_2$ G(ed) शास्त्रार्थं ( for °शास्त्रवि ) $G_1$ वेदशास्त्रार्थभाववित् ( for ᵇ ) —( L 2060 ) $G_2$ बुद्धि ( for पुंस ) —( L 2061 ) $G_1$ G(ed) पठता ( for वदता ) $G_2$ साधनम् ( for दायकम् ) $G_1$ पुराणं पापमोचकम् ( for ᵇ ) —( L 2063 ) $G_2$ G(ed) क्षणात् ( for ध्रुवम् ). —( L 2065 ) $G_1$ तत्क्षणेन विनश्यति ( for ᵇ ) — $D_1$ om ( hapl ) lines 2066–2071 —( L 2070 ) $G_2$ कुरूद्वह ( for नृपोत्तम ) —( L 2076 ) $D_1$ यथाशस्त्रोपजीविनाम्, $G_1$ G(ed) यथाशक्तिपरि°, G(ed) यथाशु परि° ( for ᵇ ) —( L 2077 ) G(ed) ब्रह्मलोकस्तु शाश्वत ( for ᵇ ) —( L 2078 ) $G_1$ पूजारतो, $M_1$ सदारतो ( for °परो ) —( L 2079 ) $D_1$ भैक्ष्याग्निनिरतस्त्यागी, $G_1$ G(ed) °ग्निनिरतस्तात, $M_1$ भिक्षाग्निनिरत स्तानि ( for ᵃ ) —( L 2081 ) G(ed) ब्रह्मलोकस्तु शाश्वत ( for ᵇ ) —( L 2085 ) ममान्तिकम् ( for °क्षयम् ) — $D_1$ om ( hapl ) lines 2088–2089 —( L 2088 ) G(ed) त्रिदण्डी चैकदण्डी वा ( for ᵃ ) —( L 2090 ) $G_1$ अक्षयम्; G(ed) अव्ययम् ( for अक्षरम् ) —( L 2095 ) $D_1$ प्रिय वदति कल्याणी ( for ᵃ ) —( L 2097 ) $D_1$ यथा सम्भर्यते सदा, $G_1$ पति स्वर्गं तिरेव च, G(ed) यथा समायतेति च ( for ᵇ ) —( L 2101 ) $G_2$ धर्म कलिमलापहम् ( for ᵇ ) —( L 2105 ) $D_1$ तथ्यम् ( for सत्यम् ) —( L 2110 ) $M_1$ विश्वसज ( for °सृज ).

तदिदं कालसूत्रं च महारौरवरौरवौ ।
क्रन्दन्युगशतं राजन्हा हतोऽस्मि हतोऽस्मि च ॥
निरुच्छ्वासं तत प्राप्य असिपत्रवनं क्रमात् ।
छिद्यमानो महाकायैर्यमदूतैर्भयंकरैः ।
पञ्चाशद्युगपर्यन्तं पच्यते कालसूत्रके ॥
छित्वा शिश्नं सवृषणमञ्जलौ प्रतिगृह्य च ।
तैलयन्त्रैर्वध्यमानो दह्यते यमकिंकरैः ॥
अनुभूय च तान्सर्वान्राक्षसो भवति ध्रुवम् ।
तत परं श्वानयोनौ चण्डालेषु तत परम् ॥
नतोलूकस्ततः काक ततो गर्दभजन्मसु ।
एवं जन्मशतं प्राप्य षण्ढो भवति धर्मज ।
गुरुतल्पगामिनो ह्येवं ततो वक्ष्यामि चेतरान् ॥
ज्येष्ठस्य पत्नीगमने याति वैतरणीं नदीम् ॥
रेतोमूत्रादिपानं च भुक्त्वा युगसहस्रकम् ।
तदन्ते निर्जने देशे भवति ब्रह्मराक्षसः ॥
अध्यापकस्य या पत्नी मातृवत्परिपाल्यते ।
तस्या गमनमत्युग्रं तप्ततैलं महास्वनम् ॥
एतासां गमने राजन्युगानां पञ्चविंशति. ।
जात्यन्धो जायते रोगी निर्वीर्यो व्रणशिश्नक. ॥
अल्पायुरनपत्यश्च दरिद्रो व्याधिकर्शित ।
यौवने हीनजायश्च कृशाङ्गो भवति व्रणी ॥
एवमन्यस्त्रियं गत्वा नरकाननुभूय च ।
भवन्ति नरशार्दूल पुरुषा पुरुषाधमा ॥
रजस्वला स्त्रियं राजन्यो गच्छेत्काममोहित ।
रक्तकूपे निमग्न सन्वसेद्युगशतं प्रभो ॥
किरातशूद्रचण्डालवेणुकानधपादयः ।
एतत्स्त्रीगमने राजन्महाघोरं प्रकीर्तितम् ॥
तथापि शृणु वक्ष्यामि तत्राय.पिण्डभक्षणम् ।
अध शिर शोषणं च मरुत्पतनकं तथा ॥
श्वमांसभोजनं चैव वह्निज्वालाप्रवेशनम् ।
पञ्चाशद्युगपर्यन्तमेतेषु नरकेषु च ।
भुक्त्वा राजंस्तत पश्चात्पौल्कसादिषु जायते ॥
परस्त्रीमातृगमने विश्वस्तागमने तथा ।
कण्टकोपरि सवेश्य तथोपरि च कण्टकान् ।
शिलाभारैः पीड्यमानो वसेद्युगशतं रुदन् ॥
श्वमांसभोजनं चैव वह्निज्वालाप्रवेशनम् ।
भुक्त्वा राजंस्तत पश्चात्पौल्कसादिषु जायते ॥
पण्यस्त्रीगमने राजन्रक्तकूपे युगं वसन् ।
क्षारोदके तथा चाष्टौ श्वानो भवति नापर ॥
एतेषां सहवासं तु पातकीना प्रजापते ।
संगमं तु न कर्तव्यं कुर्याच्चेत्पातकी भवेत ॥
तस्य चैतेषु सर्वेषु नरकेषु च यातना ।
पौल्कसादिषु घोरेषु जन्तोस्तस्य जनिर्भवेत् ॥
पङ्क्तिभेदी पृथक्पाकी नित्यं ब्राह्मणनिन्दकः ।
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातका ॥
कुम्भीपाके महाघोरे दह्यमानो युगायुतम् ।
ततो भूमिं समासाद्य सूकरत्वमुपागत ॥
ब्राह्मणान्य समाहूय दास्यामीति धनादिकम् ।
पश्चान्नास्तीति यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥
असिपत्रवने राजञ्छिद्यमानो युगं वसेत् ।
येन धर्मान्परिज्ञाय तमेव द्वेष्टि यो नर ।
करोति वाप्युदासीन तमाहुर्ब्रह्मघातकम् ॥
नारयो भवति चण्डालो ब्राह्मणान्द्वेष्टि यो नरः ।
श्वानयोनिशतं गत्वा गर्दभेषु च जायते ॥
ऋषभाणां गवां राजन्ब्राह्मणानां तु योषिताम् ।
आहारस्य च विघ्नं य करोति च स पातकी ।
नरकं तस्य विज्ञेयं महाशूल भयावहम् ॥
तस्योपरि शत साग्रं युगानामनुभूय च ।
म्लेच्छजातिषु संजातो मृगाणा हिंसको भवेत् ॥
स्नानदानतपोभिश्च जपेषु निरतस्य च ।

प्रायश्चित्तविवर्जने ( for ^b ) —( L 2173 ) $D_1$ $G_3$ पाप ( for पीडा ). —( L 2174 ) G(ed.) स प्राप्य ( for तदिदं ). $G_2$ G(ed ) -रौरवम् ( for °वौ ). —( L. 2177 ) G(ed ) भिद्यमानो ( for छिद्य° ). —( L 2178 ) G(ed ) बध्यते ( for पच्यते ). —( L. 2180 ) $G_1$ वेष्ट्यमानो ( for बध्य° ) —( L 2181 ) $D_1$ रासभो ( for राक्षसो ) —( L 2183 ) G(ed ) स्यादुलूकस् ( for ततोलू° ) —( L 2185 ) G(ed ) गुरुतल्पगतानेव ( for ^a ). —( L 2187 ) $G_2$ -शतत्रयम् ( for -सहस्रकम् ) —( L 2188 ) $G_2$ भवन्ति ब्रह्मराक्षसा ( for ^b ). —( L 2189 ) $D_1$ -पालयेत्; $M_1$ वर्त्यते ( for पाल्यते ) —( L 2191 ) G(ed ) अनुभूय महाराज ( for ^a ) $D_1$ विंशति, $G_1$ G(ed ) °तिम् ( for °ति ). —( L 2192 ) $D_1$ सोऽपि ( for रोगी ) —( L 2193 ) D -पीडित ( for कर्शित ) —( L 2194 ) G(ed.) भार्यश् ( for °जायश् ). $D_1$ कृशाङ्गश्च व्रणी भवेत् ( for ^b ) —( L 2197 ) $D_1$ $G_1$ य हरेत् ( for गच्छेत् ) —( L 2198 ) G(ed ) स्वपेद्युगसहस्रकम् ( for ^b ). —( L 2199 ) $D_1$ $G_3$ -पार्थिव ( for -पादय ) —( L 2202 ) $M_1$ प्रपतन ( for पतनक ) —( L. 2206 ) $G_1$ G(ed ) परस्त्रीगमने राजन् ( for ^a ) G(ed ) मित्रस्त्री ( for विश्वस्ता ) —( L 2207 ) G(ed ) क्षिप्त्वोपरि ( for तथो° ). —( L 2209 ) $G_3$ $M_1$ -भोजनश् ( for °न ). —$G_1$ om line 2210 —( L 2211 ) $D_1$ पुण्य-; $G_1$ $M_1$ G(ed ) पर- ( for पण्य ) —( L 2213 ) G(ed ) कुर्यात्पातकिना यदि ( for ^a ) —( L 2214 ) $D_1$ $G_1$ $M_1$ संवत्सरे तु पतति ( for ^c ) —For line 2214, G(ed ) subst. :
121** संवत्सरेण पतति पातकी च समेत्तर. ।
—( L. 2215 ) $G_1$ $M_1$ ततश् ( for तस्य ). G(ed ) ततोऽनुभूय चैतेषु ( for ^a ) —( L 2218 ) $G_2$ अल्पाशी ( for आदेशी ). $G_1$ निन्दका ( for घातका ) —( L. 2219 ) $G_3$ $M_1$ ऽयुत नर ( for युगायुतम् ). —( L 2221 ) $D_1$ समाहूत्य ( for °हूय ). —( L 2222 ) वक्ता ( for ब्रूयात ). —( L. 2225 ) $D_1$ [उ]दासीन ( for °न ) —( L 2227 ) $M_1$ प्राप्य ( for गत्वा ). —( L 2230 ) $M_1$ महाभयम् ( for भयावहम् ). —( L.

विप्रकृन्नरकं घोरे पतत्येव न संशय ॥
ज्योतिष व्यवहारं च प्रायश्चित्तं चिकित्सकम् ।
विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥
नरक तस्य विज्ञेयं मूषिकागणपूरितम् ।
भक्ष्यमाणस्ततो याति खरयोनिषु भारत ।
अयुतं जन्म संप्राप्य सूकरादिषु जायते ॥
ऐश्वर्यमदमत्ताना कामुकाना द्विजन्मनाम् ।
*आक्षेपकारिणां राजन्निर्घृणानां नृपोत्तम ॥*
असत्यनिरतानां च निन्दकाना बहुश्रुताम् ।
अधर्मस्यानुमन्तॄणां ब्राह्मणे मर्मवादिनाम् ।
एतेषा पातकाना तु शृणु वक्ष्यामि यातना ॥
महाक्रूरै श्वभिर्नित्य भक्ष्यमाणो युगायुतम् ।
अभक्ष्यान्नरकात्तूर्णं नियत पक्षिता व्रजेत् ॥
अन्योद्वेगकरो द्वेषी तथा चान्यस्य सूचक ।
मूत्रपानमिति स्यात तस्यैव नरकं ध्रुवम् ॥
घोर तु नरकं ज्ञात्वा पातकाञ्च स्मरेत्सुधी ।
तस्मात्त्वं पातकं राजन्स्वप्ने वा न स्मरिष्यसि ॥
शृणोति य सदा भक्त्या कीर्त्यमानं द्विजन्मभि ।
स मुक्त सर्वपापेभ्यो गङ्गास्नानफल लभेत् ॥

Colophon

श्रीभगवानुवाच ।
ब्रह्महत्यासमं पापमेवमाहुर्महर्षय ।
सुरापानसमं पाप प्रवक्ष्यामि समासत ॥
गणान्न यस्तु राजेन्द्र भुञ्जते लोभमोहित ।
सुरापी स तु विज्ञेयो महाकूपे युगं वसेत् ॥
गणिकान्नं तु यो भुङ्क्ते सुरापी स हि विश्रुत ।
तप्तशूलयुग स्थित्वा तता मत्स्येषु जायते ॥
पतितान्न तु यो भुङ्क्ते शूद्रतस्करकामिनाम् ।
अभितप्तशिलायां तु स्थित्वा पञ्चशतं युगम् ।
पश्चाद्भवति चण्डालो वेणकस्तु तत परम् ॥
औपासनपरित्यागी देवलान्नस्य भोजक्न् ।
सूतकान्नभुजो ये च ते वै निरयगामिन. ॥
शिलायामभितप्तायामारोप्य यमकिंकरा ।
दहन्ति युगपर्यन्तं ततो मूका भवन्ति हि ॥
य शूद्रेण समाहूतो भोजनं कुरुते द्विज ।
अनुज्ञातस्तु शूद्रेण सुरापी स हि विश्रुत ॥
*रक्तकूपे महाघोरे रुद्रपञ्चयुगं वसेत् ।*
शूद्रजन्म तत प्राप्य पश्चाद्भवति पुल्कस. ॥
भोजने वर्तमाने तु शूद्र पतितमेव वा ।
सूतकीं च द्विजो दृष्ट्वा भुङ्क्ते यदि स पातकी ।
शूद्रसल्लापसंयुक्तो भुङ्क्ते यदि स पातकी ॥
अस्थिच्छेदं स्नायुबन्ध क्षुरिकच्छेदके गत ।
युगाना पञ्चपञ्चाशद्दह्यमान खरो भवेत् ॥
पानीयं पायस भोज्यं जपहोमादिभक्षणम् ।
शूद्रसंल्लापसंयुक्तो भुङ्क्ते यदि स पातकी ॥
अस्थिच्छेद स्नायुबन्धं जिह्वाच्छेदमवाप्य स ।
युगानां विंशतिं स्थित्वा नरकेषु समन्तत ।
तदन्ते दैवयोगेन सूकरत्वं प्रपद्यते ॥
श्वानं तु पतित दृष्ट्वा उदक्या शब्दमेव वा ।
भुङ्क्ते यदि स पापी स्याद्रौरवं नरकं व्रजेत् ॥
उच्छिष्टेन तु संस्पृष्टो भोजन कुरुते यदि ।
दाहनं सर्वगात्राणा कुर्वन्ति यमकिंकरा ॥
स्नेहाल्लोभात्तथालस्यात्सहभोजनकृन्नर ।
पित्तपानं समाप्नोति नरकं श्लेष्मकर्दमम् ।
भुक्त्वा युगशत राजञ्श्वानयोनिषु जायते ॥
बहुभाषी द्विजो यस्तु भोजने समुपस्थिते ।
तिलशश्छेदन तस्य युगानामेकविंशति ॥
गृञ्जनं लशुनं राजन्पलण्डुं शारकण्टकम् ।

---

2231) D1 राजन् (for साम्न) — (L 2233) G1 °पान (for °स्नान) G(ed) स्नानपानतपोदान (for °) — (L 2235) G1 ॰ व्यवहारस्तु (for °र) M1 चिकित्सितम् (for °त्सकम्) — (L 2237) D1 तस्य दुःख च विज्ञेय मूषिकाणां प्रपूरितम्, G(ed) नरकस्तस्य विज्ञेयो मूषिकव्रजपूरित — (L 2240) G1 द्विजोत्तम (for द्विज मनाम्) — (L 2241) D1 द्विजोत्तम, M1 द्विजोत्तमान् (for नृपोत्तम) G1 निर्घृणान-यज-मनि (for °) — (L 2243) G1 ॰ मन्त्राणां (for मन्तॄणां). — (L 2245) D1 भक्ष्यमाणा (for °णो) — (L 2246) D1 G1 अभक्ष्यनरक (G1 °पूरित) तूर्णं (for °) D1 M1 निर्गत (for नियत) — (L 2247) D1 अन्यद्वेष (for अन्योद्वेग-). G1 G(ed) द्वेष्टि (for द्वेषी) — (L 2249) G1 महत ; M1 न स्मरेत् (for न स्मरेत्) — (L 2250) D1 नरक, M1 पातके (for °क) G(ed) स्मर प्रभो (for स्मरिष्यसि) — (L 2251) D1 द्विजातिभि (for द्विजन्मभि) G1 कीर्तनीयं द्विजाति भि (for °).

Colophon — *Mention of the Epic* G1 M1 — *Sub-parvan* D1 G1 M1 आश्चर्यपर्वणि देवधर्मा ; G1 G(ed.) स्व. धर्मा. — *Adhy name* D1 M1 नरकप्रकरणम्, G(ed) नरक वर्णनम् — *Adhy no* D1 G1 ॰ M1 G(ed) 18

— (L 2255) D1 G(ed) भुङ्क्ते लोभादितो (D1 °मोहितो), °ित (for °) — (L 2258) G(ed) तप्तशूले चिर स्थित्वा (for °). — (L 2259) G1 G(ed) °गामिनाम् (for °का°) — (L 2261) D1 वाडसम्, G1 G(ed.) वेणुरस्तु, M1 वेण° (for वेण°) — (L 2262) G1 M1 G(ed) भोजक (for °कृत्). — (L 2263) D1 सूतकान्न भुञ्जते ये (for °). — (L 2268) G(ed.) युगं पञ्चाशत वसेत् (for °). — (L 2269) G1 शूद्रयोनि (for °जन्म) — D1 G1 M1 G(ed) om. line 2272 — (L 2273) D1 क्षुरिकच्छेदिन तथा (for °). — (L. 2274) M1 युगाना तु शत पञ्च (for °). — G1 om. line 2277ᵃ. M1 om line 2277ᵇ. — (L. 2282) G(ed) सस्पृष्ट (for °ष्टो) — (L. 2284) M1 स्नेहात्पार (for [आ]लस्यात्). D1 द्विज

वौद्दाल्यं प्रविष्टस्य तस्कार्थं प्रवणस्य च ।
श्रीशूद्रैः पूजितं लिङ्गं विष्णुं वा प्रणतस्य च ।
सद्गतिं नैव पश्यामि शास्त्राणामेष निर्णयः ॥
मा ददस्वेति यो ब्रूयाद्गव्यर्थे ब्राह्मणेषु च ।
श्वानयोनिशतं गत्वा चण्डालेष्वभिजायते ॥
परनिन्दापराणां च तथा निष्ठुरभाषिणाम् ।
दानानां विघ्नकर्तॄणां तेषां पापफलं शृणु ॥
तप्ताय पिण्डवदनाः सूचिपूरितलोचनाः ।
अध शिरोर्ध्वपादास्ते बाध्यन्ते यमकिंकरैः ॥
तत्र सर्वेषु घोरेषु नरकेषु समायुतम् ।
स्थित्वा कर्मविशेषेण भजन्त्यामिषभोजिनः ॥
परद्रव्यापहर्तारः परस्त्रीलोलुपा भृशम् ।
परस्वसूचका नित्यं ते वै पातकिनोऽधमाः ॥
निरुच्छ्वासे महाघोरे नरके युगपञ्चकम् ।
अनुभूय ततो राजन्सूकराः प्रभवन्ति हि ॥
अन्यं भजन्ते भूपाल स्त्रियश्च पुरुषाधमाः ।
तासां च नरकं वक्ष्ये सावधानमनाः शृणु ॥
तप्तताम्रमयाः पुंसस्ताश्च शयने बलात् ।
आलिङ्गयन्त युगं दोर्भ्यामन्योन्यं तासु तान्प्रति ॥
तप्तशोणितकूपेषु मज्जन्त युगपञ्चकम् ।
वन्ध्या नपुंसका मूर्खा जायन्ते पौल्कसादिषु ॥
यः शृणोति महानिन्दां नरकं तस्य वै शृणु ।
तस्य कर्णेषु पात्यन्ते तप्ताय कीलसंचयाः ॥
ब्राह्मणान्ये निरीक्षन्ते कोपदृष्ट्या नराधमाः ।
तप्तसूचीसहस्रं तु तयोः चक्षुषि पूर्यते ॥
एवं पापं बहुविधं प्रशंसन्ति महर्षयः ।
शृण्वता वदता चैव न पापेषु मतिर्भवेत् ॥

Colophon

वैशंपायन उवाच ।

एवमुक्त्वा हृषीकेशो धर्मराजाय सन्मतिः ।
अवितृप्तास्तु तान्ज्ञात्वा पुनरेवाभ्यभाषत ॥

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे वचनं परम् ।
पापिनां पापबाहुल्यं प्रवक्ष्ये पाण्डुनन्दन ॥
यः शृणोति महाराज इमं धर्मं नृपोत्तम ।
स मुक्तः सर्वपापेभ्यो लोकमक्षयमश्नुते ॥
शास्त्रानुकूल्यात्स्वर्लोकं प्रातिकूल्यादधः क्षयम् ।
श्रेयश्च विपरीतं च नृणां वै समुपस्थितम् ॥
विश्वासघातिनां चैव मर्यादाघातिनां तथा ।
परान्नलोलुपानां च नरकं भृशदारुणम् ॥
असत्यनिरतानां च पिशुनानां नृपोत्तम ।
उत्पाट्यन्ते सदा जिह्वा यमदूतैर्भयंकरैः ॥
त्यक्तवेदोक्तकर्माणो ह्यनुष्ठानविवर्जिताः ।
गजदन्तैर्भज्यमाना निवसन्ति युगान्बहून् ॥
विप्रग्रामेषु भूपालो यः कुर्यादधिकं करम् ।
स सहस्रकुलो भुङ्क्ते नरकान्पञ्चकल्पकम् ॥
विप्रग्रामकरादाने योऽनुमन्ता स पापकृत् ।
स एव कृतवान्राजन्ब्रह्महत्यायुतं शतम् ।
श्वविष्ठाभोजिनो नित्यं नराः ह्यतिथिवर्जिताः ॥
अयोनौ च वियोनौ च पशुयोनौ च भारत ।
सिक्त्वा रेतो महापापी रेतोभोजनमश्नुते ॥
श्वायुश्छेदं श्वायुबन्धमस्थिच्छेदं तु तस्य वै ।
अनुभूय क्रमेणैव धूमपानं युगायुतम् ।
नरकाद्विर्गतो भूप वेश्यापुत्रो भविष्यति ॥
उपवासदिने राजन्दन्तधावनकृन्नरः ।
स घोरं नरकं याति व्याघ्रभक्षं चतुर्युगम् ॥
उपवासविहीनश्च एकादश्यां शुभे दिने ।
नरकस्तस्य विज्ञेयो युगानां पञ्चसप्ततिः ॥
स्वदत्तं परदत्तं वा परक्षेत्रं तु यो हरेत् ।
स कोटिकुलसंयुक्तः कल्पान्तं नरकं व्रजेत् ॥
विप्राणां क्षेत्रहरणे योऽनुमन्ताविकुत्सितः ।
उलूखले तं निक्षिप्य मुसलैः प्रहरन्ति च ॥
शिलायामभितप्तायां दहन्ति युगपञ्चकम् ।

—(L 2344) D1 G2 अत्रैव च विनिन्दिनाम् (for ²) —(L. 2346) D1 G2 धर्मशास्त्राणि नि(G2 °स्त्रविनि)न्दिनाम (for ²) — G2 om line 2349 —(L 2350) G1 G(ed.) निष्कृतिं (for सद्गतिं) —(L. 2352) G(ed) प्राप्य (for गत्वा) —(L. 2356) G(ed.) ऊर्ध्वपादा अधःशिरसः (for ²) —(L. 2360) G(ed.) ते वै निरयगामिनः (for ²) —(L. 2363) G(ed) ह्यन्यां च (for भूपाल) D1 M1 पुरुषाधमान् (for °धमाः) —(L 2365) G(ed) तप्तताम्रमयीः स्त्रियः (for ²) —(L. 2370) G(ed) ममसु (for कर्णेषु) D1 G1 2 M1 पात्यन्त (for पात्यन्ते) —(L 2371) G1 G(ed) वाम कृत्वा (for कोप दृष्ट्या) D1 नराधिप (for °धमाः) —(L. 2372) G2 चक्षुषि, M1 क्षुप्र (for चक्षुषि) —(L 2373) D1 भय (for पाप) G2 विपश्चित (for महर्षयः) —(L. 2374) G1 पठता (for वदता) G2 पापं तस्य मतिर्नृप (for ²)

Colophon — *Sub-parvan* D1 G1 G(ed) आश्वमेधिकवर्णि शेषधर्माः, G2 M1 शेषधर्माः — *Adhy name* D1 पापभवदर्शनम्, M1 पापभन्त्रधनम्, G(ed) पापभेदप्रशंसा — *Adhy no* D1 G1 2 M1 G(ed) 19

(L. 2377) G2 शृणु मे परमं वचः (for ²) —(L. 2380) D1 ह्यक्षय्यफलमश्नुते (for ²) —(L. 2381) G1 G(ed) यम- (for अध-) G2 प्रयाति च तत्क्षयम् (for ²) (L 2388) D1 हन्यमाना, G2 ताड्य°, G(ed) भग्नकाया (for भज्यमाना) —(L. 2389) M1 G(ed) भूपालो (for °ल) D1 भो राजन्विप्रग्रामेषु (for ²) — M1 om lines 2390-2391 —(L 2390) D1 -युग (for कुलो) G2 सहस्रक (for स सहस्र) D1 कल्पसु G1 पञ्च च (for -कल्पकम्) G(ed) नरकान्कल्पपञ्च च (for ²) —(L 2393) G2 भाजनात् (for भोजिना) —(L. 2395) G2 रेत (for रेतो) —(L. 2402)

अनुभूय ततो राजन्राक्षसो भवति ध्रुवम् ॥
गणयेद्यस्तु पृथिवीमन्यायेन करंकर ।
स कोटिकुलसंयुक्तो निमज्जत्युष्णकर्दमे ॥
ततो विष्ठाह्रदे मग्नस्तिष्ठेद्युगसहस्रकम् ।
व्रणी कुष्ठाभिभूतश्च भवेज्जन्मनि जन्मनि ॥
विष्णुद्रव्यापहर्तारो ब्रह्मद्रव्यापहारकाः ।
ब्रह्महत्यायुतं राजंल्लभन्ते नात्र संशयः ॥
अनाथधनहर्तारः शयन्ते कण्टकोपरि ।
युगानामयुतं स्थित्वा व्याघ्रयोनौ भवन्ति हि ॥
आरामे पुष्पहर्तारो देवपूजादिकास्थितं ।
ते यान्ति युगपर्यन्तं वह्निज्वालाप्रवेशनम् ॥
जले देवालये राजन्यज्ञभूमौ शवक्षये ।
द्विजानां संनिधौ गोषु तथा चाश्वत्थसंनिधौ ॥
वल्मीकाग्रे गयाभूमौ तथा चोच्छिष्टभूतले ।
कुशदर्भसमाकीर्णे देवोद्यानसमीपतः ॥
शिलायां तुलसीस्थाने कृष्टभूमौ नराधिप ।
स्त्रीसंनिधौ महाकूपे योऽत्सृजेद्देहजं मलम् ॥
आत्महन्तुर्यथा पापं भ्रूणहन्तुर्यथा तथा ।
एतान्सर्वानवाप्नोति नरकान्युगपञ्चकम् ।
अनुभूय क्रमेणैव काकयोनौ प्रजायते ॥
अवगुण्ठनमकृत्वा तु कर्णे च ब्रह्मसूत्रकम् ।
पुरीषमूत्रं यः कुर्याद्यदि वा स तु पातकी ॥
तृणच्छेदं नु सलापं केशश्मश्रुनिपातनम् ।
श्लेष्माश्रुपतनं चैव तथा लोष्टविमर्दनम् ॥
कलहं द्यूतमत्युग्रमशास्त्रश्रवणं तथा ।
अधोवायुं क्षुतं चैव वमनं देवसंनिधौ ।
एतान्करोति भूपाल स गच्छेन्नरकं ध्रुवम् ॥
शूद्रसाक्ष्ये यदेशस्तु धनबन्धेषु लोभतः ।
स याति नरकान्घोरान्यावदाचन्द्रतारकम् ॥
इह पुत्राश्च पौत्राश्च विनश्यन्ति परत्र च ।
साक्षी यस्तु मृषावादी स गच्छेद्रौरवं नृप ॥
परिघैः पट्टिशैः शूलैर्भिद्यते यमकिंकरैः ।
ये घातिपापिनो मर्त्या ये च मिथ्यापवादिनः ।
तेषां मुखे जलूकाद्यैः पूर्यन्ते पन्नगोपमाः ॥
ऋतौ नाभिगमेद्यस्तु स्वस्त्रियं मनुजेश्वर ।
स याति रौरवं घोरं ब्रह्महत्यां च विन्दति ॥
अष्टमीतिथिसंक्रान्तौ व्यतीपाते च पर्वणि ।
वैधृतौ तु चतुर्दश्यामेकादश्यां त्रिके निशि ॥
सध्ययोर्जन्मनक्षत्रे व्रतेषु च पितुर्दिने ।
एतेषु दिवसेष्वेव न गच्छेत्स्वस्त्रियं ऋतौ ।
यदि गच्छेत्स पापी स्यान्मोहाद्वा रौरवं व्रजेत् ॥
जातः स तु दुराचारो मूर्खो व्याधिरथ एव च ।
अल्पायुश्च कुष्ठश्च महाद्वेषी सदा भवेत् ॥
अनाचाररतान्दृष्ट्वा यः शक्तो न निवारयेत् ।
तत्पापार्धमवाप्नोति यश्चोपेक्षापरायणः ॥
पापिना पापगणनं यः करोति नराधम ।
अस्ति चेत्तुल्यपापी स्यान्मिथ्यात्वे द्विगुणं भवेत् ॥
अपापे पातकं यस्तु समारोप्य विनिन्दति ।
तस्य जिह्वां समुत्कृत्य घोराश्च यमकिंकराः ।
तप्तायःपिण्डमाक्षिप्य तस्य चास्ये निहन्ति च ॥
कन्यागामी नरो यस्तु भक्ष्यमाणो निशाचरैः ।
स याति धूमपानं च ततः शङ्कुनिकृन्तनम् ॥

D1 G1 : M1 नरके तस्य विज्ञेयं ( for ° ) G2 G(ed) एव ( for पश्च ) — ( L 2403 ) D1 G2 G(ed) स्वच्छा परदत्ता वा ( for ° ) G(ed) विप्रभूमिं ( for परक्षत्र ) D1 यो हरेच्च वसुंधराम् ( for ° ) — After line 2403, D1 ins

123** षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ।

— ( L 2408 ) D1 ततो निस्तीर्णनरको ( for ° ) — ( L 2409 ) D1 नर करम्, G(ed) कर नर ( for करंकर ) — G1 om lines 2410-2413 — ( L 2415 ) G1 G(ed) अनाथा वनिहर्तार ( for ° ) — ( L 2416 ) D1 व्याघ्रयोनिं भजन्ति ते ( for ° ) — ( L 2417 ) G(ed) देवपूजादिकाहृते ( for ° ) — ( L 2419 ) G(ed) नराधिप ( for शवक्षये ) — ( L 2420 ) G(ed) द्विजाग्निसंनिधौ गोष्ठे ( for ° ) — ( L 2422 ) G1 समास्तीर्णे ( for °कीर्णे ) — ( L 2423 ) D1 M1 कृषि ( for कृष्ट ) G(ed) द्विजो नृप ( for नराधिप ) — ( L 2425 ) G1 M1 भ्रूणहत्य ( for °हन्तुर् ) — ( L 2426 ) G(ed) प्राप्य ( for एतान् ) — ( L 2429 ) G1 मूत्रे ( for मूत्र ) — ( L 2430 ) G1 निपातनम् ( for निपात° ) — ( L 2434 ) M1 G(ed) यो भूप ( for भूपाल ) — ( L 2435 ) G1 लोलुप : M1 लोभत ( for ला° ) D1 धने न धुलोभत, G(ed) धनग्रहणलोभत ( for ° ) — ( L 2437 ) G(ed) दि तस्य वै ( for परत्र च ). — ( L 2439 ) G1 : हन्यते ( for भिद्यते ) — ( L 2440 ) G1 G(ed) ये च मिथ्याभिभाषिण ( for ° ) — ( L 2441 ) D1 G(ed) पन्नगोत्तमा ( for °पमा ) — ( L 2443 ) G(ed) नरकं ( for रौरव ) — ( L 2444 ) G(ed) अष्टम्यां रविसंक्रान्तौ ( for ° ) — ( L 2445 ) G1 ऋतुकाले ( for एकादश्यां ). — ( L 2447 ) G1 M1 नृप ( for ऋतौ ) — ( L 2448 ) महापापी ( for स पापी स्यात् ) — ( L 2449 ) G1 M1 जातं स्तत्र ( for जात स तु ) D1 जातस्तत्र दुराचारी ( for ° ). G2 मूढो ( for मूर्खो ) D1 मूर्खो व्याधियुतस्तथा ( for ° ) — ( L 2450 ) G1 कुलघ्न ( for कुष्ठ° ) — ( L 2451 ) G(ed) रतं ( for रतान् ) D1 निवारयेत् ( for निवा° ) — ( L 2452 ) G2 तत्पापं समवाप्नोति ( for ° ) — ( L 2454 ) D1 मिथ्या चेद्, G(ed) नास्ति चेद् ( for मिथ्यात्वे ) — D1 om lines 2456-2464 — ( L 2457 ) G(ed) आदाय ( for आक्षिप्य ) G(ed) मुखे वै विनिपात्य च ( for ° ) — ( L 2459 ) G1 ततः शङ्कुश्च ( for ततः शङ्कु ) M1 निकृन्तति ( for °नम् ). — For line 2459, G(ed) subst

124** शिश्नं च वृषणं चैव छिन्दन्ति यमकिंकराः ।



१ हरिवंश—१०५

शिश्ने च वृषणे चैव ह्ययोभारस्य बन्धनम् ।
एवं युगशतं स्थित्वा पश्चाच्चण्डालतां व्रजेत् ॥
यस्तु व्रतानि संगृह्य असमाप्य परित्यजेत् ।
असिपत्रे युगं स्थित्वा हीनाङ्गो जायते नरः ॥
न्यायेन धर्मशिक्षायां पक्षपातं करोति यः ।
अत्युष्णसिकतास्थानं तथा स्वपिति दीर्घनम् ॥
चतुर्युगानामयुतं भुक्त्वा नरकयातनाः ।
ततः खरेषु जायन्ते श्वानयोनौ च भूतले ॥
अवमत्य द्विजान्वृद्धान्बालान्वृद्धांश्च गर्भिणीम् ।
भुङ्क्ते यदि स पापी स्याद्रौरवं नरकं व्रजेत् ॥
अपहृत्य परस्यार्थं यः परेभ्यः प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥
परनिन्दां प्रशंसां च आत्मनश्च करोति यः ।
आस्ये तस्यायसं पिण्डं क्षिपन्ति यमकिंकराः ॥
प्रातःस्नानविहीनाश्च गायत्र्यानपवर्जिताः ।
ब्रह्मयज्ञविहीनाश्च ते वै निरयगामिनः ॥
प्राणायामविहीनाश्च देवर्षिपितृसंहतिम् ।
न तर्पयन्ति ये राजंस्ते वै निरयगामिनः ॥
स्नानहीनाश्च मध्याह्ने भानुप्रार्थनहीनकाः ।
औपासनविहीनाश्च ते वै निरयगामिनः ॥
गृहार्चनविहीनाश्च गृहपूजाविगर्हकाः ।
पञ्चयज्ञविहीनाश्च ते वै निरयगामिनः ॥
पितृमातृप्रपूजायां विहीनाश्च तथा तिथौ ।
भोजने मौनहीनाश्च ते वै निरयगामिनः ॥
उच्छिष्टभोजिनो ये च ये च मृष्टान्नभोजिनः ।
भोज्ये कलहकर्तारस्ते वै निरयगामिनः ॥

सायं प्रातर्यथाशक्त्या पुराणं न शृणोति यः ।
मासत्रयविहीना ये ते वै निरयगामिनः ॥
पुराणधर्मशास्त्रेषु भक्तिहीनाश्च ये द्विजाः ।
भाषाशास्त्रेषु निरतास्ते वै निरयगामिनः ॥
कर्णाटद्राविडीयानि आन्ध्रकर्णोजयन्ति च ।
यथासि ये प्रशृण्वन्ति ते वै निरयगामिनः ॥
भाषया रचितं शास्त्रं स्त्रीमुखात्तु शृणोति यः ।
शूद्रेभ्यश्च प्रशृण्वन्ति ते वै निरयगामिनः ॥
भाषया रचितं शास्त्रमिह लोके सुखप्रदम् ।
परलोके भयकरं तस्मात्तत्परिवर्जयेत् ॥
दिव्यमार्गं परित्यज्य भाषया रचितानि वै ।
शास्त्राणि च प्रशृण्वन्ति ते वै निरयगामिनः ॥
भाषारचितशास्त्रेषु गान्धर्वेषु रताश्च ये ।
तेषां सङ्गोऽपि संत्याज्यः परत्रहितकाङ्क्षिभिः ॥
नामानि मम शृण्वन्ति शास्त्रयुक्तानि भारत ।
शास्त्रेषु निरता भूत्वा पुराणेषु रता द्विजाः ॥
भाषारचितशास्त्रेषु बुद्धिमान्नैव रतिं त्यजेत् ।
ममाज्ञाकारणीयेषु पुराणेषु मतिं कुरु ॥
असच्छास्त्रेषु निरताः शमदमप्रवर्तकाः ।
विरता धर्मशास्त्रेषु तेषां सङ्गं परित्यजेत् ॥
युधिष्ठिर उवाच ।
भवता सर्वमाख्यातं धर्माधर्मं यदुत्तम ।
श्राद्धस्य विषये देव निषिद्धं वद सुव्रत ॥
श्रीभगवानुवाच ।
श्राद्धे निमन्त्रितो यस्तु भोजनं कुरुते यदि ।
चतुर्युगसहस्राणि शूलप्रोतो भवेद् ध्रुवम् ॥

— (L. 2462) $G_1$ G(ed) $M_1$ न समा( $M_1$ समाप्तो )प्य परित्यजेत् ( for ° ) — ( L. 2465 ) $G_1$ तथा दृष्टिविशीर्णनम् ( for ° ) — ( L. 2467 ) G(ed) हीनेषु ( for जायन्ते ) $D_1$ $G_2$ श्वानयोनिशतं तथा ( for ° ) — ( L. 2468 ) $M_1$ बाल ( for बालान् ) $D_1$ गर्भिणी , $G_2$ रोगिण ( for गर्भिणीम् ) — After line 2471 G(ed) ins

125** एवैषां सहवासं तु करोति पुरुषाधमः ।
पौल्कसादिषु पापेषु जातोऽसाय जनिर्भवेत् ॥
पाङ्क्तिभेदी पृथक्पाकी नित्यं ब्राह्मणनिन्दकः ।
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ॥
कुम्भीपाके महाघोरे दह्यमाना युगायुतम् ।
ततो भूमिं समासाद्य सूकरत्वमुपागताः ॥
ब्राह्मणाय समाहूय दास्यामीति धनान्वितम् ।
पश्चान्नास्तीति यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ।
असिपत्रवने राजंश्छिद्यमानो युगं वसेत् ॥
येन धर्मं परिज्ञाय तमेव द्वेष्टि यो नरः ।
करोति पाप्युदासीनं तमाहुर्ब्रह्मघातकम् ॥
आहारस्य च विघ्नं यः करोति स च पातकी ।
नरकं तस्य विद्धि महच्छूलं भयावहम् ।

— ( L. 2472 ) $G_2$ आत्मनश्चा ( for °नश्च ) — ( L. 2473 ) $G_{1,2}$ $M_1$ प्रक्षिपन्ति च किंकराः ( for ° ) — ( L. 2474 ) $G_3$ देवर्षिपितृतर्पणम् ( for ° ) — $G_3$ om lines 2475 2476 $D_1$ om lines 2476 2481 — ( L. 2478 ) G(ed) -वर्जिताः ( for हीनकाः ) — ( L. 2480 ) G(ed) गृहार्चने ( for गृहा° ) $G_3$ G(ed) विगर्हिताः ( for °हकाः ) — $D_1$ $G_1$ $M_1$ om line 2481 — ( L. 2482 ) G(ed) पितुर्मातुः ( for पितृमातृ ) — ( L. 2483 ) $G_{1,2}$ $M_1$ भोजनेन विहीनाश्च ( for ° ) — $D_1$ om lines 2484 2485 — ( L. 2486 ) $G_2$ $M_1$ यथाशक्ति ( for °त्क्या ) — $M_1$ om. line 2487 — ( L. 2490 ) $G_3$ द्राविडीयाना G(ed) °डैर्याणि ( for °डीयानि ) G(ed) रचिताऽन्यायभाषया ( for ° ) — $M_1$ om lines 2492 2493 — ( L. 2492 ) $D_1$ हीनमूर्खांच ( for स्त्रीमुखात्तु ) — ( L. 2494 ) $D_1$ भाषाविः ( for भाषया ) — ( L. 2496 ) G(ed) ह्यन्यभाषाकृतानि वै ( for ° ) — ( L. 2499 ) $G_1$ तेषां सङ्गमपि त्याज्यं $G_2$ तेषां सङ्गं परित्यागे ( for ° ). — ( L. 2501 ) $D_1$ G(ed) ये तु $M_1$ भव या ( for भूत्वा ) — After line 2501 G(ed) ins

126** तेषां तु पुण्यशीलानां मम लोकस्तु शाश्वतः ।

श्राद्धं भुक्त्वा परश्चेषु यः कुर्याद्ग्रामिभोजनम् ।
नरकेषु चिरं मग्न स चण्डालो भवेद् ध्रुवम् ॥
श्राद्धं दत्त्वा च भुक्त्वा च स्त्रीसङ्गं कुरुते यदि ।
दिविस्था पितरस्तस्य पतन्ति नरकेऽशुचौ ॥
श्राद्धे भुञ्जन्द्विजो यस्तु बहुभाषी मिताशनः ।
स पापी नारकी ज्ञेयः क्रूरे तु नरके वसेत् ॥
निमन्त्रितो द्विजो यस्तु न स्नायी लोभमोहितः ।
श्राद्धहन्ता स विज्ञेयः कल्पान्तं नरकं व्रजेत् ॥
अस्नात्वा यदि वर्तेत श्राद्धं भुक्त्वा परेऽहनि ।
स पापी नारकी ज्ञेयः क्रकचे नरके वसेत् ॥
अकृत्वा पार्वणं होमं श्राद्धं कुर्याद्यदि द्विजः ।
तच्छ्राद्धमासुरं ज्ञेयं तत्कर्ता नरकं व्रजेत् ॥
अन्येद्युः प्रातरुत्थाय स्नात्वा तु तिलतर्पणम् ।
अकर्ता च स पापी स्याद्दाता च नरकं व्रजेत् ।
न तु भुञ्जीत तच्छ्राद्धं भुक्त्वा नरकमश्नुते ॥
पतितं भिन्नमर्यादं जपस्नानविवर्जितम् ।
वेदशास्त्रविहीनं च श्राद्धेन न निमन्त्रयेत् ॥
यतिं च वानप्रस्थं च ब्रह्मचारिणमेव च ।
अश्रोत्रियं कुलघ्नं च वृषलीपतिमेव च ॥
कृत्रिमं कुटिलं मूकं बधिरं पङ्गुमेव च ।
महाघ्नं ग्रामणीं वैद्यं ग्रामघ्नं तु नपुंसकम् ।
गुरुनिन्दं दुराचारं श्राद्धे तु न निमन्त्रयेत् ॥
देवपूजाविहीनं च पञ्चयज्ञविवर्जितम् ।
औपासनाविहीनं च श्राद्धे तु न निमन्त्रयेत् ॥
गत्वा शवगृहं यस्तु सभाश्वानुव्रजेद्यदि ।
कुचैलं कर्कशं स्तब्धं कर्षकं व्याधिपीडितम् ॥
वैश्यवृत्तिपरं मूर्खमस्वतन्त्रं विनिन्दितम् ।
कृतघ्नं गायकं मत्तं भट्टवृत्तिपरं जडम् ।
सौवर्णकं दुराचारं श्राद्धे तु न निमन्त्रयेत् ॥
काणं खञ्जं कृशं दीनं सदा चैव केशधारिणम् ।
दुर्मन्त्रणं तु वाचाटं श्राद्धे तु न निमन्त्रयेत् ॥
कुष्ठकण्डूव्रणैर्युक्तं हीनाङ्गं व्यसनलोलुपम् ।
पितृमातृपरित्यक्तं श्राद्धे तु न निमन्त्रयेत् ॥
अश्रोत्रियं कुलघ्नं च वृषलीपतिमेव च ।
कृत्रिमं कुटिलं मूकं श्राद्धे तु न निमन्त्रयेत् ॥
एते वर्ज्या द्विजाः सद्भिः सदा पितृहितैषिभिः ॥
श्राद्धपात्रं प्रवक्ष्येऽहं शृणुष्व नृपसत्तम ।
वेदशास्त्रेषु निरतं श्रोत्रियं श्रोत्रियात्मजम् ।
स्नानैर्जपैः सदा शुद्धं श्राद्धार्थं तं निमन्त्रयेत् ॥
देवपूजासु निरतं पञ्चयज्ञपरायणम् ।
पुराणवेदशास्त्रज्ञं श्राद्धार्थं तु नियोजयेत् ॥
अध्यात्मशास्त्रसंपन्नं शान्तं वै मृदुभाषिणम् ।
जितेन्द्रियं शुभं दान्तं श्राद्धार्थं तं निमन्त्रयेत् ॥

युधिष्ठिर उवाच ।

किं वर्ज्यं किं व्रतं त्याग केषां वर्ज्यस्तु संगमः ।
तन्ममाचक्ष्व देवेश सेवा केषां तु पापदा ॥

श्रीभगवानुवाच ।

स्त्रीणां सङ्गं सदा वर्ज्यं पापिना तु समागमम् ।
सूतकया दर्शनं राजन्प्रयत्नेन विवर्जयेत् ॥
संध्याप्रदोषकाले तु योषिता संगमात्पतेत् ।

— (L 2504) $G_1$ G(ed) शास्त्र (for धर्मे) — (L 2508) $D_1$ $M_1$ निमन्त्रितो (for °ते) — $M_1$ om lines 2509–2512 — (L 2513) $D_1$ पतन्ति नरकेषु च (for $^b$) — (L 2514) $G_2$ G(ed) श्राद्ध (for श्राद्धे) $G_2$ नरो (for द्विजो) $D_1$ श्राद्धभोजी नरो यस्तु (for $^a$) $M_1$ om lines $2514^b$–$2516^a$ — (L 2515) $D_1$ $G_2$ नरके (for नारकी) $G_1$ om line $2515^b$ G(ed) क्रकचे (for क्रूरे तु) — $G_2$ om lines 2516–2521 — (L 2516) $D_1$ श्राद्धं भुङ्क्ते (for निमन्त्रितो) $G_1$ श्राद्धे भुञ्जानो यस्तु (for $^a$) $D_1$ $G_1$ स्नात्वा (for स्नायी) — (L 2522) $G_2$ स्नानं तु, $M_1$ च स्नात्वा (for स्नात्वा तु) — (L 2523) G(ed) न कुर्याद् (for अकर्ता) $D_1$ $G_2$ अकृत्वा यदि पापी स्याद् (for $^a$) G(ed) रौरवं (for दाता च) — $G_2$ om lines 2524–2529 — (L 2524) $D_1$ भुक्त्वा तु नरकं व्रजेत् (for $^b$) — After line 2524, $D_1$ ins

127** अकृत्वा वार्षिकं श्राद्धं पितुर्भ्रातुर्धवस्य च ।
भुङ्क्ते यदि स पापी स्यान्नरकं रौरवं व्रजेत् ॥
मृते भर्तरि या नारी ह्यकृत्वा वपनं यदि ।
पाकनीराादिकं सर्वं कुरुते लोभमोहिता ।
तत्कृतं पाकनीरादि भोक्तुः पतनकृन्मते ॥

— (L 2526) $M_1$ देश (for वेद) $G_1$ श्राद्धे तु (for श्राद्धेन) — $D_1$ $G_1$ $M_1$ om lines 2527–2529 — (L 2530) $G_1$ गोघ्नं चैव (for ग्रामघ्नं तु) — (L 2531) $G_1$ दुराराध्यं (for °चारं) — (L. 2534) $D_1$ गत्वा शवं वहेद्यस्तु (for $^a$). — (L 2536) $G_2$ वृत्तिकरं (for °परं) $G_2$ विनिन्दकम् (for °न्दितम्) — After line 2538, $D_1$ $G_1$ ins

128** ब्रह्मचारिं यतिं चैव वानप्रस्थांश्च भिक्षुकान् ।
While G(ed) ins after line 2538

129** परापवादनिरतं परस्त्रीलोलुपं तथा ।

— (L. 2540) $G_1$ वाचालं (for °टं) $D_1$ दुर्मन्त्रितं तु वाचालं; $M_1$ बधिरं कुब्जगात्रं च, G(ed) द्विजं वाचालकं चैव (for $^a$). — G(ed) om lines 2543–2544 — (L. 2543) $G_2$ कृतारं (for कुलघ्नं) — (L. 2545) $M_1$ G(ed) द्विजे (for द्विजाः). $D_1$ $G_1$ $M_1$ G(ed) परत्नेन (for सदा पितृ) — (L. 2546) $G_1$ समवक्ष्ये (for प्रवक्ष्येऽहं) — $M_1$ om lines $2547^b$–$2541^a$. $G_2$ om lines 2519–2550 — (L. 2550) $D_1$ $G_1$ $M_1$ निमन्त्रयेत् (for नियोज°) — $M_1$ om lines 2551–2552. — (L. 2551) $G_1$ G(ed) पूर्वं (for मृदु) — (L. 2552) $G_1$ द्विजं शान्तं, G(ed) शुभं शान्तं (for शुभं दान्तं) — $G_2$ om. the ref — (L 2553) $G_1$ G(ed) मतत्याग ($G_1$ °गं) (for व्रत त्याग) $D_1$ $M_1$ त्याज्यं वै योषितागमे, $G_1$ योषितां संगमे तथा

सन्ध्यायां भोजनं निद्रां त्रयीविद्यां विवर्जयेत् ॥
वृक्षारोहणमत्युग्रं कूपानां चावरोहणम् ।
नदीतरणमत्युग्रं बाहुभ्यां तु विवर्जयेत् ॥
ऋणं परगृहे वासं ऋणात्क्षेत्रविवर्जनम् ।
गोमहिष्यो: क्रयं राजन्सर्वथा परिवर्जयेत् ॥
भृत्यपुत्रेषु संवादं स्वस्त्रीकलहमेव च ।
कलहं सर्वमनुजैः श्रेयस्कामी परित्यजेत् ॥
शूद्रहस्तात्समानीतमन्नं पानीयमेव च ।
वासस्ताम्बूलदानं च श्रेयस्कामी परित्यजेत् ॥
पादाभ्यङ्गं शिरोभ्यङ्गं तथा देहविमर्दनम् ।
श्रेयस्कामी तु राजेन्द्र शूद्रहस्तान्न कारयेत् ॥
भानौ भृगोर्गुरोर्वारे भौमे मृत्युप्रदं नृणाम् ।
तैलाभ्यङ्गं तथा रात्रौ श्रेयस्कामी परित्यजेत् ॥
कूपस्नानं सदा वर्ज्यं कूपोदवपनक्रिया ।
शौचं कूपजलेनैव श्रेयस्कामी परित्यजेत् ॥
स्थण्डिले शयनं दानं जपमैथुनभाषणम् ।
भोजनं राजशार्दूल श्रेयस्कामी परित्यजेत् ॥
क्षेत्रारामे वने शैले तीर्थे वै देवसंनिधौ ।
यात्रायां पथि राजेन्द्र न कुर्यान्मैथुनं स्त्रिय ॥
राजभृत्येषु मूर्खेषु पण्डितेषु कदाचन ।
गुरुस्त्रीषु च नो कुर्याद्विवादं नृपसत्तम ॥
एवं बहुविधं प्रोक्तं धर्माधर्मं हि पाण्डव ।
विस्तराद्वदितुं तस्य अपि वर्षशतादपि ॥
सर्वेषामपि लोकानामानुकूल्यं सदाश्रयम् ।
तद्धर्ममिति विज्ञेयं सर्वदा नृपसत्तम ॥
निन्द्यमानं सदा सद्भिर्यद्धर्ममपि पाण्डव ।
अधर्मं तद्धि विज्ञेयं महद्भयकरं नृप ॥
तस्मात्सर्वेषु कालेषु सतामभिमतं तु यत् ।
तत्कुरुष्व सदाचक्ष्व परां सिद्धिं गमिष्यसि ॥
धर्म्यं यशस्यमायुष्यं स्वर्ग्यं पाण्डुनन्दन ।
इदं वै शृण्वता भक्त्या ब्रह्मलोको भविष्यति ॥

Colophon

युधिष्ठिर उवाच ।

कथितं भवता सर्वं धर्माधर्मं यदूत्तम ।
इदानीं श्रोतुमिच्छामि नरकानभिधानत: ॥
धर्माधर्मस्य विस्तारं पापिनां भयदायकम् ।
सुखदं पुण्यशीलानां मध्ये मध्ये यमस्य च ॥

श्रीभगवानुवाच ।

नामधेयानि वक्ष्यामि नरकाणां महामते ।
संख्यातुं नापि शक्नोमि तेषां मुख्यं शृणुष्व ह ॥
तपनो वालुकाकुम्भो महारौरवरौरवौ ।
कालसूत्रं निरुच्छ्वासो ह्यसिपत्रप्रमर्दनौ ॥
हिमोत्कटमहाशूलौ मूषाकूपं च शाल्मली ।
श्वभक्षो मूत्रपानं च वैतरण्यां महास्वनम् ॥
तप्तशूलं तप्तशिला पुरीषाहारमेव च ।
गजशोणितकूपं च मलशोणितभोजनम् ॥
श्वमांसभोजनं चैव वह्निज्वालाप्रवेशनम् ।
शिलावृष्टि: शस्त्रवृष्टिर्वह्निवृष्टिर्मरुत्पतत् ॥
क्षारोदकं चोष्णतोयं तप्तायःपिण्डभक्षणम् ।
अधःशिरःशोषणं च तप्तपाषाणदारणम् ॥
पुरीषलेपनं चैव तथा मत्कुणदारणम् ।

(for $^b$) —(L. 2555) $D_1$ $G_1$ $M_1$ स्त्रीसङ्गं सर्वदा वर्ज्यं G(ed) स्त्रीसङ्गं सर्वदा वर्ज्यं (for $^a$) —(L. 2556) $G_1$ दत्त्वया (for सुतया) —(L. 2557) $D_1$ G(ed) योषिता संगमं त्यजेत् (for $^b$) —(L. 2558) $G_1$ मद्यं नैव परित्यजेत् (for $^b$) —(L. 2561) $G_1$ G(ed) विवर्धनम् (for °जनम्) — $G_2$ om lines 2562-2567 —(L. 2562) $G_1$ गोमहिष्या: (for °ष्यो:) — $D_1$ ins after line 2564, $G_1$ after line 2566:

130** शूद्रग्रामे सहवासं शूद्रवेश्मनिवासनम् ।
शूद्रेण तु सदा योगं श्रेयस्कामी परित्यजेत् ॥
व्यवहारं कृषिं क्षेत्रं पङ्क्तिभोजनमेव च ।
शूद्रेण सह संस्पर्शं श्रेयस्कामी परित्यजेत् ॥

—(L. 2565) $G_1$ $M_1$ समानीतम् (for °नीतम्). $M_1$ अन्नं पानीयभक्षणम् (for $^b$) — $M_1$ om lines 2570-2572 —(L. 2571) $G_1$ G(ed) कूपोदवपनक्रिया (for $^b$) —(L. 2573) $D_1$ $G_1$ स्नानं (for दानं). $M_1$ G(ed) जपं मैथुनभोजने ($M_1$ °पूजनम्) (for $^b$) —(L. 2574) $G_1$ होमं च, G(ed) पूजनं (for भो°) —(L. 2578) $G_1$ G(ed) राज°, $M_1$ नर° (for नृप) — After line 2578, $D_1$ ins.:

131** अग्निहोत्रगृहे देवे गुरुब्राह्मणसंनिधौ ।
तीर्थे सभायां राजेन्द्र न कुर्याच्छीवनं बुध ॥

— $G_1$ om. lines 2580–2583. —(L. 2580) $D_1$ G(ed) नालं (for तस्य) —(L. 2581) G(ed) सदाश्रय° (for °यम्) —(L. 2584) $M_1$ भयकरमथो नृप (for $^b$) —(L. 2585) $G_2$ सदा पुण्यं हितं तु यत् (for $^b$) —(L. 2588) $D_1$ $M_1$ स्वर्लोकं च ($M_1$ ब्रह्मलोको) गमिष्यति (for $^b$)

COLOPHON.— *Sub-parvan*: $D_1$ $G_1$ आश्वमेधिकपर्वणि वैष्णवधर्मशास्त्रे धर्मा, $G_2$ $M_1$ G(ed) वैष्णवधर्मा — *Adhy. name*: $D_1$ पापभेद, $M_1$ पापभेदकथनम्, G(ed) पापभेदप्रशंसा — *Adhy. no.*: $D_1$ $G_1$ $_2$ $M_1$ G(ed) 20.

$M_1$ om line 2590 —(L. 2590) $G_2$ भगवन् (for नरकान्) —(L. 2591) $D_1$ G(ed) यममार्गस्य विस्तारं (for $^a$) —(L. 2592) G(ed) मार्गे (for the first मध्ये) —(L. 2593) G(ed.) [अ]र वक्ष्ये (for वक्ष्यामि). $G_1$ $_2$ $M_1$ नामधेयमहं वक्ष्ये (for $^a$) —(L. 2596) G(ed) कालसूत्रनिरुच्छ्वासौ (for $^a$) —(L. 2597) $G_1$ $_2$ G(ed) विष्ठा° ($G_1$ मूत्र)कूपं च शाल्मली (for $^b$) —(L. 2599) G(ed.) पुरीषहरमेव च (for $^b$) — $G_2$ om (hapl.) lines 2601$^b$–2605$^a$ —(L. 2606) $G_2$ दारुणम् (for दाहनम्) —(L. 2607)

क्षीरदा ये तु सुखिनः पिबन्त क्षीरमुत्तमम् ॥
घृतदा मधुदाश्चैव क्षीरदाश्च नृपोत्तम ।
सुधापानं प्रकुर्वन्ति प्रयान्ति यममन्दिरम् ॥
शाकदः पायसं भुञ्जन्दीपदः प्रज्वलन्दिशः ।
वस्त्रदो राजशार्दूल दिव्याम्बरधरो ययौ ॥
अलंकारप्रदो याति पूज्यमानोऽमरैः सह ।
गोदानेन नरो याति सर्वकामसमन्वितः ॥
भूमिदो गृहदश्चैव विमाने सर्वसंपदा ।
अप्सरोगणसंकीर्णे क्रीडन्याति यमालयम् ॥
हयदो गजदश्चापि यानदश्च नृपोत्तम ।
यमालय विमानेन याति भोगसमन्वितः ॥
मजदोऽनडुदश्चैव कृष्णाजिनमहीप्रदः ।
फलद पुष्पदश्चैव याति संतापसंयुतः ॥
ताम्बूलदो नरो याति तुष्टात्मा यममन्दिरम् ।
विद्यादानरतो याति पूज्यमानोऽब्जजन्मना ॥
सर्वभूतदयायुक्तः पूज्यमानोऽमरैः सदा ।
पुराणपाठको याति पूज्यमानो मुनीश्वरैः ॥
शृण्वन्ति सततं ये तु पुराणं मनुजेश्वर ॥
ते चन्द्रधवलैर्यानैः प्रयान्ति यममन्दिरम् ॥
ज्ञानपूर्णा नरा यान्ति कृते ये तु यमालयम् ।
त्रेतायां तपसा लोकं मम प्राणेश्वरस्य ह ॥
द्वापरे यज्ञविधिना प्रयान्ति पदमव्ययम् ।
कलौ युगे नरश्रेष्ठ पुराणश्रवणादरः ।
प्रयाति परमं स्थानं यत्र गत्वा न शोचति ॥
कलौ युगे मनुष्याणां पुराणश्रवणान्मम ।
कीर्तनाद्राजशार्दूल मम लोके भविष्यति ॥
पुराणश्रवणान्मर्त्यः पुत्रपौत्रादिसंयुतः ।
भुक्त्वा भोगान्यथाकामं तदन्ते मामुपैति च ॥
कलौ देवाः प्रशंसन्ति पुराणश्रवणं परम् ।
परां मुक्तिमवाप्नोति सत्यं सत्यं मयोदितम् ॥

आत्मार्थं वा परार्थं वा यो वदेद्धर्मसंहिताम् ।
प्रयाति सुखमार्गेण देवलोकं सुखावहम् ॥
धर्मशास्त्रे मतिर्यस्य वर्तते कुरुनन्दन ।
गन्धर्वैः स्तूयमानस्तु स याति यममन्दिरम् ॥
इत्यमार्थैर्नरा यान्ति केचिद्यानेन धार्मिकाः ।
गजोष्ट्रवृषभैर्यान्ति विमानेन च भारत ॥
चतुर्दन्तमयं यानमारुह्य यान्ति तत्पथि ।
यान्ति देवगणैः सार्धं दिव्यरूपधरा दिवम् ॥
रथं मणिमयं दिव्यं आयूतद्दर्पावृतम् ।
आरुह्य सुखिनो यान्ति धार्मिकाः पाण्डुनन्दन ॥
केचिद्विमानमारुह्य सूर्यकान्तिसमप्रभम् ।
प्रयान्ति नरशार्दूल मम लोकं सुखप्रदम् ॥
छत्रचामरसंयुक्ताः सेव्यमानाप्सरोगणैः ।
ते चन्द्रधवलैर्यानैः प्रयान्ति मम मन्दिरम् ॥
चैत्ररथनन्दनसंकाशं वनं प्राप्य पथि प्रभो ।
क्रीडयित्वा यथाकामं प्रयान्ति मम मन्दिरम् ॥
शक्तिनश्चत्रिणो भूत्वा द्रुतमीश्वरशेखराः ।
प्रयान्ति मम लोकं वै पुष्पारामप्रदर्शनाः ॥
व्रतोपवासनिरता यज्ञयज्ञपरायणाः ।
जङ्गमो यान्ति राजेन्द्र सत्यलोकं वसुधुता ॥
ब्रह्मप्रतिष्ठाकर्तारस्तथा वैराग्यधर्मदाः ।
अनाथविप्रभर्तारः प्रयान्ति मम मन्दिरम् ॥
नित्यदानपरा राजानित्यं विप्रपूजकाः ।
विप्रपादोदकपरा जङ्गमो यान्ति मन्दिरम् ॥
एवं धर्मपरा यान्ति सुखेन मम मन्दिरम् ।
परत्रेह च राजेन्द्र धर्मं पुष्ट सदा सता ॥
य इदं पुण्यमाख्यानं धर्माधर्मे हि पाण्डव ।
शृणोति सततं भक्त्या मुच्यते सर्वपातकैः ॥

Colophon.

युधिष्ठिर उवाच ।

भगवन्देवदेवेश मायातीत महामते ।
नमामि पुण्डरीकाक्ष त्वत्पादकमलं शुभम् ॥
पापिनो ये तु मनुजाः पापं कृत्वा सुदारुणम् ।
नरकं यान्ति ते नाथ मुच्यन्ते तु कथं प्रभो ॥
यदि मुक्ताः प्रयत्नेन तेषां का गतिरुच्यते ।
किं भवन्ति च ते नाथ कथं गर्भं विशन्ति ते ॥
गर्भस्थाः किं नु कुर्वन्ति जातमात्रा यदूत्तम ।
वृक्षत्वे च पशुत्वे च मृगत्वे कृमियोनिषु ॥
पक्षित्वे पापकर्माणो मत्स्यत्वे च महामते ।
एतान्सर्वान्ममानन्त स्पष्टीकर्तुं त्वमर्हसि ॥

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि नराणां पापकर्मणाम् ।
गर्भस्थानां बहिस्थानां जन्तूनां वर्तनं प्रभो ॥
नरकेषु चिरं मग्ना जन्तवो नित्यदुःखिताः ।
शोचन्तः स्वानि कर्माणि बहुकालं रुदन्ति हि ॥
सर्वानेतान्महाघोरान्नरकाननुभूय च ।
क्रमेण दैवयोगात्तु निर्विशन्ति महीतलम् ॥
सर्वदुःखसमायुक्तं सर्वोपद्रवसंकटे ।
स्थावरत्वं नियोज्यन्ते नश्यन्ति प्रभवन्ति च ॥
*वृक्षगुल्मलतावल्लीगिरयश्च तृणानि च ।*
स्थावरा इति विख्याता महामोहसमावृताः ॥
दवाग्निना हि दह्यन्ते छिद्यन्ते पापकर्मभिः ।
वेपन्ते हि महावातैः शुष्यन्ते चण्डरश्मिभिः ।
हृष्यन्ते वृष्टिभिस्तात शुष्कायन्ते ह्यवृष्टिभिः ॥
फलार्थं छिद्यमानाश्च गृहार्थं भरतर्षभ ।
चितार्थमिन्धनार्थं च महामोहसमावृताः ॥
एवं क्लेशसमायुक्ताश्चिरं तिष्ठन्ति भूतले ।
ततः पञ्चत्वमापन्ना जायन्ते कृमियोनिषु ॥
कृमयस्तु महाभाग सदा दुःखोपजीविनः ।
क्षणार्धमुपजीवन्ति क्षणार्धे तु म्रियन्ति च ॥
बलवद्भिश्च खाद्यन्ते ह्यशक्ता ह्यात्मरक्षणे ।
शीतवातातपक्लेशभूयिष्ठाः क्षुधिता भृशम् ॥
मलमूत्रादिमांसेषु संचरन्तो नृपोत्तम ।
*सुखलेशमजानन्तो म्रियन्ते दुःखजीविनः ॥*
पक्षियोनिं ततः प्राप्य बलिभिः पक्षिभिर्हताः ।
चरणाग्निधनं प्राप्ताः खादिता मांसलोलुपैः ॥
म्रियन्ते केचिदण्डेषु द्विजाता मांसजीविनः ।
केचिद्गृहाङ्गणे बद्धा नीडेषु प्रचरन्ति च ॥
पक्षैर्वियोजिताः केचिद्भक्ष्यन्ते मनुजैर्भुवि ।
केचित्परार्थमाहारमुत्पाद्य क्षुधिता भृशम् ।
बल्यर्थं निहताः केचिच्चेष्टन्ते भुवि मानवैः ॥
केचित्तु भूभृतां गेहे भुक्त्वा ह्याहारमुत्तमम् ।
बध्यन्ते वागुरैः केचिन्म्रियन्ते मनुजैः सह ॥
मार्जारोरगदष्टाद्यैः खाद्यन्ते केचिदन्यथा ।
एवं क्लेशसमायुक्ता निधनं यान्ति पाण्डव ।
पशुयोनिं ततागत्य क्लिश्यन्ते बहुधा नृप ॥
वक्ष्ये तान्मूढधीन्मत्तानात्मपापमजानतः ।
शृङ्गिणो दंष्ट्रिणः केचित्केचित्पादनखायुधाः ।
केचिद्वहन्ति मनुजान्केचिद्भारान्वहन्ति च ।
कुर्वन्ति कलहं केचिदन्योन्यं मदगर्विताः ।
केचित्पदाभ्यां शिरसा केचिद्दन्तैर्नखैः परे ।
कुर्वन्ति कलहं केचिद्दुर्मत्ता वृथा नृप ॥
कर्षन्ति केचिद्दुःखार्ता बद्धास्तिष्ठन्ति केचन ।
मांसाशिनो दुरात्मानः केचित्कर्मविशेषतः ॥
भुञ्जन्ति केचिद्राजेन्द्र दुहन्ति च पिबन्ति च ।
मरणं यान्ति केचित्तु ह्यन्यान्यकलहान्नृप ॥
महापापसमायुक्ता वर्तन्ते नृप कानने ।
पिबन्ति रुधिरं केचित्फलानि च तथापरे ॥
खादन्ति कन्दमूलानि तुषारान्विलिहन्ति च ।
खादन्ति दुर्बलान्केचिद्रमन्ते मातरं परे ।
कामयन्ते तथा चान्ये मातरं स्वमखीजनम् ॥
जातिभेदमविज्ञाय रमन्ते काममोहिताः ।
प्राप्नुवन्ति तथा चान्ये बन्धनं त्वविशङ्कया ॥

---

$G_1$ om the ref $D_1$ राजा ( for युधिष्ठिर ) — ( L 2781 ) $D_1$ जगत्पते ( for महामते ) — ( L 2784 ) G(ed ) केन ( for नाथ ) — ( L. 2787 ) $G_2$ जातमात्रे ( for °मात्रा ) — ( L 2788 ) $G_3$ $M_1$ कृमि ( for क्रिमि ) — After line 2788 $D_1$ ins

139** पाषाणत्वे लताभावे तृणगुल्मकृतौ हरे ।
केन दोषेण जायन्ते पुमांसस्तद्वदस्व मे ॥
वृकव्याघ्रवराहादिगजवानरयोनिषु ।
जायन्ते येन दोषेण तत्सर्वं कथ्यतां प्रभो ॥
उष्ट्रवाजी खगाकार गजसिंहादियोनिषु ।
कस्य पापस्य चनार समुत्पन्ना महामते ॥
रक्ष पिशाचभावेषु शाकिनीडाकिनीतनौ ।
कस्माद्दोषात्प्रजायन्ते जितमात्रा यदूत्तम ॥

— ( L. 2799 ) $D_1$ -निचयश्च ( for °गर° ) — ( L 2815 ) G(ed ) चरणैर् ( for चरणान् ) $D_1$ चिरेण निधनं याता ( for ° ) $D_1$ G(ed ) खाद्यन्ते ( for खादिता ) — ( L. 2816 ) $G_1$ जाता वै मांसजीविभिः ( for ° ) — ( L. 2817 ) $G_1$ मह्राङ्गणे ( for गृहा° ) $D_1$ प्रविशन्ति , $M_1$ प्रचलन्ति ( for °रन्ति ) $G_1$ व्याधैश्च निधनं गताः ( for ° ) — ( L. 2821 ) $D_1$ भ्रमन्ति हारमुत्तमम् ( for ° ) — ( L 2825 ) G(ed.) ततः प्राप्य ( for तत्रागत्य ) — For line 2826, $G_1$ subst

140** मध्ये तामसमत्तानां पापजन्मपरिग्रहान् ।

— ( L 2829 ) $M_1$ केचिन्न्योन्यगर्विता ( for ° ) — ( L. 2832 ) क्लिश्यन्ते ( for कर्षन्ति ) — ( L. 2834 ) G(ed.) मुञ्चन्ति ( for दुहन्ति ) — ( L. 2840 ) $D_1$ मातरं सुखहेतवे ( for ° ) — ( L 2841 ) $G_1$ $M_1$ रमन्ते कामुका हि ताम् ( for ° )

खड्गैर्निकृत्य मांसानि भक्ष्यन्ते कैश्च केचन ।
ताड्यन्ते रज्जुभिर्नित्यं तोयाद्यैर्दण्डघट्टनैः ॥
शीतवातातपक्लिष्टास्तृणभक्षाः सुदारुणाः । [2845]
व्याधिभिः पीड्यमानाश्च ह्यमेध्यामिषभोजिनः ।
सर्वैस्ताड्यमानास्ते म्रियन्ते पाण्डुनन्दन ॥
परदेशं प्राप्नुवन्ति रुदन्तः प्रयातिकर्मैः ।
स्वजनैस्तु परित्यागाद्बाध्यन्ते स्वजनैरपि ॥
एवं पापाः प्रलीयन्ते कर्मभिः पूर्वसंचितैः । [2850]
मृताः पुनः पुनर्जाताः शतशः कोटिजन्मसु ॥
तदन्ते दैवयोगेन पूर्वकर्मफलेन वै ।
मानुष्यं प्राप्नुवन्त्येते जन्तवः कुरुनन्दन ॥
उत्कृष्टनीचकर्माणो जायन्ते बहुयोनिषु ।
नानारूपे भरतश्रेष्ठ पुण्यपापविमिश्रिताः ॥ [2855]
उत्कृष्टा मुखजाः प्रोक्ता मध्यमा बाहुजाः स्मृताः ।
अधमाश्चोरुजाः प्रोक्ताः पादजा ह्यधमाधमाः ॥
चित्रिणः शिल्पिकर्माणः केचित्क्रूरेण कर्मणा ।
रजकाः कुम्भकाराश्च लोहकारास्तथापरे ॥
सौवर्णकाश्च राजेन्द्र कुविन्दा नटपुल्कसाः । [2860]
अन्त्याः किरातवैगाद्या घोषवर्गाकुलेषु च ॥
म्लेच्छास्तु पारदेशेषु पुलिन्दा व्याधनाविकाः ।
आन्ध्रास्तुरुष्ककाम्बोजाः पारसीकाश्च कोङ्कणाः ॥
आम्लायनास्तु तुळुवा आर्यकर्णाटकुञ्जराः ।
लाटद्राविडचोलाश्च पाण्ड्या भरतसत्तम ॥ [2865]
एवमाद्या महाभागा धर्मदोषेण निर्मिताः ।
स्वेनैव कर्मदोषेण भवन्ति ह्यामयाविनः ॥
अन्धाः कुब्जा जडा मूका हीनाङ्गा बधिराः परे ।
खञ्जाः काणास्तथा क्लीबाः कृशाङ्गाः स्थूलकायिनः ॥
केचित्पुण्यावशेषेण साक्षराः प्रभवन्ति हि । [2870]
विद्यादानेषु निरता ब्राह्मणाः पुण्यकर्मिणः ॥
एवं भवन्ति भूपाल अक्षरविद्याप्रदा अपि ।
वेदान्तवादिनश्चैव शब्दशास्त्रविदः परे ॥
काव्यालंकारशीलाश्च पुराणनिपुणाः परे ।
षडङ्गनिपुणाः केचिन्मीमांसातर्कवादिनः ॥ [2875]
ज्योतिषे गान्धर्ववेदे निपुणा नर्तकाः परे ।
भरते वाद्यभेदे च गणिका भेदका अपि ॥
भुञ्जन्ति मेदिनीं केचित्केचिद्ग्रामं तु भूमिदाः ॥
इदं विष्णुरहं विष्णुरहं दासस्तु शार्ङ्गिणः ।
अनेकजन्मसंसिद्धाः केचिदेवं वदन्ति हि ॥ [2880]
ब्रह्मध्यानपराः केचिन्मोक्षशास्त्रविदः परे ।
विश्वं मामेव पश्यन्तो दण्डकाषायधारिणः ॥
ज्ञानयज्ञेन चाप्यन्ये कर्मयज्ञेन चापरे ।
नमस्यन्तश्च मामेव जपन्तो मामकं जपम् ।
एवं मुमुक्षवः पार्थ मय्येवार्पितमानसाः ॥ [2885]
काषायधारिणः केचिज्जटिला विविधैरिह ।
एकदण्डास्त्रिदण्डाश्च मुण्डिनो लोकवञ्चकाः ॥
शिश्नोदरपराश्चान्ये वेदयामगान्तथापरे ।
कपटा नास्तिकाः केचिद्वृथा वै वेषधारिणः ॥
राजसेवां प्रकुर्वन्ति पिबन्ति रुधिरं परे । [2890]
खादन्ति मांसं राजेन्द्र पिबन्ति मधु मैरेयम् ।
कापालिनो जटाधारा बभ्रुकाः प्राणिहिंसकाः ॥
केचित्पुण्यविशेषेण प्रभवः प्रभवन्ति हि ।
दरिद्रा व्याधिता मूर्खा निर्घृणाः प्राणिहिंसकाः ॥
नीचसेवां प्रकुर्वन्ति दुःखमार्गप्रवर्तनात् । [2895]
एवंभूता दुरात्मानः पापिनः पुण्यकर्मिणः ।
प्रहृष्टा दुःखिताः सर्वे प्रहसन्ति रुदन्ति च ॥

युधिष्ठिर उवाच ।

देवदेवारविन्दाक्ष पुराणपुरुषोत्तम ।
तापत्रयातुरा मर्त्याः स्वकर्मणा हि पीडिताः ॥
त्याज्यन्ते कर्मणा केन धर्मे च यदि च स्थिरता । [2900]
तत्सर्वं वद सर्वज्ञ यदुनाथ नमोऽस्तु ते ॥

वैशंपायन उवाच ।

धर्मपुत्रोदितं वाक्यं श्रुत्वा भक्तिसमन्वितम् ।
भगवान्वासुदेवस्तु वक्तुं समुपचक्रमे ॥
प्रोक्तं भगवता यत्तु शृण्वन्ति श्रद्धया नराः ।

विधूय सर्वपापानि ब्रह्मलोकं स गच्छति ॥

Colophon

श्रीभगवानुवाच ।

धर्माधर्मपरीक्षिन्धो श्रेष्ठ जितामित्र शुभव्रत ।
आजन्ममरणान्तानि शृणु कर्माणि देहिनाम् ॥
कामेन बाधिता सर्वे नरास्तु पशुगावत ।
मैथुनं भावमाश्रित्य क्रीडन्ति च परस्परम् ॥
स्तनाश्रयं तु नारीणां शोणितं गुप्तवर्धनम् ।
पुंसां वीर्याश्रयं शुक्रं योनौ संक्रम्य वर्धते ॥
पुनश्च शुक्रवृद्ध्या च नारीशोणितवर्धनम् ।
शुक्रस्य पतने काले जीवांशः पुरुषस्य हि ॥
अन्तर्हितानि तद्गर्भे शोणितेन विवर्धते ।
जीवप्रवेशात्तद्गर्भे पुरुषाय कुरूत्तम ॥
मयूराण्डवन्मासान्मासादूर्ध्वं प्रतिपद्यते ।
चैतन्यमुदरमध्यस्थमासामुपरि पाण्डव ॥
मलमूत्रादिदोषेण यदा भ्रमति सर्वशः ।
पूर्णे मासद्वये पश्चान्मांस्याकार प्रपद्यते ॥
पूर्णे मासत्रये गर्भो हस्तपादे प्रयुज्यते ।
मासानां पञ्चमे वृद्धिः षष्ठे जीवप्रवेशनम् ॥
सप्तमे रोमवृद्धिः स्यादष्टमे वृद्धिमेति च ।
वर्धिष्यति यथा गर्भस्तथा मूत्रं पुरीषकम् ॥
तेनैव लिप्तसर्वाङ्गः क्लेशमेति ददन्वहु ।
कटुम्ललवणात्युष्णतीक्ष्णरूक्षेण तप्यते ।
भ्रमन्वै क्लेशममहद्याति गर्भे नरोत्तम ॥
पूर्वजन्मकृतं पापं स्मरन्क्लेशाद्रुदन्बहु ।
समृद्धज्ञानसंपन्न स्वयमाश्वास वर्तते ॥
गर्भस्य वेदनां सोढुमशक्त प्रलपन्बहु ।
मलमूत्रादिसंबद्धो निन्दमात्म कुरूद्वह ॥

युधिष्ठिर उवाच ।

त्रैलोक्यनाथ सर्वेश मायातीत महामते ।
कथं निन्दन्नमात्मानं कथं वै विलपन्प्रभो ।
गर्भे तिष्ठति पापेन तन्मे ब्रूहि जनार्दन ॥

श्रीभगवानुवाच ।

मलमूत्रादिसंबद्धो देही गर्भे तु यद्वदेत् ।
तं वदामि च ते प्रीत्या शृणु नान्यमना प्रभो ॥

जीव उवाच ।

अहोऽहं पापधीर्नित्यं जन्मकोटिशतेषु च ।
पुत्रमित्रकलत्रार्थमपहृत्य वसूनि च ॥
स्वप्नेष्वपि च साधूनामीदृशी गर्भवेदनाम् ।
प्राप्तोऽहमीदृशः पापी कदा मोक्षो भविष्यति ॥
येषां धर्मपरत्नीनां रत्न कृत्वा तु मोहितः ।
मलमूत्रादिपङ्केषु गर्भेषु परिदुःखितः ।
पापस्य मे कदा मोक्षो भविष्यति न वा खलु ॥
एकोऽहं पापकर्मा हि न्यायागतमपाप्य च ।
तथापि दुःखं बहुलमनुभूतं मया पुरा ॥
मातुस्तापाद्दह्यमानो जरायुपरिवेष्टितः ।
मलपङ्कमहार्थो च मग्नदेहो दुनोमि च ॥
मया पोषितपुत्राद्याः स्वकर्मवशवर्तिनः ।
गतान्यत्र स्त्रियो मित्रं दह्याम्यत्रात्मना त्वहम् ॥
अहो दुःखमहो दुःखमहो दुःखं हि देहिनाम् ।
देहस्तु पापसंजातान्तस्मात्पापं न कारयेत् ॥
पुत्रमित्रकलत्रार्थमन्यद्द्रव्यं हृतं मया ।
तेन पापेन दह्यामि जरायुपरिवेष्टितः ॥
दृष्ट्वान्यस्य स्त्रियं पूर्वं सततं ह्यहमसूयया ।
गर्भाग्निना तु दह्यामि पापात्मा पापसंभव ॥
कायेन मनसा वाचा परपीडासकारिणम् ।

[अ]श्चित (for भर) — After line 2904, G1 ins

143** आजन्ममरणान्तानि संचितानि यदृच्छया ।

Colophon — *Sub-parvan* D1 G1 M1 G(ed) आश्चर्ये पर्वणि शेषधर्मा, G2 शेषधर्मा — *Adh'y name* G(ed) धर्मसार — *Adhy no* D1 G1 : M1 G(ed) 22

(L. 2906) D1 श्रुतवत (for शुभ°) — (L. 2908) M1 कामिनो मनुजाः सर्वे (for °) G1 -वृत्तय (for -जातय) — (L. 2910) G2 सहाश्रयं (for स्तना°) — M1 om (hapl.) lines 2912–2914 — (L. 2912) D1 पुंसः शुक्रस्य वृद्ध्या च (for °) — (L. 2915) G1 G(ed) तद्गर्भे (for °र्भे) D1 जीवप्रवेशस्तद्गर्भे, G2 °शनाद्गर्भे (for °), D1 G(ed) कुरूद्वह (for °त्तम) — (L. 2916) D1 प्रथमाण्डवत् मासं, G1 मयूरवर्णं च मासौ ; G2 मयूराकारवन्मासान्, M1 मयूराण्डवन्मासान् (for °) — (L. 2918) G(ed) बद्धो भ्राम्यति सर्वतः (for °) — (L. 2919) D1 M1 प्रपद्यते (for °त्स्यते) G1 पिण्डाकारं प्रपद्यन (for °) — (L. 2920) G2 पूर्णे मासे तुरीये च (for °) — (L. 2923) G(ed) वर्धते नवमे गर्भे (for °). — (L. 2925) D1 G2 -तृष्णारूक्षैश्च (G2 °पेण) तप्यते (for °) — (L. 2927) G1 भृशम्, M1 वदन् (for बहु) D1 स्मरन्क्लेशान्यनुभूतम् (for °) — (L. 2930) D1 निन्दन्नात्मानमात्मना (for °) — (L. 2934) G1 G(ed) संयुक्तो (for संबद्धो) D1 देही गर्भे विचिन्तयन् (for °) — M1 G(ed) om the ref G2 जन्तुर् (for जीव) — (L. 2938) G2 ईदृशीं गर्भवेदनम् (for °) — (L. 2945) M1 मनस्तापाद्, D1 मातुः कुक्षौ (for मातुस्तापाद्) — (L. 2946) D1 G2 G(ed) अब्धि, M1 मल (for मग्न) — (L. 2947) M1 स्वकर्मपरिवर्तिनः (for °) — (L. 2948) D1 गता स्त्रियस्तथा मित्रा, G(ed) गतान्यतः स्त्री च मित्र (for °) D1 °दह्यामि स्वात्मना त्वहम्, G(ed) दग्धो ह्यत्र स्वकर्मणा (for °) — (L. 2950) D1 देहास्तु पापसंजाताः, G1 देह पापाच्च संजात (for °) G(ed) तु नाचरेत (for न कारयेत्) — (L. 2952) G(ed) दग्धोऽस्मि (for दह्यामि) and -पीडितः (for वेष्टित) — (L. 2953) G2 स तु दृष्ट्वा स्त्रियं

आस्य शिरश्च राजेन्द्र तूष्णीमास्ते सुबोधित ॥
तत पर समुत्थाय रुदन्भूमौ पतन्भृशम् ।
विलपन्वर्तते मोहादनिशाय स्वकर्म च ॥
अहोऽह पापधीर्नित्य सर्वे लक्ष्म्या समावृता ।
पुरार्जितेन पापेन निर्भाग्योऽहं भ्रमामि च ॥
बहुक्लेशस्समापन्न नष्टमासीद्धि मे धनम् ।
मत्तोऽधिकाश्च तिष्ठन्ति ममैवमभवद्गत ॥
दैव एव हि जानाति पुरा येन च यत्कृतम् ।
तवैव मयि दृष्ट च ह्यसन्यैर्बहुभाषितै ॥
गृहक्षेत्रादिव कर्म किंचिन्नापि विचारितम् ।
समृद्धस्य कुटुम्बस्य कथ भवति जीवनम् ॥
मम मूलधन नास्ति वृष्टिश्चापि न वर्षति ।
न लभ्यते वर्तन च राजराधाधिदुस्सहा ॥
रिपवो मा च बाधन्ते कथमन्यत्र वर्तनम् ।
व्यवसायाक्षमश्चाह प्राप्त प्राणहरा रिपु ॥
सखिमित्रसुहृद्वर्गा मातुलश्वशुरात्मजा ।
पोषितापि मया नून मा त्यजन्ति हि निर्धनम् ॥
एव चिन्ताकुलो राजन्विचारयितुमक्षम ।
भाण्यामिकानि दु खानि स्ववशोऽनुभवश्च स ॥
ततो वृद्धत्वमापन्न क्षीयमाणकलेवरा ।
जरापलितदेहोऽसौ कम्पते सतत नृप ॥
श्वासकासादिसयुक्त पीडितो घूर्णलोचन ।
श्लेष्मव्याप्तकण्ठस्तु पुत्रैर्निर्भर्त्स्यते सदा ॥
बाधसे किं वृथा मूढ त्व वृद्धकुणप शृणु ।
जीवित तव धिक्कष्ट कदा मरणमेष्यसि ॥
दग्ध्वारण्ये कदा यामि सौख्य त्वा पापकर्मिणम् ।
त्वयि तिष्ठति मे किंचिद्भाग्य नैव मृतो भव ॥
धन विश्राण्य सर्वं स्व वृथा त्व दोषसे पित ।
अस्मान्वै पालयित्वा च कथ मरणमेष्यसि ॥
निर्घृणस्य तवेदानी पर मरणमेव च ।
परलोके च ते मूढ नरक भवति ध्रुवम् ॥
चोरयित्वा धन सर्वं वञ्चयित्वा तु मामकान् ।
क्व गन्तासि कथ त्वा तु हनिष्ये मृत्युवञ्चनम् ॥
एतत्कष्टतर वाक्य पित्राद्दीना कदस्तदा ।
क्षुरया करुणया वाचा प्रलपन्वदते तदा ॥
अहो कष्टमहो कष्ट वृद्धाना पापजीवनम् ।
मृत मारयते चैव पुत्रोऽस्य बाधते भृशम् ॥
कदा मरणमेष्यामि कदा तृप्तिर्भवेत्तव ।
यत्तु स्व मम सप्राप्त तत्तवैव भविष्यति ॥
इत्युक्त्वा प्रलपन्मूढो ह्यज्ञानात्प्रमदन्वनात् ।
पुत्रान्प्रति महाभाग कृपया वदते तदा ॥
गृहक्षेत्रादिक वस्तु मया नैवोपपादितम् ।
कथ वर्तनमन्यत्र शिशोरस्य भविष्यति ॥
परस्य चेद्धन सर्वं पुत्रादीना कथ भवत् ।
वर्तन किं नु भविता जीविष्यन्ति च त कथम् ॥
मम दु ख बहुतर किं न यास्ये परा गतिम् ।
हा तात अम्ब कान्तेति रुदञ्जन्तुर्विमोहित ॥
मोहात्प्रलपति पुन काले तु समुपस्थिते ।
उपार्जित धन सर्वमानयन्त्वेति सप्रति ॥
आस्ये चार्धं करे चार्धं भुञ्जनमध्य च पुत्रक ।
पूरयस्व च पाहीति लुठमास्ते विमोहित ॥
एव क्लेश बहुतर निन्दन्दुर्निरस्य च ।
क्षुत्तृड्भ्या पीडितो नित्य वदते च पुन पुन ॥
देहि मे चोदक शीत गाढतापात्सुतोऽस्म्यहम् ।
हा हेति पर्यटन्मुर्छन्वदर्यरायति धर्मेर ॥
ततो बन्धुजना गेहे निराहारातिदुःखिता ।
किमर्थं जल्पसे पापिष्ठोचित शीतल जलम् ।
मृतवत्तिष्ठ निष्ठुरि सदा वाचा दहन्ति च ॥
इत्येव प्रलपञ्जन्तुर्निवश कर्मसभ्यवान् ।
निश्चितन्त्यो भवेच्छीघ्र बान्धव परिवेष्टित ॥
ततो यमभटैर्नीत्वा भर्त्स्यमानो यमालयम् ।
प्राप्यते घोरमार्गेण वृक्षराजमभक्षित ।
श्वभि काकैर्गृध्रगणै शार्दूलैडाकिनीगणै ॥
खड्गसूचीसमायुक्ते तप्तसैकतविस्तृते ।
तप्तपाषाणसबाधे तप्तकर्दमसकटे ॥
वह्निवृष्टिसमायुक्ते ह्यस्त्रवृष्टिभिरुत्कटे ।
शिलावृष्टिसमायुक्ते नानाबाधासमन्विते ॥
मार्गे महोपले घोरे कृष्यमाणो ह्यधोमुख ।
नरक पूर्वमत्प्राप्य दु खमेव प्रपद्यत ॥
एव ते मामविज्ञाय मूढा मन्यारपाशगा ।
पुन पुनश्च गच्छन्ति जायन्ते च पुन पुन ॥
ससारपारविच्छेदकारण मा भजन्ति ये ।
ते यान्ति परम स्थान पुनरावृत्तिवर्जितम् ॥
तस्मात्ससारतापार्तो ह्यभ्यसेद्योगमुत्तमम् ।

---

न्कुर्वे सवालश्च (for *) —(L 3069) G(ed) मठे वै वसति श्रणम् (for [b]) —(L 3063) D1 क्वापदाद् (for कृष्येशाद्) —(L 3066) G(ed) तद्वत च दत्त यदि (for [b]) —(L 3868) M1 अथ शिरान् (for आस्य शिरश्च) —(L 3069) D2 लुठन्भृशम् C2 लुठन्पतन् (for पतन्भृशम्) —(L 3072) D1 भ्रमामि (for भ्रमामि) —(L 3074) D1 विमवेन समन्विता (for [b]) —(L 30,5) G1 G(ed) *वम् (for देव) —(L 3076) D1 तदेवं कथित कर्म (for *) —(L 3080) G(ed) सुकृतिन् (for वर्तन) —(L 3083) D1 मयि मित्रसुहृद्भ्राता (for *) —(L 3086) D1 G(ed) आप्याम्यिकानि तु खानि (for *) D1 बाध्यमानश्च सर्वत (for [b]) —(L 3091) G(ed) त्व वृद्धकुणपो यथा (for [b]) —G2 om lines 3099 3100 —(L 3102) G2 श्रुत्वा कष्टतर वाक्यं (for *) G(ed) वाक्यं वै (for वन्ते) —(L 3119) D1 निन्दाणैर्हि परस्य इ (for [b]) —(L 3120) D1 क्षुत्क्षुम्ना (for क्षुत्तृड्भ्या) —(L 3131) G2 अतिघोर (for खड्गसूची).

गङ्गे गङ्गेति यो ब्रूयाद्योजनायुतदूरत ।
मुच्यते सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
मम पादोद्भवा देवी विश्वेश्वरमनीपगा ।
ससेव्या सर्वदा देवै ससारच्छेदलिप्सुभि ॥
तत्सैकत ललाटे तु ध्रियते येन पाण्डव ।
तत्रैव नेत्र शिरसि विधोर्ध्व च धारयेत् ॥
यन्मज्जने महापुण्य दुर्लभं ह्यकृतात्मनाम् ।
साधूना सुलभा गङ्गा प्रीता मोक्षप्रदायिनी ॥
यत्र स्नाता पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य प्रयान्ति मम मन्दिरम् ॥
स स्नात सर्वतीर्थेषु गङ्गा स्मरति य सदा ।
पुण्यक्षेत्रेषु सर्वेषु स्थितवान्नात्र सशय ।
योजनत्रितय गत्वा गङ्गायामिति गच्छति ॥
यत्र स्नातं नर दृष्ट्वा नरा पापयुता अपि ।
मुच्यन्ते सर्वपापेभ्यो नात्र कार्या विचारणा ॥
यदम्भ स्पर्शमात्रेण सर्वपापविमोचित ।
यन्मृद मस्तके धृत्वा देवेशो भवति ध्रुवम् ॥
देहेऽनुलेपनं कृत्वा देहबन्धो न जायते ॥
कदा यास्याम्यह गङ्गा कदा यास्यामि तामहम् ।
अनुतप्यति यो नित्य स विष्णुर्नात्र सशय ॥
योजनत्रितय यस्तु गङ्गायामिति गच्छति ।
सर्वपापविनिर्मुक्तो गङ्गास्नानफल भवेत् ॥
सेय गङ्गा महापुण्या नदीरम्या प्रविश्य वै ।
मेषादिषु च मासेषु पावयत्यखिल जगत् ॥
गोदावरी भीमरथी कृष्णा रेवा सरस्वती ।
तुङ्गभद्रा च कावेरी कालिन्दी सरयूर्नृप ॥
वेत्रावती ताम्रपर्णी शतद्रुश्च महानदी ।
एवमादिषु सर्वासु नदीषु सतत स्थिता ॥
या पुण्यसिथय प्रोक्ता शास्त्रेषु मुनिपुंगवै ।
तासु सर्वजलस्था सा पावयत्यखिलं जगत् ॥
मकरस्थे रवौ गङ्गा जलमात्रे व्यवस्थिता ।
पुनाति स्नानपानाद्यै पावयत्यखिल जगत् ॥
गङ्गाया सदृशो नास्ति पापारण्यदवानल ।
भवव्याधिहरा गङ्गा तस्मात्सेव्या प्रयत्नत ॥
गङ्गाजलकणेनापि य सिक्तो मनुजेश्वर ।
सर्वपापविनिर्मुक्त स याति परमा गतिम् ।
आकल्पजन्मभि पाप सचित यत्नरैर्नृप ।
तत्सर्वं लयमायाति प्रयागे माघमज्जनात् ॥
ब्रह्मादय सुरा सर्वे रुद्रादित्या मरुद्गणा ।
गन्धर्वा लोकपालाश्च यक्षगुह्यककिंनरा ॥
ब्राह्मी माहेश्वरी लक्ष्मी शुचिर्मेनादितिर्दिति ।
घृताची मेनका रम्भा ह्युर्वशी च तिलोत्तमा ॥
सर्वास्ता देवपत्न्यश्च देवा सर्वे युधिष्ठिर ।
माघमासे च सक्रान्त्या चन्द्रसूर्यग्रहे नृप ।
व्यतीपाते पुण्यदिने स्नातुमायान्ति देवता ॥
अश्वमेधसहस्रेण वाजपेयायुतेन च ।
यत्फलं प्राप्यते सद्भिर्गङ्गाया तद्दिने दिने ॥
किमत्र बहुनोक्तेन गङ्गाया सदृश भुवि ।
नास्ति नास्ति नृपश्रेष्ठ तस्मात्सेव्या प्रयत्नत ॥
सर्वकामप्रदा देवी सर्वोपद्रवनाशिनी ।
गङ्गा सेव्या प्रयत्नेन ह्यक्षय मोक्षमिच्छता ॥

युधिष्ठिर उवाच ।

गङ्गा गन्तुमशक्तानां का गति पुरुषोत्तम ।
तीर्थं किं पुण्डरीकाक्ष पवित्रं पापनाशनम् ॥
लोक पुनाति कि नाथ पूज्य किं पुण्यकर्मणाम् ।
एतन्मे ब्रूहि लोकेश त्वदन्य को वदेन्मुनि ॥

भगवानुवाच ।

हन्त ते कथयिष्यामि पवित्र पापनाशनम् ।
सालग्रामशिलातीर्थमशक्ताना पर नृप ॥
सालग्रामार्चनाद्राजन्मानवा गतकिल्बिषा ।
प्रयान्ति मम लोकं वै दीप्यमाना दिशो दश ॥
महद्विमानमारूढा गन्धर्वैरुपसेविता ।
मम लोक प्रयान्त्येव विश्वास कुरु पाण्डव ॥
मुमुक्षुभिरह पार्थ पूज्य एव हि सर्वदा ।
सालग्रामशिलाचक्रे वज्रकीटविनिर्मिते ॥
य पूजयति मा चक्रे सालग्रामे नृपोत्तम ।
राजसूयसहस्रेण तेनेष्ट प्रतिवत्सरम् ॥
अपि पापसमायुक्ता धर्मकार्यविदूषका ।
सालग्रामार्चनात्पार्थ नैव यान्ति यमक्षयम् ॥
सालग्रामे यथा प्रीतिस्तथा लक्ष्म्या न विद्यते ।

*) —(L 3211) D1 तीर्थेषु (for सर्वेषु) — D1 G1 M1 G(ed) om line 3212 —(L 3215) G1, 2 M1 G(ed) यदङ्ग (for यदम्भ ) —(L 3218) G1 2 M1 G(ed) द्रक्ष्यामि (for यास्यामि) —(L 3219) D1 विष्णुलोके महीयते (for *) — G2 om line 3220 —(L 3224) G2 G(ed) भीमनदी (for °रथी) —(L 3227) G2 पुण्यासु (for सर्वासु ) — D1 om (hapl ) lines 3228–3230 —(L 3229) G(ed) °जलस्नानात् (for °स्था सा ) —(L 3233) G1 G(ed) °सेव्या (for सेव्या) —(L 3238) M1 रुद्राग्न्यिमरुद्गणै (for *). —(L 3240) G2 मना दक्षुर (for मेनादितिर्) — G2 om. lines 3244–3246 —(L 3248) D1 क्षेत्र (for नास्ति)

—(L 3250) G2 सर्वथा मनुजै शुभे (for *) —(L 3251) G2 गङ्गाया तु च सिक्ताना (for *) —(L 3254) G2 स्वकृतस्य महामते (for *) — G1 कृष्ण (for भगवान्). —(L 3255) G2 शृणु त्व, M1 अह ते (for हन्त ते) —(L 3256) D1 सर्वेश्वर, G1 G(ed) परतप (for पर नृप) G2 भक्तानां परम नृप (for *) — G2 om lines 3257–3260 —(L 3257) D1 M1 शालग्रामार्चना राजन् (for *). — *After line 3264, G2 ins*

146** पूजयन्तो च विशेषा विश्वास कुरु पाण्डव ।

— G2 om lines 3264–3266 —(L 3264) D1 M1 शाल°

एकादश्यां दिने यस्तु भोक्तुमिच्छति सुव्रत ।
स भोक्तुं सर्वपापानि स्पृहयालुर्न संशय ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ॥
अन्नमाश्रित्य तिष्ठन्ति समासे हरिवासरे ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
एकादश्यां निराहार स्थित्वा याति परां गतिम् ॥
एकादशी महापुण्या मम प्रियकरा तिथि ।
सेवित्या सर्वदा विप्रैः संसारच्छेदलिप्सुभिः ॥
स्वर्गमोक्षप्रदा ह्येषा सर्वपापप्रणाशिनी ।
सर्वसंपत्करी ह्येषा सुकलत्रप्रदायिनी ।
सुपुत्रदायिनी ह्येषा सर्वविद्याप्रदायिनी ॥
बाल्ये वयसि वार्धक्ये यौवने वा नरेश्वर ।
उपोष्यैकादशीं भक्त्या गमिष्यन्ति दिवं हि ते ॥
किमत्र बहुनोक्तेन मोक्षद पाण्डुनन्दन ।
तस्मात्त्वं सर्वकालेषु ह्येकादश्या व्रतं कुरु ॥
इति ते कथितं सर्वं पुण्यमेकादशीव्रतम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुक्तोऽनन्तं समश्नुते ॥

Colophon

सूत उवाच ।

एवं वदति विप्रेन्द्रा धर्मे कृष्णे जनार्दने ।
आहूतो बलदेवेन दूतोऽभ्येत्य वचोऽब्रवीत् ॥
नमस्ते सर्वलोकेश वासुदेव जगत्पते । [3345]
शत्रुभिः पीडितान्बन्धून्स्वकीयान्पाहि सुव्रत ॥
द्वारवत्युपकण्ठं तु निरुद्धं पौण्ड्रकेण ते ॥
बलेन महता देव सराजशतेन हि ।
अहं योद्धाथ वा त्वं वा किं करोमि च तद्वद ॥
मन्मुखेन भवानित्थमुक्तस्त्वं सीरपाणिना ।
न शक्यमत्र वस्तुं मे यास्यामि भवदाज्ञया ।
ज्ञातुं वचोभिर्न कार्यं तद्भवान्गन्तुमर्हति ॥
एवमुक्तो जगन्नाथ प्रहृष्टः सर्ववेदिना ।
दूतेन तं महस्वेति गाङ्गेय प्रत्युवाच ह ॥
देवप्रश्न महाभाग श्रूयतां वचनं मम ।
पाण्डुना त्वं हितार्थाय शेषधर्मं वद प्रभो ॥
त्वया नाविदितं किंचिन्नारदादपि श्रुतम् ।
नारदाय मया पूर्वमिमं धर्मं सुविस्तरम् ॥
प्रोक्तं सुरनदीतीरे तस्मादेतत्त्वया श्रुतम् ।
तत्सर्वं वद तत्त्वेन पाण्डवेभ्यो बहुश्रुतम् ॥ [3360]
धर्मेण रक्ष तान्सर्वानिमास्त्वं सततं प्रियान् ।
तव कीर्तिर्भवेच्छुद्धा लोकेऽस्मिन्विसारिणी ।
अस्य शेषं भवान्वेत्ति पाण्डुपुत्रान्प्रबोधय ॥
इत्युक्तो वै जगन्नाथो देवदेवो यदूत्तमः ।

(for महाक्षत्र ) — (L 3321) G2 मोक्षदं सर्वदाश्चर्यं (for ᵃ) — G2 om 3324-3325 — (L 3328) G1 M1 ब्रह्महत्यासमानि च (for ᵇ) — After line 3333, D1 ins

151** आशौचे दो यथा श्राद्धमाशौचान्त विधीयते ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥
अस्तामिते सूर्ये यथा श्राद्धं परेऽहनि ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥
एकादश्यां न होतव्य निषिद्धफलेप्सुभि
जुहुयाद्यदि मूढात्मा स गोवधफलं लभेत् ॥
कर्मलोपभयाद्यस्तु व्रतभङ्गं करोति य ।
सोऽभयव्रतभङ्गं हि प्राप्नोत्येव न संशय ॥
श्रुता हि राजधर्मेश निषिद्धफलेप्सुभि ।
व्रतलोपभयाद्वापि कार्यं तत्फलदायकम् ॥
प्रायश्चित्तादिकं कर्म तथा मत्स्मृणे विभो ।
तेनैव सकलं पापं विनश्यति न संशय ।
तस्मात्तिथिद्वय युक्ता कार्यैकादशी तिथि ॥

— (L 3334) G(ed) सर्वसंपत्करी ह्यथा (for ᵇ) — (L 3335) G(ed) सर्वमोक्षप्रदा ह्यथा (for ᵃ) G1 सर्वपापप्रणाशिनी, G(ed) पुत्रपौत्रप्रदायिनी (for ᵇ) — D1 om line 3336 — (L 3336) G(ed) कलत्र (for सुपुत्र ) — (L 3337) D1 यौवने च नृपात्तम (for ᵃ) — For line 3337, G(ed) sust ,

152** बाल्ययौवनकौमारवार्धकेषु नरेश्वर ।

— After line 3340, G2 ins

153** सर्वकामप्रदा ह्येषा मोक्षदा मुक्तिदा विभो ।

— After line 3341 D1 G2 ins

154** श्रोतृणां सर्वपापघ्न नकिर्णं च तथा विभो ।

— (L 3342) G2 मुक्ता नाकं व्रजन्ति हि (for ᵇ). — For line 3342, G(ed) subst

155** शृणोति य स पापेभ्यो मुक्त सनातकमश्नुते ॥

Colophon — *Sub-parvan* D1 G1 M1 आश्चर्यपर्वणि — *Adhy name* D1 तीर्थोदेशधर्मा , G2 G(ed) दानधर्मो — *Adhy.* नामैकादशीवर्णनम् , G(ed) भागवताद्यादिमाहिमावर्णनम् — *Adhy. no* D1 G1 2 M1 G(ed) 25

— After the above, G(ed) reads lines 6550-6646 (L 3345) D1 नमोऽस्तु ते ( for जगत्पते ) — (L 3347) D1 पौण्ड्रके सह , G(ed) °कादिना ( for °केण ते ) — (L 3350) G2 श्रीकृष्ण मन्मुखेनोक्त , G(ed) संमुखे भगवन्निश्च (for ᵃ) — G2 om lines 3352-3355 — (L 3353) M1 वक्तुम् ( for गन्तुम् ) — Before line 3355, M1 ins श्रीभगवान्· — (L 3355) D1 महाप्राज्ञ ( for °भाग ) — (L 3356) G(ed) पाण्डवाना ( for पाण्डुना त्व ). — (L 3358) G(ed) प्रोक्त ( for अयं धर्मं ( for इमं धर्मं ) — (L 3359) G(ed) [illegible] ( for ᵇ) — (L 3361) [illegible] वेद्मि ते ( for [illegible] ) — Before line 3364, D1 ins सूत उवाच — (L 3365) G(ed.) [illegible] श्रीभगमित्र ( for मित ) — Before line 3366, D1 ins श्रीभग-

अग्निर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यो सुमतिर् आयुरामवान् ॥
विश्वामित्रः स्थूलशिराः संवर्तः प्रमतिर्दमः ।
रैभ्यो बृहस्पतिर्व्यासो धवनः काश्यपो ध्रुवः ॥
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
उशनाथ भरद्वाजो यवक्रीतस्त्रितस्तथा ॥
स्थूलाक्षश्च महाकक्षः कण्वो मेधातिथिः कुशः ।
नारदः पर्वतश्चैव सुशर्मा सामशर्मवान् ॥
मित्रो भृगुः सत्यकीर्तिः शतानन्दः कृतव्रणः ॥
जामदग्न्यस्तथा रामः सौम्यः संवर्तकस्तथा ।
मन्वादिस्मृतिकर्तारः कृष्णाः शान्धि हि भारत ॥
कृष्णः सर्वगुरुः साक्षाद्देवानां हितकृत्प्रियः ।
सर्वगः सर्वभूतात्मा सर्वयोगीश्वरो विभुः ॥
आदित्यश्चन्द्रमा राजन् नक्षत्राणि च भूतलम् ।
अमृतं देवतानां च नराणां च नराधिप ॥
पितॄणां च स्वधा सोमः पशूनां तृणसंचयः ।
पुरुषाणां बलं रूपं धनं विद्या सुगं महत् ॥
स्त्रीणां सौन्दर्यसौभाग्यं पातिव्रत्यं परं प्रियः ।
यक्षास्मा मुनयो योगी विबुधाश्चाप्सरोगणाः ।
इन्द्राद्या लोकपालाश्च कृष्णो हि जगतीपतिः ॥
यो राजा धर्मधारी लोके यादवेन्द्रं तु विद्धि तम् ॥
पुराणधर्मशास्त्रेषु निष्ठा यस्य प्रवर्तते ।
तं विद्धि भरतश्रेष्ठ वृष्णीनां पतिमव्ययम् ॥
अगोचरोऽव्ययोऽनन्तो महीभर्ता महाद्युतिः ।
तीर्थस्पर्शी शुभाचारस्तथा पुण्यतिथिर्गुरुः ॥
मत्स्यः कूर्मवराहश्च नारसिंहश्च वामनः ।
रामो रामश्च कृष्णश्च बौद्धः कल्की कलानकः ॥
त्रिविक्रमो नरश्चैव नारायणसुरेश्वरौ ।
कृतत्रेताद्वापराश्च धर्मनाशकरः कलिः ॥
उद्धवो वासुदेवश्च सात्यकिः साम्ब एव च ।
अनिरुद्धो गदश्चैव प्रद्युम्नो लोकनायकः ॥
वसुदेवो नन्दगोपा अश्वत्थामा कृपश्च सः ।
द्रोणो भीष्माभिधानोऽहं कर्णशल्यौ महाबली ॥
धृष्टद्युम्नः शिखण्डी च द्रौपदी यज्ञसंभवा ।
भीमार्जुनौ यमौ कुन्ती विराटो विदुरस्तथा ।
त्वं च सर्वे नरेन्द्राश्च कृष्ण एव न संशयः ॥
भूभारहरणार्थाय एतान्सृष्ट्वा स्वमायया ।
वसुदेवकुले जातो लोकानुग्रहकाम्यया ।
हरिष्यति भुवो भारमल्पकालेन नृपोत्तम ॥
धार्तराष्ट्रानिमान्सर्वानन्यांश्चैव पापकर्मिणः ।
हरिष्यति नृपानद्य त्वदर्थं पाण्डुनन्दन ॥
महाभारतनाम्ना ते महद्युद्धं भविष्यति ।
राजंस्त्वं राज्यलाभाय कृष्णं पूजय भक्तितः ॥

वैशंपायन उवाच ।

विभूतिं वासुदेवस्य श्रुत्वा प्रीतो महीपतिः ।
युद्धेप्सुभिश्च भीमाद्यैः सहितो वाक्यमब्रवीत् ॥
किं करिष्यति गाङ्गेय कृष्णः कपटवेषधृक् ।
पालयिष्यति नो देवः सहलिष्यति वा वद ॥
भवान्वेत्ति हि तत्सर्वं तस्य भृत्योऽसि सुव्रत ।
तं समाचक्ष्व गाङ्गेय पाहि मां शत्रुपीडितम् ।

भीष्म उवाच ।

पालयिष्यति धर्मात्मा कृष्णो युष्मान्न संशयः ।
तस्माद्धर्मे सदा भक्तिर्जायते ते नराधिप ॥
धर्मं भजस्व कौन्तेय सत्सङ्गं कुरु सर्वदा ।
तस्य पूजामहोरात्रं कृत्वा सिद्धिं गमिष्यसि ॥

युधिष्ठिर उवाच ।

धर्मप्रदानि तीर्थानि पुण्यक्षेत्राणि भारत ।
यानि पुण्यप्रदानीह तानि मे परिकीर्तय ॥

भीष्म उवाच ।

पुरा मार्कण्डेयमारेण समेत्य गजसाह्वयम् ।
महावक्षोऽस्तु गान्धार्यां ममापि विदुरस्य च ।
श्रोतस्य सकलं धर्मं प्राह तत्र महामनाः ॥
पुरा भगवता प्रोक्तं लोकनाथेन विष्णुना ।
नारदाय तात्मैतं गदितं ब्रह्मसूनवे ।
सनत्कुमारमुनये तस्माच्छ्रुतमिदं मया ॥
एवं परंपराप्रोक्तमिमं धर्मं हि पाण्डव ।
तत्तेऽहं संप्रवक्ष्यामि यद्गुप्तिस्य मायया ॥
स वै नारायणो देवः परमात्मा जगद्गुरुः ।
अन्तर्यामी जगद्रूपी वेदराशिरतन्द्रितः ॥
स भगवान् सर्वलोकेषु गत्वा चैव पुनः पुनः ।
प्रवक्ष्यामि कुरुश्रेष्ठ तदीयं धर्ममुत्तमम् ॥

वैशंपायन उवाच ।

एवं गदितुमुत्सुकः धर्मं धर्मभृतां वरः ।

---

3433) M1 सुधर्मा (for सुशर्मा) G3 सुशर्मा च सुशर्मवान् (for $^{b}$) —(L 3434) G3 G(ed) शतानन्दो मु(G3 मृ)कण्ड (for $^{b}$) —(L 3435) D1 उत्तमा जामदग्न्योऽथ (for $^{a}$) —(L 3438) G(ed) प्रिय (for विभु) —For line 3444, D1 subst

157** यक्षाश्च मुनयो योगा विबुधा द्विजो गणाः ।

—(L 3450) D1 सदाचार ; G3 M1 सदा° (for शुभा°) —(L 3452) G1 3 M1 G(ed) रामश्च (for कृष्णश्च) G1 3 G(ed) कृष्ण (for बौद्ध) M1 कृष्ण कल्की जरादेन (for $^{d}$) —(L 3454) D1 M1 कृत त्रेता द्वापरश्च (for $^{a}$) —(L 3457) G1 उग्र ना, G(ed) वासुदेवो (for व°) —(L 3458) G3 G(ed) भीष्मो (for द्रोणो) —(L 3460) D1 द्रुपदश्च (for विदुरश्च) —(L 3463) G(ed) नाशयित्वा (for भारमल्प) —G3 om the ref —Before line 3471, M1 G(ed) ins युधिष्ठिर —(L 3478) G(ed) पूजय सदा (for महोरात्रम्) —(L 3479) G1 क्षेत्राणि (for तीर्थानि)

पाण्डवा श्रोतुकामास्ते प्रणम्य निभृता स्थिता ॥
ऋषयो द्विजमुख्याश्च दीक्षिता वनवासिन ।
सश्रद्धा स्थिता सर्वे श्रोतुं धर्मकथामृतम् ॥
कृते दृष्टे श्रुते धर्मे कीर्तिते चानुमोदिते ।
नाशयेत्सर्वपापानि कृष्ण एव जगन्मय ॥

Colophon

वैशंपायन उवाच ।

इति सप्रणता पार्था धर्मे कृष्णे जनार्दने ।
श्रोतुकामाश्च ते सर्वे ब्राह्मणा ब्रह्मवित्तमा ॥
वासुदेव चिरं ध्यात्वा धर्मपुत्र प्रतापवान् ।
नत्वा पप्रच्छ धर्मात्मा धर्मं सुरनदीसुतम् ॥

युधिष्ठिर उवाच ।

कर्मणा येन मनुजा नरक यान्ति दु खिता ।
केया सद्गत वा तात लभते स्वर्गतपदम् ॥
ऋणीना च प्रदातृणा ऋणस्यस्य गतिस्तु का ।
तत्सर्वं वद तत्त्वेन देवव्रत महामते ॥

भीष्म उवाच ।

शृणु राजन्पुरा वृत्तमाश्चर्यं पुण्यवर्धनम् ।
भद्रकस्य तु संवाद गोवृषस्य महामन ॥
काश्मीरे पुण्यदेशे तु सर्वसंपत्समायुते ।
ब्राह्मणो भद्रको नाम सर्वाचारविवर्जित ॥
कृषिको दु खभाङ्मूर्खो सदा वेदविरोधकृत् ।
पितृमातृकुलैस्त्यक्त शूद्रभाजी तु कामुक ।
राजदण्डभयाद्भीतो देशान्तरमुपागमत् ॥
तस्मिन्देशे चिर कालं स्थित्वा राजेन्द्र दुर्मति ।
नीलवर्णमनड्वाह महिष समचोरयत् ।
तौ वञ्चयित्वा तद्रात्रौ स्वदेश प्राप्तवान्पुन ॥

वैशंपायन उवाच ।

पितामहस्य वचन श्रुत्वा विस्मयकारकम् ।
धर्मसूनुमहाप्राज्ञ इद वचनमब्रवीत् ॥

युधिष्ठिर उवाच ।

किं कर्म कृतवांस्तात स्वदेशे ब्राह्मणाधम ।
कया वृत्त्या प्रवृत्तोऽभूद्बान्धवेभ्य किमब्रवीत् ॥
तत्सर्वं वद तत्त्वेन देवव्रत महामते ।
कृष्णो यदा म कृपया द्वारकेश्वराखिलेश्वर ॥

भीष्म उवाच ।

भद्रके ह्यागते तस्मिन्बान्धवा परिशङ्किता ।
ऊचु परमधर्मज्ञा पुरस्तस्यातिकोपिता ॥
किमर्थमागतो भद्र पापरूप भयंकर ।
गच्छ गच्छ पुनस्तूर्णं बन्धूनामहितंकर ॥
परुषं स्वजनस्यैदं निशम्य वचनं तदा ।
भद्रक प्राह तान्सर्वान्विश्रम्भधर्मनन्दन ॥
भो भो बन्धुजना सर्वे शृणुध्व वचनं मम ।
यदा भवद्भिर्निरस्तस्तदा गङ्गामुपागमम् ॥
तत्रस्था ब्राह्मणा सर्वे सत्कर्मपरितोषिता ।
युष्मास्वेतौ महाभागा मम सर्वे ददुश्च ते ॥
तच्छ्रुत्वा बान्धवा सर्वे वचन चेदमब्रुवन् ।
सुखी भव महाभाग गार्हस्थ्य वै सदा कुरु ।
गार्हस्थ्येन तु धर्मेण महच्छ्रेयो भवेद्ध्रुवम् ॥
तानेव वञ्चयित्वा स भद्रक पापनिश्चय ।
युगधरौ तु तौ कृत्वा ययौ कृषिभुव प्रति ॥
किमिद बन्धुभि पृष्टो गृहरूपोऽतिपापकृत् ।
प्रारम्भ करवाणीति बान्धवेभ्यस्तदाब्रवीत् ।
सभ्रम कृतवान्राजन्भद्रक पापनिश्चय ॥
ततो हल समादाय दीर्घं दृढवरमद्भुतम् ।
उपानहौ चर्मरज्जु वेणुदण्डसमन्वितम् ॥
स्कन्धे राजन्वहन्धीर कम्बलेनावगुण्ठित ।
पूर्वपश्चिमलाङ्गूल कौपीनपरिशोभित ।
ययौ कृषिभुव राजन्भद्रक पापनिश्चय ॥
गच्छ गच्छेति पापात्मन्पास्यामि रुधिर तव ।
इति जल्पन्स मूर्खो वै तृष्णया परिपीडित ।
भद्रक पापकृत्क्रूरो द्रुत भूमिं चकर्ष स ॥
मध्याह्नसमये श्रान्त महिषं समपीडयत् ।
गाढदु ख विशेषेण भानुरश्मिप्रपीडितम् ॥
आश्वास्य वदनं स्वेन रसनालम्बिताननं ।
अपत सहसा भूमौ सृतवक्त्रोरुदर्शन ॥
त विलोक्य तृषायुक्त विह्वल भुवि चेष्टितम् ।

— (L 3491) G1 M1 -वालेषु G(ed) लोकेश (for °षु) — G2 om the ref — (L 3494) D1 निर्वृत (for निभृता) — (L 3496) G2 श्रोतु धर्मामृत द्विजा (for °) — (L 3497) G(ed) दृष्ट (for धर्मे) G2 कृतधर्मे श्रुत दृष्टे (for °)

Colophon — *Sub-parvan* D1 आश्वमेधिके शपधर्मा, G1 2 M1 शेषधर्मा G(ed) अ श्वमेध — *Adhy name* G(ed) श्रीकृष्णमहिमा — *Adhy no* D1 G1 2 M1 26, G(ed) 27

(L 3500) G2 G(ed) लोकरामाद् (for श्रोतु°) — G1 2 om the ref — (L 3505) D1 G(ed) ऋणानां (for ऋणीना) — (L 3509) M1 G(ed) समावृत (for °युते) — (L 3511) G2 विरोधक (for °कृत्) — (L 3512) G(ed) भोगी (for भोजा) — (L 3516) G1 तद्राष्ट्राद (for तद्रात्रौ) — (L 3517) G2 G(ed) तद्वाक्य (for वचन) D1 श्रुत्वा विस्मयमागत (for °) — G2 M1 om the ref — (L 3519) G(ed) स्वदेशे भद्रको द्विज (for °) — (L 3520) M1 G(ed) प्रवर्तेन (for प्रवृत्तोऽभूद्) — (L 3530) G(ed) सत्यक्त (for निरस्त) G1 G(ed) उपागत (for °गमम्) — (L 3532) M1 महासत्त्वौ (for °भागा) — (L

स्नानहीनः सदा पापी तथा पितृविदूषकः ।
गुरुदेवान्द्विजान्बन्धूनपि मित्रं गवां कुलम् ।
पुराणधर्मशास्त्राणि निन्दको नरकं व्रजेत् ॥
स्नाने जपे तथा होमे भोजने देवसंनिधौ ।
बहुभाषी नरो यस्तु दारुणं नरकं व्रजेत् ॥
परदारपरद्रव्यपरक्षेत्रापहारकाः ।
परनिन्दापरा मूर्खास्ते वै निरयगामिनः ॥
ब्राह्मणेभ्यः प्रतिश्रुत्य दास्यामीति धनादिकम् ।
पश्चाद्दास्यामि यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥
नास्ति नास्तीति यो ब्रूयादतिथौ गृहमागते ।
तस्य जिह्वां समुद्धृत्य घोरास्तु यमकिंकराः ।
दहन्ति युगपर्यन्तं कुम्भीपाकेऽतिदारुणे ॥
पानीयमन्नदानं च तथा ताम्बूलभोजने ।
तृणकाष्ठाग्निशाकानामदाता नरकं व्रजेत् ॥
सर्वेषामेव पापानां पापमेकं महत्तरम् ।
लाङ्गलाकर्षणं पार्थ महापापं प्रकीर्तितम् ।
यः सदा कर्षते मूर्खो ब्राह्मणो भ्रूणहा हि सः ॥

देवाः पितृगणा विप्रास्तथा गन्धर्वचारणाः ।
हलकर्म प्रकुर्वाणं तथा लक्ष्मीपतिः प्रभुः ।
हीपुरुषं तु समुद्वीक्ष्य निर्भाग्यो भव नारकी ॥
युष्मत्कुलप्रसूता ये सर्वकर्मबहिष्कृताः ।
दरिद्रा अङ्गहीनाश्च सर्वे संतानवर्जिताः ।
बन्धुभिः संपरित्यक्ता गन्तारो नरकं ध्रुवम् ॥
कुम्भीरौरवकाकोलक्षेपयन्त्रामिपत्रकम् ।
तप्ततैलं तप्तकुम्भं घटायन्त्रमधोमुखम् ॥
व्याघ्रशूलं वज्रकीटं वृकराक्षसभक्षणम् ।
एतेषु नरकेष्वेते पतिष्यन्ति न संशयः ॥
एवं शप्ताः पूर्वकाले स्वं स्वं धाम ययुस्तदा ।
तस्मात्सर्वेषु कालेषु कृषी पापं न कारयेत् ॥
सर्वभूतहितः शान्तो दान्तः परमबुद्धिमान् ।
स्वधर्मनिरतो यो वै स याति परमां गतिम् ॥

भीष्म उवाच ।

एवं निशम्य राजेन्द्र रुदन्भूमौ पपात ह ।
पापबुद्धिं विसृज्याशु किं करोमीति चाब्रवीत् ॥
कृतकृत्योऽसि भद्र त्वं गच्छ सौम्य यथासुखम् ।
त्वमस्मादारुणान्मुक्तः पापात्खलु सुदारुणात् ॥

गोपतिरुवाच ।

न गच्छामि महाभाग पूर्वं तव ऋणं गतः ।
तद्धनं तव हस्ते च दत्त्वा यास्यामि निर्वृतिम् ॥

भद्रक उवाच ।

कथं त्वमृणवांस्तात महिषो वापि किं नु मे ।
ऋणग्रस्तः कथमहं तत्सर्वं कृपया वद ॥

गोपतिरुवाच ।

निष्क्रयं गृहीत्वा तु तव हस्तान्महामते ।
ईदृशं जन्म संप्राप्तं ततो घोरं भयावहम् ॥
इदानीमुचितं ब्रूहि ऋणात्तस्मात्कथं कराः ।
मुच्येयं हि कथं तात तदुपायं वदस्व ह ॥

भद्रक उवाच ।

त्वयोक्तं तद्धनं दत्त्वा मम हस्ते महामते ।
महिषेण समं गच्छ ऋणान्मुक्तो न संशयः ॥

गोपतिरुवाच ।

पौरुषं कुरु विप्रेन्द्र यथातथ्यं ब्रवीमि ते ।
भावयाम्यृणवान्कश्चिच्छूद्रो ह्यागमिष्यति ।
निष्क्रयं तस्य हस्ताद्गृहीत्वा वा विसर्जय ॥

भीष्म उवाच ।

एवमुक्त्वा तु राजेन्द्र नमस्कृत्वा तु तं द्विजम् ।
तूष्णीमास्ते गवां नाथो ब्राह्मणो विस्मयं वहन् ॥
एतस्मिन्नन्तरे शूद्रोऽप्याययौ विप्रसंनिधिम् ।
सोऽतीव त्वरया युक्तो वाक्यमेतदुवाच ह ॥
विप्राद्य श्रूयतामेतौ विक्रीयेते त्वया यदि ।
निष्क्रयं प्रदास्यामि मूल्यमतो प्रदीयताम् ॥

विप्र उवाच ।

तथा करोमि ते शूद्र तद्धनं च ददस्व मे ।
गोपतिं माहिषं चेमौ तव दास्ये न संशयः ॥

भीष्म उवाच ।

ब्राह्मणस्य वचः श्रुत्वा वृषलो दत्तवान्धनम् ।
स्वगृहं प्राप्तवान्राजंस्तावादाय ततः परम् ॥
बद्ध्वा गोष्ठे दृढं शूद्रे भुञ्जमाने सुतैः सह ।
अन्योन्यकलहाद्राजन्रज्जुभिः परिपीडितौ ।
अभूतां तत्क्षणादेव परासू पतितौ भुवि ॥

— After line 3607 D1 G1 M1 G(ed.) ins. an addl. colophon [ *Subparvan* D1 आश्चर्यपर्वणि धर्मो, G1 M1 G(ed) शेषधर्मो — *Adhy. name* D1 G1 M1 27 G(ed) 28 ]. — D1 गोपतिर् (for भद्रक्) —(L 3612) M1 अस्नात सर्वदा पापी (for ¹) — M1 om. lines 3615–3616 —(L 3620) G(ed) वक्ति (for ब्रूयाद्) G(ed) दारुणं नरकं व्रजेत् (for ⁴) — After line 3620 D1 G1 ins.

159** पितृमातृगृहार्थं च धर्मोद्धुरे शुभान् ।
निहत्य गवां पूजामकृत्वा नरकं व्रजेत् ॥

—(L 3625) D1 तृणकाष्ठानि शाकानि (for ¹) —(L 3643) G1 M1 न रुदन् (for राजेन्द्र) and भूयो भद्र (for रुदन्भूमौ) — Before line 3646, G1 ins. भद्रकः — For line 3646 G1 subst.

160** तद्धनं च निर्मुक्त्य गच्छ गच्छ सुदारुणात् ।
—(L 3648) M1 G(ed) तु (for च) —(L 3652) D1 G(ed) मुखोर च (for ततो घोर) —(L 3658) D1 ऋणद (for ऋणवान्) —(L 3664) D1 विप्राद्य; G1 हे विप्र (for विप्राद्य). —(L 3665) G(ed) प्रदेहि मे (for प्रदीयताम्)

वैशंपायन उवाच ।
देवदेवारविन्दाक्ष मायातीत महामते ।
त्वत्पादकमलं वन्द्यं नमामि सतत विभो ॥
इति निश्चित्य मनसा धर्मराज पितामहम् ।
विनयावनतो भूत्वा प्राञ्जलिर्वाक्यमब्रवीत् ॥
युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
मोक्षोपाय सता सङ्ग यन्मे तद्ब्रूहि पापहम् ॥
भीष्म उवाच ।
पापिनो मनुजस्येह सत्सङ्गान्मुक्तिरिष्यते ।
परया हरिभक्त्या च शाश्वती भवति प्रभो ॥
शृणु पार्थ महाभाग माहात्म्य शार्ङ्गधन्विन ।
तस्य संनिधिमात्रेण नराणा मुक्तिरव्यया ॥
नारायण पर ज्योतिर्ज्योतिषा ज्योतिरुत्तमम् ।
ये प्रपन्ना महात्मानस्तेषा मुक्तिर्हि शाश्वती ॥
अत्रैवोदाहरन्तीममितिहास पुरातनम् ।
सर्वपापहर पुण्यमायुर्वर्धनमुत्तमम् ॥
आसीत्पुरा महाराज क्षत्रियो लोककण्टक ।
नक्षत्रवर्मा बलवान्मूर्खो वै लोकपीडक ॥
परदारपरद्रव्यग्रहणे सततोद्यत ।
अधर्मनिरतो नित्य बहुधा जनपीडक ॥
हतवान्ब्राह्मणान्गाश्च शतशोऽथ सहस्रश ।
देवस्वहरणे नित्य परस्वहरणे तथा ।
उद्युक्त सर्वदा राजश्चोरव्याधैश्च सेवित ॥
तेन पापान्यनेकानि कृतानि सुबहूनि च ।
न तेषा शक्यते वक्तु सख्या वत्सरकोटिभि ॥
स कदाचिन्महाभाग सर्वेषामन्तकोपम ।
विदेहनगरं राजन्सर्वसपत्समायुतम् ॥
योषिद्भिर्भूषिताभिश्च पुरुषै पदसायुधै ।
सर्वमङ्गलसयुक्तैर्विविधैश्च पदातिभि ॥
अलकृत विपणिभिस्तोरणै सर्वतोमुखै ।
ययौ पुरं बहुविधै पूरित धनराशिभि ॥
तस्योपकण्ठे देवस्य मन्दिर मणिपूरितम् ।
हाटकैर्निर्मितै कुम्भै शलाकै काञ्चनैश्चितम् ।
तप्तकाञ्चनसाहस्रैर्निर्मितैस्तोरणैर्युतम् ॥
एवभूत देवगृह नानागोपुरशोभितम् ।
नक्षत्रवर्मा बलवान्दृष्ट्वा तत्र मुद ययौ ॥
हराम्यत्र सुवर्णानि बहूनीति विनिश्चित ।
जगाम विष्णुभवन नक्षत्रश्चौर्यलोलुप ॥
तत्रापश्यद्द्विजवरं शान्त तत्त्वार्थकोविदम् ।
परिचर्यापर विष्णोरुदङ्क तपसा निधिम् ।
एकाकिन दयालुं च नि स्पृह ध्यानलोलुपम् ॥
दृष्ट्वा नक्षत्रवर्मासौ स्वचौर्यस्यान्तरायिनम् ।
देवताद्रव्यजाल तु समादातुमना निशि ।
उदङ्क हन्तुमारेभे विकृतासिर्मदोद्धत ॥
पादेनाक्रम्य तद्वक्षो जटा सगृह्य पाणिना ।
हन्तुं कृतमतिं क्रूरमुदङ्क प्रेक्ष्य चाब्रवीत् ॥
भो भो साधो वृथा मा त्व हनिष्यसि निरागसम् ।
मया किमपराद्ध ते कृत तद्ब्रूहि सुव्रत ॥
कृतापराधिन लोके शिक्षा कुर्वन्ति यत्नत ।
न हिंसन्ति वृथा सौम्य सज्जना अपि पापिनम् ॥
विरोधिष्वपि मूर्खेषु दृष्ट्वा वै चोत्तमान्गुणान् ।
विरोध नाधिगच्छन्ति सज्जना शान्तचेतस ॥
बहुधा बाध्यमानोऽपि यो नर क्षमयान्वित ।
तमुत्तम नर प्राहुर्विष्णो प्रियकर स्मृत ॥
अहो विविधै बलवान्बाधते विविध जनान् ।
सवसङ्गविहीनोऽपि बाध्यते हि दुरात्मना ॥
अहो निष्कारण लोके बाध्यन्ते पापिनो जनान् ।
तत्रापि साधून्बाधन्ते न समानान्कथचन ॥
अहो माया बलवती मोहयत्यखिल जगत् ।
पुत्रमित्रकलत्रार्थे सर्वदु खे नियोक्ष्यते ॥
परद्रव्यापहरणे कलत्र पोषित त्वया ।
अन्ते तत्सर्वमुत्सृज्य एक एव प्रयाति हि ॥
मम माता मम पिता मम भार्या ममात्मज ।
ममेदमिति जन्तूना ममता बाधते वृथा ॥
यावदर्जयसि द्रव्य तावदेव हि बान्धवा ।
धर्माधर्मौ सहैवाम्ना धनादीना समार्जने ॥
यद्भाति सद्भवत्येव यन्न भाति न तद्भवेत् ।

(L. 3971) G1 प्रपन्नातिहर प्रभो (for °) — D1 om the ref — (L. 3976) G(ed.) शुभ मे ब्रूहि पावनम् (for °) — G1 om the ref — (L. 3977) G1 पापिनो मनुजा सर्वे (for °) — (L. 3980) D1 स्मरण (for सनिधि) — (L. 3981) D1 ब्रह्म (for ज्योति) — (L. 3984) G1 M1 आयुर्वर्धनकारणम् (for °) — (L. 3997) G(ed) हरणे सततोद्यत (for °) — (L. 3998) D1 G1 M1 G(ed) तोमरै (for तोरणै) — (L. 4002) G(ed) चित्रैश्च (for साहस्रैर्) G1 M1 वृतम् (for युतम्) — (L. 4004) G(ed) सु (for वि) G1 बहून्यत्र सुनिश्चित (for °) — (L. 4006) M1 क्षत्रियश् (for नक्षत्र) — (L. 4009) G1 नि स्पृह धनलोलुप (for °) — (L. 4011) D1 समादातुमगान्निशि (for °) — (L. 4014) M1 G(ed) क्रूरम् (for क्रूरम्) — (L. 4016) M1 कृतापराध लोके हि (for °) — (L. 4020) G1 साधु (for शान्त) — (L. 4022) D1 M1 विष्णो प्रियकर नरा (for °) — (L. 4023) D1 G1 विविधान् (for विविध) G1 जनम् (for जनान्) M1 बाधते विविधात्मना (for °) — (L. 4025) G(ed) नरान् (for जनान्) G1 बाध्यन्ते विविधा जना (for °) — (L. 4028) G1 सर्वदु ख (for °दु खे) D1 सर्वदु खेन बाध्यते (for °) — (L. 4029) M1 G(ed) कलत्र पोषयस्यपि (for °) — (L. 4031) D1 नृपात्मज (for ममात्मज) — (L. 4034) D1 सम जने (for

इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥
अहो दुःखं मनुष्याणां ममताकुलचेतसाम् ।
महापापानि कृत्वापि परांस्तुष्यन्ति यत्नतः ॥
अर्जितं तु धनं सर्वं भुञ्जते बान्धवाः सदा ।
स्वयमेकस्तमोमूढस्तत्पापफलमश्नुते ॥ [4040]
इति ब्रुवाणं तमृषिं विमुच्य भयविह्वलः ।
नक्षत्र प्राञ्जलिः प्राह क्षमस्वेति पुनः पुनः ॥
तदा सङ्गमभावेन हरिसंनिधिमाश्रितः ।
गतपापो वनन्देश ह्यच्युतार्पितमनब्रवीत् ॥
मया मूढेन पापानि कृतानि सुबहूनि च । [4045]
तानि सर्वाणि नष्टानि विप्रेन्द्र तव दर्शनात् ॥
अहोऽहं पापधीर्नित्यं महापापं समाचरन् ।
कथं मे निष्कृतिर्भूयात्कं यामि शरणं प्रभो ॥
पूर्वजन्मार्जितैः पापैर्लुब्धकत्वमवाप्तवान् ।
अत्रियोऽपि च पापानि कृत्वा कां गतिमाप्नुयात् ॥ [4050]

अहो ममायुः क्षयमेति सर्वं
पापान्यनेकानि समार्जितानि ।
प्रतिक्रिया नापि कृता मयैषा
गतिश्च का स्यान्मम जन्म किं वा ॥
अहो विधिः पापशताकुलं मां [4055]
किं सृष्टवान्भारतरं च मह्याः ।
कृतं च पापं च मया च भोज्य
स्थिरस्तु जन्मस्वहमुग्रजन्मा ॥

भीष्म उवाच ।

एवं विनिन्द्य चात्मानं नक्षत्रो ह्यात्मना सदा ।
मनस्तापाग्निना दग्धः सद्यः पञ्चत्वमागतः ॥ [4060]
उदङ्कः पतितं प्रेक्ष्य नक्षत्रं तु दयापरः ।
हरिपादोदकेनैव ह्यभ्यषिञ्चन्महामतिः ॥
हरिपादोदकस्पर्शान्नक्षत्रो गतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥
उदङ्क मुनिशार्दूल गुरुस्त्वं मम सुव्रत । [4065]
विमुक्तस्त्वत्प्रसादेन महापातककञ्चुकात् ॥
ज्ञानं त्वदुपदेशान्मे संजातं मुनिपुंगव ।
तेन मे पापजालानि विनष्टान्यतिवेगतः ॥
हरिपादोदकं यस्मान्मयि त्वं सिक्तवान्मुने ।
प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥ [4070]
त्वयाहं कृतकृत्योऽस्मि प्राप्तवानुत्तमं पदम् ।
तस्मान्नतोऽस्मि ते विद्वन्यत्कृतं तत्क्षमस्व मे ॥
इत्युक्त्वा देवकुसुमैर्मुनिमेनमवाकिरत् ।
प्रदक्षिणत्रयं कृत्वा नमस्कारं चकार ह ॥
ततो विमानमारुह्य सर्वकामसमन्वितम् । [4075]
अप्सरोगणसंकीर्णं प्रपेदे हरिमन्दिरम् ॥
एतद्दृष्ट्वा विस्मितो मुदङ्कस्तपसां निधिः ।
शिरस्यञ्जलिमाधाय तुष्टावैतरमलापतिम् ॥
लोकनाथ नमस्तेऽस्तु सर्वभूतदयाकर ।
पाहि मां पुण्डरीकाक्ष समास्तूतवतीदिनम् ॥ [4080]
त्वयाहं तारितो देव संसारमहोदधेः ।
त्वत्संनिधिं प्रविष्टस्य क्षयमन्योऽङ्गागमत् ।
पश्यतो मे महाभाग मुनिमद्य प्रदत्तवान् ।
त्वत्पादकमलादन्या गतिर्मम न विद्यते ॥
पाहि पाहि जगन्नाथ मम्यादर्शितपावन । [4085]
त्वमेव जगतां नाथ गतिर्मे भक्तवत्सल ॥

भीष्म उवाच ।

एवं वै स्तुतवत्येन मुनिना प्रार्थितो हरिः ।
दर्शयित्वा स्वकं रूपं ददावादात्मकं पदम् ।
गत्वा तं त्वासयामास मुनिं सारूप्यतां गतम् ॥
तस्मात्त्वमपि राजेन्द्र मानवः कुरु सर्वदा । [4090]
सत्सङ्गात्मुनिमाप्नोति सत्यं नारदभाषितम् ॥
त्वया सर्वं कथितं मत्त श्रुत्वा युधिष्ठिर ।
कृतार्थे तु प्रदास्यन्ति श्रुतिं मुनिं च साधवीन् ॥
य इदं पुण्यमाख्यानं नारदेन प्रभाषितम् ।
शृणोति सततं भक्त्या सत्सङ्गं स गच्छति ॥ [4095]
विषयेषु विरक्तिः स्याद्विष्णुभक्तिरतो भवेत् ।
देवानस्य परं गत्वा सकलस्मान्समुद्धरेत् ॥

C 1 ; 1 २

वैशंपायन उवाच ।

श्रुत्वैतत्पुण्यमाख्यानं प्रसन्नवदनो नृप ।
कृष्णं भक्तप्रियं नत्वा पाहि पाहीति चाब्रवीत् ॥

युधिष्ठिर उवाच ।

शङ्खतीर्थमिति ख्याते कावेर्या दक्षिणे तटे ।
कृष्णेन सूचितं देव तस्योत्पत्तिं वदस्व मे ॥
कावेर्याः पुण्यनद्यास्तु स्थानं यत्पुण्यवर्धनम् ।
यस्मिन्देशे ऋषिगणा देवता सततं स्थिता ॥
पुण्याश्रमसमायुक्तमुभयोस्तीरयोरपि ।
प्रख्यातं पापदं स्थानं तात मे संप्रकीर्तय ॥
ब्रह्मक्षत्रियवैश्यानां शूद्राणां चैव योषिताम् ।
मुक्तिप्रदेति विख्याता कावेरीं तां प्रकीर्तय ॥

भीष्म उवाच ।

ब्रह्मणा हि पुरा गीतं नारदाय महात्मने ।
तेनेदं मम धर्मात्मन्कारुण्यात्कथितं खलु ॥
भूप्रदक्षिणकाले तु मया वै सेविता पुरा ।
सर्वपापहरा देवी कावेरी कलिनाशिनी ॥
त्वदर्थं संप्रवक्ष्यामि ह्यनुभूतं मया श्रुतम् ।
तृप्त्यर्थं तव वक्ष्यामि शृणु नान्यमना प्रभो ॥
कावेर्या दक्षिणे पार्श्वे श्रीनिवासस्य पृष्ठतः ।
शङ्खतीर्थमिति ख्यातं तीर्थानामुत्तमं परम् ॥
पुरा सुधांशुर्धर्मात्मा चचार तप उत्तमम् ।
मधुकैटभहन्तुर्वै प्रसादात्कान्तिमाप्तवान् ॥

युधिष्ठिर उवाच ।

किमर्थं तप्यते तेन ताराणामधिपेन वै ।
तस्मै वरं कथं दत्तं विष्णुना सर्वजिष्णुना ॥
देवव्रत महाभाग कथ्यतां मे कुतूहलम् ।
अस्ति चेन्मयि कारुण्यं तव देवव्रत प्रभो ॥

भीष्म उवाच ।

पुरा बृहस्पतेर्भार्यां शीतांशुः सौम्यरूपवान् ।
अपहृत्य चिरं कालं तया सार्धं मुमोद ह ॥
विज्ञाय चरितं स्वभार्याया शशिनः प्रभो ।
मा मेति प्रार्थयित्वा तं पश्चाच्चैनं शशाप ह ॥
क्षयी भव दुराचार सर्वलोकेषु निन्दित ।
इति शप्त्वा क्षमस्वेति देवैः स प्रार्थितो विभुः ।
सुरलोकं विसृज्यैव प्रपेदे ब्रह्मणः सभाम् ॥
तदाप्रभृति धर्मात्मा विसृज्य च वराननाम् ।
अस्मिन्क्षेत्रे तपश्चके बृहस्पतिभयार्दितः ॥
वर्षाणामयुतं राजंश्चचार तप उत्तमम् ।
शापाच्च तपसा चैव कृशाङ्गो भाति चन्द्रमाः ।
अवशिष्टकलामात्रो देवानामप्रभुस्तदा ॥
वागीशं तुष्टुवुर्देवा क्षम्यतां क्षम्यतां प्रभो ।
वृद्धिं ददस्व भूयस्त्वमस्माकं हितकाम्यया ॥

भीष्म उवाच ।

तथाकरोद्देवगुरुर्देवानां हितकाम्यया ।
तपसा कृपया चैव भूयो वृद्धिमवाप्तवान् ॥
तस्मिन्काले जगन्नाथमस्तौषीत्कमलापतिम् ।
संहारं सर्वलोकानां योगिध्येयमरिंदमम् ॥

चन्द्रमा उवाच ॥

नमस्ते लोकनाथाय नमस्ते धर्मरूपिणे ।
नमस्ते कमलाकान्त प्रणतार्तिप्रणाशन ॥
आद्यन्तशून्यं देवेशं सृष्टिस्थित्यन्तकारिणम् ।
वेदमूर्तिं सहस्राक्षं नौमि सर्वात्मकं हरिम् ।
जगद्रूपमुदाराङ्गं पीताम्बरधरं हरिम् ।
कौस्तुभेन विराजन्तं सर्वगं तं नमाम्यहम् ॥
पापघ्नं सर्वभक्तानां दिव्यमाल्यविभूषितम् ।
नीलजीमूतसंकाशं तं नतोऽस्मि रमापतिम् ॥
आकाशमध्यगं देवमनन्तमपराजितम् ।
वासुदेवं प्रपन्नोऽस्मि सर्वपापक्षयोऽस्तु मे ।
नमस्कारप्रभावेन नश्यन्त्वघान्यम प्रभो ॥
स्तूयमानं सदा देवैर्वेदैश्च ब्रह्मवादिभिः ।
नतोऽस्मि तं हरिं सूक्ष्मं नाशं यातु च मे जरा ॥
अन्तर्यामिञ्जगत्साक्षिन्भक्तवत्सल सर्वग ।
मत्कल्मषाणि सर्वाणि यान्तु नाशं नमोऽस्मि ते ॥
इति स्तुतो जगन्नाथः सर्वसिद्धनिषेवितः ।
आययौ गरुडारूढो यत्रास्ते रोहिणीपतिः ॥
ध्यायन्तं सर्वगं देवं हरिं शङ्खादिभूषितम् ।
दृष्ट्वा सर्वगतो विष्णुर्विधुमाह सविस्मयः ॥
वरं वरय भद्रं ते निशाकर सुधाकर ।
स्तोत्रेण तपसा चैव तुष्टोऽहं नितरां प्रभो ॥

31 ; G(ed.) 32

(L. 4099) $D_1$ $G_1$ कृष्णभक्ति (for कृष्ण भक्त) —(L. 4101) G(ed) वदाद्य (for वदस्व) —(L. 4106) $G_3$ ब्राह्मणक्षत्रियविशां (for *) — For lines 4106-4109, $D_1$ subst :

174** भीष्म ।
तातार्हं संप्रवक्ष्यामि शृणु नान्यमना प्रभो ।

—(L. 4110) $D_1$ कावेर्या दक्षिणे कूले (for *) —(L. 4122) G(ed) काम्य- (for सौम्य). —(L. 4127) $D_1$ शप- (for शप्त्वा) —(L. 4131) $D_1$ वायुभक्षः सदा श्रीमांश्च (for *) — $D_1$ om lines 4135-4137 —(L. 4139) $D_1$ अरिंदम, $G_1$ अनुत्तमम् (for अरिंदमम्) — $G_1$ $M_1$ शश (for चन्द्रमा) $D_1$ om line 4140 —(L. 4141) $M_1$ नमस्ते लोकमूर्तये (for *) —(L. 4143) $M_1$ सर्वाधंग (for °त्मक) —(L. 4149) $D_1$ -क्षय कुरु; $G_1$ क्षयात्मम; $G_3$ -क्षयं मम (for -क्षयोऽस्तु मे) —(L. 4151) G(ed) मुनिभिः (for वेदैश्च) —(L. 4153) $D_1$ $G_{1,2}$ अन्तर्यामी जगत्साक्षी (for *) $D_1$ $G_1$ $M_1$ सर्वगो( $D_1$ °शो ) भक्तवत्सल°) $G_3$ श्रीपते पुरुषे

इत्युक्तो देवदेवेन सुधांशुस्त प्रणम्य च ।
ययाचे श्रीपतिं देव वराणामुत्तमं वरम् ॥
पाहि पाहि जगन्नाथ कान्ति मे वर्धयस्व ह ।
सौभाग्यमण्डल देहि गुरो शाप निवारय ॥
इत्युक्तो वै जगन्नाथ शङ्खपूतेन वारिणा ।
अभिषिच्य वर तस्मै ददौ सर्वगत प्रभु ॥
तमाह शर्वरीनाथ नमन्तं सौम्यवर्चसम् ।
परिपूर्णा कला सर्वा ह्रासवृद्ध्या भवन्तु ते ॥
शृणु सौम्य महाभाग त्वया यत्सेवित स्थलम् ।
शङ्खतीर्थमिति ख्याति गमिष्यति न संशय ॥
त्वया च यत्कृत स्तोत्र पठता शृण्वतामपि ।
सर्वपापानि नश्यन्तु रोगाणि बलवन्ति च ॥
अस्मिन्वै मज्जनात्तीर्थे सर्वमपत्न्विप्यति ।
अस्नायिना मनुष्याणा दारिद्र्य भवति ध्रुवम् ॥
एवमुक्त्वा जगन्नाथ शीतांशु धर्मनन्दन ।
अदूरे तस्य पुरत श्रीनिवासस्थल गत ॥
स्थित्वा तत्र मुहूर्त तु पूजितो देवतागणै ।
स्वधाम प्रययौ श्रीमान्नारदाद्यैरभिष्टुत ॥
निशाकरोऽपि धर्मात्मा मुनिभि परिपूजित ।
तस्मादेशाद्ययौ स्वर्ग प्रपद च स्वक पदम् ॥
सर्वे ऋषिगणा विद्वन्स्तत्र चक्रुरकल्मषा ।
यज्ञैर्यज्ञपतिं केचिज्ज्ञानयोगविचक्षणा ।
आराध्य त चिर काल तत्पद ते प्रपेदिरे ॥
पौलस्त्यनिधन कृत्वा रामचन्द्र प्रतापवान् ।
अत्र स्नात्वा कपिगणै पुनीत स्वपुर ययौ ॥
पुरा हि भार्गवो रामो राजवध्याज्जिहस्य च ।
स्नात्वात्रैव चिर कालं प्रपदे परम पदम् ॥
सुत्रामा देवराजश्च अहल्या काममोहित ।
गत्वा तु तत्फल प्राप्य स्त्रीचिह्न गौतमात्खलु ॥
तद्दोषपरिहारार्थं स्नात्वा चाब्दत्रय प्रभो ।
अत्रैव प्राप्तवान्रूप सर्वतेजोमय शुभम् ॥
श्रीनिवासमिद क्षेत्र शङ्खतीर्थात्पुर स्थितम् ।
स्नातानां सर्वपापघ्नं भुक्तिमुक्तिफलप्रदम् ॥
कावेरीमज्जनं पुण्य दुर्लभ ह्यकृतात्मनाम् ।
पुरा सचितपुण्यानामप्रयत्नेन लभ्यते ॥
पुरा लोकहितार्थाय ब्रह्मणा निर्मिता त्वियम् ।
तस्मात्स्नातव्यमत्रैव नित्यश पापभीरुभि ॥
करोमि मज्जन देव्या कावेर्या यो वदेत्सुधी ।
वहते तस्य पापौघो नाशकालो ममेति च ॥
आकल्पजन्मभि पाप संचित यच्चरै प्रभो ।
तत्सर्वं भस्मतामाघे कावेरीमज्जनाद्भवेत् ॥
तेजोमयेषु लोकेषु भुक्त्वा भोगाननेकश ।
पश्चान्मोक्षमवाप्नोति कावेर्या स्नाति यो नर ॥
कावेरी तु महापुण्या स्मृता पापप्रणाशिनी ।
संसेव्या सर्वदा विप्रै संसारच्छेदलिप्सुभि ॥
पापक्षयकर स्नान सृष्टिकर्ता पितामह ।
इय लोकहितार्थाय निर्ममे निपुण क्षितौ ॥
दक्षिणस्या दिशि विभु कावेरीं कलिनाशिनीम् ।
गङ्गामुत्तरदिग्भागे नश्यन्ता पापिनामघम् ।
सृष्ट्वा मुद ययौ श्रीमांस्तस्या स्नात्वा तु नो भयम् ॥
विष्णुपादोद्भवा देवी कावेरी पापनाशिनी ।
मज्जता सर्वपापानि छिनत्त्यव न संशय ॥
चन्द्रसूर्यग्रहे चैव सक्रान्तावयने तथा ।
सिद्धयोगे पुण्यदिने चन्द्रादित्यमरुद्गणा ॥
गन्धर्वा लोकपालाश्च यक्षविद्याधरा नृप ।
ब्राह्मी माहेश्वरी लक्ष्मी शची मनादितिरदिति ॥
घृताची मेनका रम्भा ह्युर्वशी च तिलोत्तमा ।
अन्याश्चाप्सरसो सघा कावेर्या स्नानतत्परा ।
माघे चैतासु तिथिषु स्नात्वा यान्ति सुरालयम् ॥
भस्मानि यत्र दृश्यन्ते कावेर्या पार्श्वयोरपि ।
सुराणां तु मत्स्थान विद्धि तत्रैव भारत ॥
तप कुर्वन्ति मुनयो ह्यद्यापि मनुजेश्वर ।
शान्ता जितारिषड्वर्गा ह्यदृष्टा पापकर्मभि ॥
स्नातव्य यत्नतो राजन्कावेर्या धर्ममिच्छता ।
स्नातानां तु शुभो लोको भविष्यति न संशय ॥
तस्मात्त्वमपि राजेन्द्र कावेरीस्नानमाचर ।
वाञ्छितार्थप्रदा देवी कावेरी पापनाशिनी ॥

वैशंपायन उवाच ।

य इद पुण्यमाख्यानं नारदेन प्रभाषितम् ।
श्रुत्वा पापविनिर्मुक्तो ब्रह्मलोक स गच्छति ॥

Colophon

रम ( for [5] ) —( L 4159 ) D1 महामते ( for सुधाकर ) — D1 om — ( L 4163 ) D1 कान्ति मे वर्धय प्रभो ( for [5] ) — ( L 4174 ) M1 मज्जता ( for °नात् ) lines 4173–4174 — ( L 4179 ) M1 मुनिभि पूजितस्तदा ( for [5] ) — ( L 4185 ) — ( L 4186 ) D1 G1 M1 मुनि , G(ed ) ऋषि ( for कपि ) — ( L 4188 ) M1 अहल्या- G(ed ) निगृह्य ( for जिहस्य ) — G1 2 om lines 4192–4194 कामलोलुप ( for [5] ) — ( L 4195 ) — ( L 4192 ) D1 देवतैरपि पूजितम् ( for [5] ) — ( L 4197 ) G1 स्नातव्यम् G2 प्रयत्नेन हि लभ्यते ( for [5] ) — ( L 4198 ) ( for स्ना° ) D2 तस्मात्स्नातव्य सभेण ( for [5] ).

G(ed.) कावेर्या तत्सन्निधौ ( for [5] ) — ( L 4199 ) G1 2 M1 G(ed ) वेपन्ते तस्य पापानि ( for [5] ) — ( L 4201 ) D1 M1 स्नानतो , G2 सेवतो ( for मज्जनात् ) — ( L 4208 ) G1 G(ed ) मुद ( for विभु° ) — ( L 4216 ) G(ed ) धृतिर् ( for दितिर् ) G1 धृति ( for दिति ) G2 रुन्धती मेना दिति ( for दितिर् ) — After line 4219, D1 ins शुभा ( for [5] ) — After line 4219, D1 ins 175** स्नातव्यं राजन् राजन्कावेर्यां धर्ममिच्छता । — ( L 4223 ) D1 ते प्रणा तारिपड्वणा ( for [5] ) — D1 om. line 4224 — ( L 4224 ) G2 सुखम् ( for धर्मम् ) — ( L 4229 ) G(ed.) प्राप्नोति पापनिर्मुक्तो ( for [5] )

वैशंपायन उवाच ।

शङ्खतीर्थस्य माहात्म्यं कावेर्यां स्नानवैभवम् ।
श्रुत्वा धर्मसुतः श्रीमान्गाङ्गेयं पुनरब्रवीत् ॥

युधिष्ठिर उवाच ।

श्रीनिवासमिदं क्षेत्रं गदितं भवता प्रभो ।
तस्योत्पत्तिं च माहात्म्यं विस्तरेण वद प्रभो ॥

भीष्म उवाच ।

शृणु पाण्डव वक्ष्यामि श्रोतॄणामघनाशनम् ।
सर्वसंपत्करं पुण्यमायुरारोग्यवर्धनम् ॥
पुत्रदं पुत्रकामानां मोक्षदं मोक्षकामिनाम् ।
अनन्तं श्रीनिवासस्य क्षेत्रस्य फलमव्ययम् ॥
ब्रह्मणा हि पुरा गीतं नारदाय महात्मने ।
तेन मे गदितं राजंस्तं ब्रवीमि हि तेऽधुना ॥
तीर्थानामुत्तमं तीर्थं क्षेत्राणां च तथोत्तमम् ।
श्रीनिवासमिदं क्षेत्रं सर्वसिद्धनिषेवितम् ॥
यत्र तिष्ठन्त्यहो राजन्ब्रह्मर्षिब्रह्मसंहितम् ।
तन्मध्ये तु महात्मानस्तपः कुर्वन्ति चाधुना ॥
पुरतः पश्चिमे भागे दक्षिणाभिमुखी नृप ।
दक्षिणे चोत्तरे चैव कावेरी पूर्वगामिनी ॥
तन्मध्ये जगतां नाथः साक्षात्प्रत्यक्षतां गतः ।
लोकमातुर्महालक्ष्म्याः पुरे योगेश्वरो हरिः ॥
अनन्तस्तक्षकश्चैव वासुकिः शङ्खपालकः ।
भुजगेन्द्रेण तिष्ठन्ति श्रीनिवासस्य संनिधौ ॥
इन्द्रो यमः प्रचेताश्च कुबेरः शशिशेखरः ।
अग्निश्च निरृतिर्वायुर्दिक्पाला सततं स्थिताः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सर्वदुःखोपशमनमायुर्वर्धनकारणम् ॥
पुरा हि कैटभो राजन्दैत्यानामग्रणीर्बली ।
तपश्चचार राजेन्द्र देवानां जयकाङ्क्षया ॥
स्थित्वात्रैव चिरं कालं निगृहीताखिलेन्द्रियः ।
वायुभक्षो निराहारो जितक्रोधो नृपोत्तम ॥
तत्राय पिण्डमादाय भक्षयित्वा पुनः पुनः ।
अचरद्घोरमतुलं तपः परमपावनम् ।
त्रैलोक्यमपि सकलं तेनैव तपसानघ ॥
तस्मिन्काले देवपतिर्देवैः सह युधिष्ठिर ।
तपसा भीतिमापन्नो ब्रह्मलोकमुपागमत् ॥
ब्रह्मयोनिं चिरं स्थित्वा देवैः सह पुरंदरः ।
किं भविष्यति मल्लोकमिति चिन्त्य मुहुर्मुहुः ।
पञ्चाशद्युगपर्यन्तमास्ते तत्र युधिष्ठिर ॥
उपप्लवं तु देवानां ज्ञात्वा तत्र पितामहः ।
मा भैर्देवराज त्वं वेद्मि लोकस्य कण्टकम् ॥
शमयिष्यामि तं मूर्खं वरेण त्वं क्षमस्व ह ।
इत्युक्त्वान्तर्दधे देवो देवानां हितकाम्यया ।
यत्रास्ते दैत्यमुख्यश्च तं देशं प्राप्तवान्द्रुतम् ॥
तपश्चरन्तं धर्मात्मशीलजीमूतसंनिभम् ।
रवौ न्यस्तदृशं दृष्ट्वा वाक्यमेतदुवाच ह ॥
भो भो दैत्यपते त्वं तु कृशोऽसि नितरां प्रभो ।
विद्धि विश्वसृजं दैत्य यद्ददामि वदस्व तत् ॥
तुष्टोऽहं तपसा तेन पश्य मां त्वत्समीपगम् ॥
इति वाक्यं तदा श्रुत्वा ब्रह्मणो लोककण्टकः ।
निरीक्ष्य तं नमस्कृत्य वाक्यमेतदुवाच ह ॥
पाहि लोकपते ब्रह्मन्पश्य मां तपसि स्थितम् ।
ज्ञात्वा तु मत्कृतं कर्म विजयं दातुमर्हसि ।
लोकानां चैव सर्वेषां तथा पातालगह्वरम् ॥
त्वां च देवपतिं ब्रह्मन्सुत्रामाणमरिंदमम् ।
ददासि यदि मे ब्रह्मन्धर्मे नाशमेव च ॥

भीष्म उवाच ।

इति तस्य वचः श्रुत्वा परमेष्ठी पितामहः ।
तथास्त्विति तमामन्त्र्य तत्रैवान्तरधीयत ॥
वरेण तेन दैत्योऽपि गर्वितः पुरुषाधमः ।
इन्द्रस्य नगरं गत्वा पीडयामास देवताः ॥
प्रार्थ्यमानोऽमरेन्द्रेण जितः स्वर्गो मयेति च ।
पूज्यमानः सुरगणैर्यमलोकमथागमत् ॥
जित्वा तं सूर्यतनयं पूजितो वरुणेन च ।
कौबेरं लोकमागत्य पूजितस्तेन सर्वतः ॥
तत्र श्रिया प्रमत्तोऽसौ वरेणानेन सुव्रत ।
ब्रह्मणो लोकमासाद्य राजर्षिगणसेवितम् ।
कृताञ्जलिर्नमस्कृत्य धातारमिदमब्रवीत् ॥
जिता हि लोकाः सर्वे च वैकुण्ठं जेतुमुत्सहे ।
तत्र स्थितं हरिं जित्वा ततः स्वस्थो भवामि च ॥

COLOPHON — *Sub-parvan* D1 आश्चर्यपर्वणि शेषधर्मो, G1 : G(ed.) दानधर्मा — *Adhy name* D1 कावेरीमाहात्म्यम्, G(ed.) शङ्खतीर्थकावेरीमाहात्म्यम् — *Adhy no* D1 G1 : 32; G(ed.) 33

(L. 4237) D1 G2 उत्तमम् (for अव्ययम्) —(L. 4242) G2 भूषितम् (for °संहितम्) —(L. 4246) G(ed.) तन्मध्ये तु जगन्नाथ (for °) —(L. 4253) M1 आयुर्वर्धनमुत्तमम् (for ²) —(L. 4254) G1 C(ed.) राजन्दैत्यानामग्रणीर्बली (for ²) —(L. 4255) G2 त्रैलोक्य° (for देवानां) —(L. 4259) G2 दारुणम् (for °पावनम्) G1 G(ed.) तपसा तेन पावन (for ²) —(L. 4263) G(ed.) ब्रह्माणं सुचिरं स्तुत्वा (for °) —(L. 4268) D1 M1 शमयिष्यामि च तं मूर्खं, G2 शमयिष्यामि महाभाग (for °) G1 G2 M1 असुर (for वरेण) —(L. 4269) G(ed.) °सुदृशं (for °काम्यया) — After line 4272, G1 ins.

176** पाहि लोकपते ब्रह्मन्पश्य मां तपसि स्थितम् ।

—(L. 4275) G1 : M1 तुष्टो (for तुष्टो) G(ed.) तुष्टोऽहं तपसानेन (for °) —(L. 4277) G2 अवलोक्य तं नमस्कृत्य (for °) —(L. 4282) G2 नाथ मे (for ब्रह्मन्) G1 अधर्मो नाशमेति च (for ²) —(L. 4290) D1 आसाद्य, G(ed.)

गमिष्ये त्वत्प्रसादेन हरिं जेतु पितामह ।
इत्युक्त्वा प्रययौ पार्थ क्षीरोद बलदर्पित ॥
तत्र सर्वगत विष्णुमदृष्ट्वा विस्मय गत ।
किं करोमि क यास्यामि क च पश्यामि सप्रति ॥
कर्मणा फलदो विष्णुर्भूलोके स्थितिमेष्यति ।
इति निश्चित्य मनसा भूलोक प्रासवान्प्रभु ॥
तस्य बुद्धिरिय जाता मज्जान्धस्यातिदुर्मते ।
विवेक नैव पश्यन्ति ध्वन्ति कामुका खलु ॥
अहो हरि सर्वगतो भूमौ सप्रति सस्थित ।
पाताल नेतुमिच्छामि सप्तद्वीपा वसुधराम् ॥
इति निश्चित्य मनसा सागर समुपाविशत् ।
कण्ठमात्रमभूत्तोय तस्य दैत्यस्य धर्मज ॥
प्रसार्य हस्त पाताले वाम दक्षिणमुत्तरे ।
चालयामास पृथिवीं कल्पान्ते दिग्गजा इव ॥
वसुधा लोकमातेय कम्पमाना पुन पुन ।
अस्तौषीज्जगतामीश सर्वग भक्तवत्सलम् ॥

वसुधोवाच ।

श्रीनिवास नमस्तेऽस्तु नमो विश्वकुटुम्बिने ।
नमो विश्वपते तुभ्य नमस्ते जलशायिने ॥
नम क्षीराब्धिवासाय नमस्ते सूक्ष्मरूपिणे ।
नमो देवाधिदेवाय नमो विधुतप्रभाय च ॥
नमस्ते वसुधानाथ नमस्ते भक्तवत्सल ।
शङ्खचक्रगदापाणे नमो नन्दकधारिणे ॥
पाहि मा भयसत्रस्तां पद्मनाभाय ते नम ।
नमश्वैतन्यरूपाय पृथ्वीधर नमोऽस्तु ते ॥
मत्स्यवामनरूपाय कूर्मरूपाय ते नम ।
नारसिंहाय रामाय नमो दामोदराय च ॥
कृष्णाय यादवेन्द्राय वासुदेवाय चक्रिणे ।
नमस्ते पुण्डरीकाक्ष पाहि लोकपते प्रभो ॥
इति स्तुतो जगन्नाथो धरण्या पाण्डुनन्दन ।
सांनिध्यमगमद्विष्णुरन्तर्यामी जगन्मय ॥
मा भैषीरित्युक्तमात्रे तु विद्युन्मण्डलवत्प्रभु ।
चक्रमादाय चिच्छेद कैटभस्य शिरस्तदा ॥
धरामाधास्य विश्वात्मा तथा सार्वभरिदम ।
इद क्षेत्र समासाद्य सोऽतिष्ठत्प्रभुरव्यय ॥
अत्र स्थित हरिं ज्ञात्वा सर्वलोकधर प्रभु ।
अनन्त प्रेषयामास स्वसुत शङ्खपालकम् ॥

अनन्त उवाच ।

शृणु पुत्रक मद्वाक्य श्रीनिवासो जगन्मय ।
कावेर्या दक्षिणे पार्श्वे कावेर्या च तरङ्गिते ॥
ऋषेरौद्दालकस्यैव ह्याश्रमे मुनिसेविते ।
सिद्धविद्याधरगणै सेविते पुण्यपादपै ।
श्वेततित्तिडिविल्वैश्च श्वेतजम्बूकपित्थकै ॥
एव भूते जगन्नाथ श्रीनिवासो जगन्मय ।
श्रिया च वसुमत्या च सेव्यमानस्तु तिष्ठति ॥
तमेव सेवमानस्तु वर्तयस्व तदन्तिके ।
अदृष्ट सर्वमनुजै परा सिद्धिं गमिष्यसि ॥
एव प्रबोधितस्तेन ह्यनन्तेन महात्मना ।
शङ्खपालो नमस्कृत्य वचन चेदमब्रवीत् ॥
भगवन्सर्वनागेन्द्र सर्वशास्त्रविशारद ।
किमर्थं नम्यते तेन ऋषिणा करुणात्मना ॥
तदह श्रोतुमिच्छामि विस्तरेण महामते ।
यदर्थं सर्वनागेन्द्र कृपा मयि तवास्ति चेत् ॥
इत्युक्त शङ्खपालेन शेषो लोकधर प्रभु ।
औद्दालकस्य चरितमब्रवीत्कामद शुभम् ॥

Colophon

अनन्त उवाच ।

ऋषिरौद्दालको नाम वेदवेदाङ्गपारग ।
शान्तो जितेन्द्रियो मौनी सदा ध्यानपरायण ॥
अनेन सुचिर काल तपश्चक्रे महामति ।
चत्वारिंशद्युग तात ह्यहोरात्रमिवाकरोत् ॥
तेनैव तपसा तुष्टो ब्रह्मा लोकपितामह ।
यत्र तिष्ठति धर्मात्मा ऋषिरौद्दालको मुनि ।
त देशमधिगम्याशु वचन चेदमब्रवीत् ॥
औद्दालक महाभाग तुष्टोऽह तपसा हि ते ।
वर वरय भद्र ते वरदोऽह प्रजापति ॥

आगम्य ( for °त्य ) —( L 4294 ) G1 जिताश्च लोकास्त्वचोऽहं ; G1 M1 जिता स्म लोकास्तातार्ह ( for ᵃ ) —( L 4298 ) G1 दृष्ट्वा विस्मयमागत , G2 अदृष्ट्वा स्थानमागत ( for ᵇ ) —( L 4310 ) G(ed) मुहुर्मुहु ( for पुन पुन ) —( L 4318 ) G(ed) वित्रस्ता ( for °स° ) —( L 4320 ) G2 कूर्मवाराहरूपिणे , M1 °रूप नमोऽस्तु ते ( for ᵇ ) —( L 4321 ) D1 वासुदेव त्रिविक्रम ( for ᵃ ) —( L 4322 ) D1 नमो दाशरथ नम ( for ᵇ ) —( L 4325 ) G2 अन्तर्भाम जगद्गुरु ( for ᵇ ) —( L 4326 ) G(ed) मा भैषीरिति तामुक्त्वा ( for ᵃ ) —( L 4328 ) M1 धर्मात्मा ( for विश्वात्मा ) —( L 4333 ) D1 कावेर्या चतुरातके , G2 पुलिने च मनोरमे ( for ᵇ ) — G2 om line 4334 —( L 4336 ) G2 G(ed) श्वेतैश्च ( G2 चेतकी ) तित्रिणीविल्वै ( for ᵃ ) —( L 4339 ) D1 तस्य वै सेवनार्थं तु , G2 तस्य वै सेव्यमानस्य ( for ᵃ ) —( L 4343 ) D1 तत्सर्वं ( for ᵇ ) —( L 4346 ) D1 M1 कृपा मयि तवास्ति चेत् ( for ᵇ ) —Before line 4347, M1 ins भीष्म° वद नागेन्द्र ( for ᵃ ) M1 सर्वशास्त्रविशारद ( for ᵇ )

Colophon — *Sub-parvan* D1 G1 G(ed) माघपर्वणि — *Adhy name* G(ed) कावेरीशेषधर्मो , G2 M1 शेषधर्मो — *Adhy no* D1 G1 : M1 33, G(ed) 34 माहात्म्यम् —( L 4352 ), D1 [अ]

D1 G2 M1 शेष ( for अनन्त ) —( L 4354 ) D1 दिवारात्रम् , G2 [अ]होरात्रिम् ( for °त्रम् ) — Before line 4356, M1 ins G(ed.) महान् ( for मुनि ) —( L 4356 ) D1 G1 : प्रीतो ( for तुष्टो ) D1 तत्र ब्रह्मा

ब्रह्मणोदीरितं वाक्यं श्रुत्वा मुनिवरोऽब्रवीत् ।
भगवन्देवदेवेश कृतार्थोऽस्मि त्वदागमे ।
यथा प्रीणाति मे विष्णुस्तथा कुरु महामते ॥
शृणुष्व मद्वच पुत्र यदा लोकेश्वरो हरिः ।
हनिष्यत्यसुरं क्रूरं तदा ते दर्शनं भवेत् ॥
स्थित्वात्र कतिचित्कालं श्रीनिवासो जगन्मयः ।
वेदान्तैः सेव्यमानः सन्स्वं धाम समुपैष्यति ॥
राज्ञां तु दुर्विनीतानां पौलस्त्यस्य दुरात्मनः ।
कृत्वा तु निधनं तेषामत्रैव प्रत्युपैष्यति ।
रामाख्यो भगवान्विष्णुः सत्यं सत्यं न संशयः ॥
पुरंदरमुखा देवा स्थास्यन्त्यत्रैव नित्यदाः ।
श्रीनिवासमिदं क्षेत्रं लोके ख्यातिं गमिष्यति ॥
इत्युक्त्वान्तर्दधे पार्थ देवानां प्रपितामहः ।
तदाप्रभृति धर्मिष्ठ ऋषिरौद्दालको बुधः ।
प्रसन्नं द्वन्द्वहस्य पश्यन्नास्ते मुदा द्विज ॥
आविर्भूय धर्मात्मा देवोऽपि जगतीपतिः ।
श्रीनिवासस्य सेवार्थं गच्छ पुत्र कुरुष्व ह ॥
शेषेणैव प्रयुक्तोऽसौ शङ्खपालः प्रतापवान् ।
अमुं क्षेत्रं समागत्य परिचर्यापरो मुनिः ।
विष्णोः सर्वात्मनो राजन्नद्यापि कुरुते मुनी ॥

युधिष्ठिर उवाच ।

पाताळात्कुत्र सानिध्यमगमच्छङ्खपालकः ।
देवव्रत महाभाग स देशं मे वदस्व ह ॥

भीष्म उवाच ।

अगस्त्ये पश्चिमे तीर्थे शङ्खाख्ये तु महाह्रदे ।
आविर्बभूव शेषेण चोदितः शङ्खपालकः ॥
तदिदं चाभवत्क्षेत्रं क्षेत्राणामुत्तमं परम् ।
तीर्थानां चैव सर्वेषामुत्तमं तत्प्रचक्षते ॥
अगस्त्यो भगवानत्र लिङ्गभूतात्तु शंकरात् ।
तपस्तप्त्वा महातेजा अणिमादिगुणी ह्यभूत् ॥

युधिष्ठिर उवाच ।

किमर्थमत्र दृश्यन्ते नैव ते द्रुमजातयः ।
एको वसति बिल्वोऽसौ श्वेतः पुण्यतरः किल ॥

भीष्म उवाच ।

कृते कपित्थस्त्रेतायां तिन्त्रिणी द्वापरे नृप ।
जम्बूः कलौ युगे बिल्वो युगानां तु क्रमाद्गताः ॥

श्रीनिवासपुरं ज्ञेयं कावेर्या दक्षिणे तटे ।
युगत्रयावधिस्तस्य ततो वै लयमेष्यति ॥
दयता श्रीनिवासस्य ऋषिरौद्दालकः स्मृतः ।
स्मर्तॄणां मुनिद विद्धि गतानां वसतां किमु ॥
अद्यापि निर्जराः सर्वे परमस्थानकाङ्क्षया ।
वाञ्छन्ति वस्तुमत्रैव ऋषयश्च तपोधनाः ।
मृतानां सर्वपापानि छित्वा मुक्तिं ददाति च ॥

युधिष्ठिर उवाच ।

औद्दालको मुनिश्रेष्ठ किं कार्यमकरोत्तदा ।
तस्मै वरः कथं दत्तो विष्णुना प्रभविष्णुना ।
तत्सर्वं वद तत्त्वेन देवव्रत महामते ॥

भीष्म उवाच ।

तपः कुर्वति धर्मिष्ठे श्रीनिवासो जगन्मयः ।
सानिध्यमगमद्राजन्धिया साधर्ममिदम् ॥
स्पृष्टवांस्तस्य शरीरं तु सर्वलोकेश्वरो हरिः ।
ददौ वरं *समाहूय ब्राह्मणं विगतस्पृहम्* ॥

श्रीभगवानुवाच ।

तुष्टोऽस्मि तव धर्मज्ञ तपो निर्वर्तितं द्विज ।
द्विवारं ते मम ब्रह्मन्दर्शनं तु भविष्यति ॥
मम रामस्य रामस्य ततो मल्लोकमेष्यसि ।
त्वया स्थितमिदं स्थानं धर्मवृद्धिर्भविष्यति ॥
इत्युक्त्वान्तर्दधे देवो देवानां हितकृद्धरिः ।
तस्मात्त्वमपि राजेन्द्र श्रीनिवासं भजस्व ह ॥
चातुर्मास्यं वसतो जप्यं कावेर्या हरिसंनिधौ ।
श्रीनिवासमिदं क्षेत्रं दुर्लभं तु कलौ युगे ।
पुरा संचितपुण्यानामप्रयत्नेन वर्धते ॥
तत्र स्नाता पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य विष्णुलोकं व्रजन्ति हि ॥
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ।
स्मृतार्तिनाशिनी राजन्कावेरी पुण्यदायिनी ॥
दृष्टमात्रा हि कावेरी श्रीनिवासस्य संनिधौ ।
ददाति श्रीयुतं स्थानं नात्र कार्या विचारणा ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
श्रीनिवासं च कावेरीं नित्यं स्मरति यो नरः ॥
स्वर्गलोकप्रदा नृणां ब्रह्मलोकप्रदा तु सा ।

(for हि ते) —(L. 4357) $M_1$ उपागत (for प्रजापति) — Before line 4359 $M_1$ ins औद्दालकि and before line 4361, $D_1$ $M_1$ ins ब्रह्मोवाच —(L. 4361) $G_1$ यथा योगेश्वरो हरि (for ᵇ) —(L 4365) G(ed) महात्मन (for दुरा°) — $D_1$ om line 4368 —(L. 4372) G(ed) न्देवेन (for -द्वन्द्वहस्य) $D_1$ $G_2$ G(ed) द्विजोत्तम (for मुदा द्विज) —(L 4376) $D_1$ $G_2$ ऽभवत् (for मुनि) —(L 4379) $G_1$ कथयस्व, G(ed) म वदाद्य (for मे वदस्व) —(L 4380) $G_2$ $M_1$ ह्वाह्वे (for °ह्वये) —(L. 4383) $G_1$ G(ed) तीर्थानामुत्तमं चैव (for ᵃ) $G_1$ G(ed.) सर्वेषां (for उत्तमं) —(L 4385) $G_2$ महाघोर (for °तेजा) $G_1$ $M_1$ गुणान्वितः; G(ed) गुणान्वयो (for -गुणी ह्यभूत्) — $G_2$ om lines 4392-4396 —(L. 4393) $D_1$ $G_1$ $M_1$ स्थितानां (for स्मर्तॄणां) —(L. 4401) $G_2$ श्रीनिवासो महामते (for ᵇ) — $G_1$ om the ref —(L 4404) $D_1$ तुष्टो (for तुष्टो) —(L. 4405) G(ed) द्वापरान्ते (for द्विवारं ते) —(L 4406) $G_2$ ततो लोकं गमिष्यसि, $M_1$ ततो लोकं मुने (for ᵇ) —(L 4407) $D_1$ धर्मे वृद्ध, G(ed) पुण्यवृद्धिर् (for धर्म°) —(L. 4408) $M_1$ शुभ

सूर्यलोकप्रदा देवी चन्द्रलोकप्रदा तथा ।
सूर्यचन्द्रमसोर्लोकं शिवलोकप्रदायिनी ॥
स्नाताना सगमे चास्या श्रीनिवासस्य चाग्रत ।
विष्णुलोकप्रदा नृणा साक्षात्कृष्णेन भाषितम् ॥
षण्मास पुत्रकामस्तु स्नाति तत्र हि यो नर ।
कृपया वासुदेवस्य पुत्राश्च लभते ध्रुवम् ।
राज्यकामो लभेद्राज्य धनकामो लभद्धनम् ॥
अब्दत्रय व्रत कृत्वा कावेर्यां स्नाति यो नर ।
इह लोके सुख भुक्त्वा वैकुण्ठ सोऽश्नुते सुखम् ॥
एव प्रबोधितस्तेन कावेर्या स्नानवैभवम् ।
देवव्रतेन धर्मात्मा धर्मपुत्रो महामति ॥
प्रणम्य वैभव देव्या कावेर्या विविध स्थलम् ।
श्रोतुकामो महातेजा गाङ्गेय पुनरब्रवीत् ॥

युधिष्ठिर उवाच ।

पितामह नमस्तेऽस्तु पीत्वा तव वचोऽमृतम् ।
तृप्तिरद्य न मे जाता कावेर्यास्तीर्थसंश्रवे ॥
सगमे कपिलायास्तु कावेर्याश्च महामते ।
यत्फल तु भवेन्नृणा तन्मे त्व कृपया वद ॥
चन्द्रार्कपुष्करिण्योस्तु वह्निपुष्करिणी तटे ।
कुम्भघोणे महाक्षेत्रे हेमवत्यास्तु सगमे ॥
विशेषेण भृगुक्षेत्रे गजारण्यस्य वैभवम् ।
तद्वेद तस्य विवरं नृपाणा तत्र वर्तनम् ॥
अन्यच्चैव भवान्वेत्ति कावेर्या स्नानवैभवम् ।
कीर्तयस्व महाभाग कीर्तनादघनाशनम् ॥

सूत उवाच ।

प्रार्थितो धर्मपुत्रेण भीष्म कुरुकुलोत्तम ।
चिर ध्यात्वा नमस्कृत्य गङ्गां यदुकुलोत्तमम् ।
अब्रवीन्मधुर वाक्य धर्मसूनुमिदंमम ॥
परोपकारिण सन्तो धर्मार्थे स्वकलेवरै ।
वाचा किमुत सर्वेषां कुर्वन्ति प्रीणयन्ति च ॥

ये लोके भूसुरा विप्रा धर्मान्वदयन्त्यामिप्सया ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
रात्रौ दिनमुखे विप्रा निरुद्योगमना प्रभो ।
शृण्वन्ति सत्कथा ये ते यान्ति विष्णो पर पदम् ॥
कावेर्या कीर्तन ये तु कुर्वन्ति हानिश नरा ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
श्रीनिवासस्य माहात्म्य कावेर्या स्नानवैभवम् ।
शृणोति य सदा भक्त्या सर्वान्कामानवाप्नुते ॥
य इद पुण्यमाख्यान शृणोति श्रद्धया नर ।
सर्वपापविमुक्तो ब्रह्मलोके स गच्छति ॥

Colophon

वैशंपायन उवाच ।

श्रीनिवासस्य माहात्म्य श्रुत्वा प्रीतो महामति ।
धर्मराज पुन प्राह कावेरीं कीर्तयेति च ॥

भीष्म उवाच ।

अहो वक्ष्यामि माहात्म्य कावेर्या कुरुनन्दन ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
वहुराकपुष्करिण्योश्च माहात्म्य प्रवदामि ते ।
पुष्करिण्योस्तयोर्मध्य पावित्रामघनाशनम् ॥
वह्निपुष्करिणीं गत्वा नरा पापाहता अपि ।
प्रयान्ति विष्णुभवन परमानन्ददायकम् ॥
वह्निपुष्करिणीस्नान ईश्वरस्यावलोकनम् ।
कुर्वन्ति ये नरा भक्त्या ज्वलनार्कसमप्रभा ।
हसयुक्तेन यानेन यान्ति विष्णो परं पदम् ॥
वह्निपुष्करिणीं राम आदिस्मकुलसभव ।
अकरोद्रावणं सार्धं लक्ष्मणेन महात्मना ॥
ब्राह्मणेभ्यो धन दत्त्वा महति सन्निधौ पण ।
मायस्यान्यां दिशा रामसन्निधौ जजाप च ॥
देवाना चैव सर्वेषा मातर भुवनेश्वरीम् ।
आराध्य मनसा गङ्गाकावेरीं वै ननाम च ॥

( for हित ) — G2 om lines 4410–4414 — ( L. 4410 ) G(ed) स्नानं यचह्रषो जन्य ( for ° ) — ( L 4412 ) G1 ed ) लभ्यते ( for कथते ) — G2 om lines 4419–4429 M1 om. line 4422 — ( L. 4423 ) G(ed) सहस्रमरणमात्रेण ( for ° ) D1 शिवलोकं ददाति सा ( for ° ) — ( L. 4425 ) G(ed) विष्णु लोको भवेन्नृणा ( for ° ) — ( L. 4427 ) D2 M1 देवदेवस्य ( for वासु° ) — ( L 4428 ) G1 G(ed) धनलाभो ( for °कामो ) — D1 G1 2 M1 om line 4429 — After line 4430, G(ed) ins

177** इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ।

— Before line 4431, D1 G1 ins सूत and G(ed) वैशं पायन — — ( L. 4433 ) G(ed) शिरसा ( for वैभवं ) G1 कावेर्यां स्नानवैभवम् , G(ed) °र्यां विविधस्थलम् ( for ° ) — G1 om. the ref — ( L 4438 ) G1 यद्भवेत्तु फलं नृणां ( for ° )

— ( L 4439 ) D1 चन्द्र ( for वह्नि ) — ( L. 4441 ) G(ed) गजारण्ये च वैभवम् ( for ° ) — ( L. 4446 ) G1 हरिं ( for गङ्गां ) — ( L. 4447 ) D1 अरिन्दम , G1 अनुत्तमम् ( for अरिंद° ) — ( L. 4448 ) D1 धर्मार्थैं ( for धर्मार्थे स्व ) — G1 M1 om ( hapl ) 4452–4455 — ( L. 4452 ) D1 निरुद्योगे महामते , G(ed) °मा हि नरेश्वर ( for ° ). — ( L. 4454 ) D1 कुर्वन्ति दिवारात्रं नरा ( for ° )

Colophon — S begins D1 C1 M1 अश्ववैराति शेषपर्वा G2 G(ed) °प्रथम — Adhy name M1 G(ed) कावेरीमाहात्म्यम् — Adhy no D1 G1 2 M1 34 , G(ed.) 35

( L. 4460 ) G(ed) ररक्ष ? ( for महामति ) — ( L. 4461 ) G1 G(ed) अनुग्रह ( for °ति च ) — ( L. 4462 ) D1 C1 M1 मम कावेर्या स्नानवैभवम् ( for ° ) — ( L. 4463 ) C1 M1 मम

आहूय सीतया सार्धं तत्र विश्रवस सुतम् ।
अब्रवीन्मधुरं वाक्यं सर्वलोकोपकारकम् ॥
विभीषण महाभाग ब्राह्मणेभ्यो ददस्व ह ।
सौवर्णानि च रत्नानि धनानि विविधानि च ॥
रावणो निहत संख्ये सीतार्थं सर्वराक्षसै ।
राक्षसानां च सर्वेषा तृप्तिरद्य भविष्यति ॥
यत्त्वया सेविता देवी कावेरी पापनाशिनी ।
निवाप क्रियतामत्र युष्मत्पितृगण प्रति ॥
अत्र कुर्वन्ति ये श्राद्ध पितृणा मुक्तयेऽनघ ।
तेषा पुरातनास्तात प्रयान्ति हरिमन्दिरम् ॥
जप कुर्वन्ति ये विप्रा ह्यत्र पापविवर्जिता ।
प्रयान्ति हरिमालोक्य नारदात्तु मया श्रुतम् ॥
सङ्गात्तु यत्कृत पापमज्ञेन त्वयापि वा ।
तत्सर्वं लयमायातु ह्यगस्त्यानुग्रहात्प्रभो ॥
सत्सङ्गात्प्राप्यते स्वर्गो दु सङ्गान्निरयो ध्रुवम् ।
तस्मात्त्वया कृत सङ्गस्तेनैव लयमेष्यति ॥
कृतकृत्यो भवानेको राक्षसाना दुरात्मनाम् ।
सत्सङ्गतोऽप्यसङ्गिस्त्व तव जात महामते ॥
अगस्त्येन पुरा तात कावेरी पुण्यदायिनी ।
सर्वलोकहितार्थाय निर्मिता पुण्यकर्मणा ॥
वैदेहि पश्य कावेरीं गङ्गाद्या सर्वतोमुखाम् ।
कवेरकन्यां सर्वासां नदीना प्रवरा शुभाम् ॥
अगस्त्यपत्नीं पापघ्नीं ब्रह्मणो मानसीं सुताम् ।
स्नातव्यमत्र वै भीरु त्वया दानानि यत्नत ॥
दातव्यानि च विप्रेभ्यो वासासि विविधानि च ।
रत्नानि विप्रमुख्येभ्यो भूमिदानमनुत्तमम् ॥

भीष्म उवाच ।

राघवेन्द्रस्य तद्वाक्य श्रुत्वा परमपावनम् ।
पौलस्त्यप्रमुखा सर्वे स्नाताश्च कपिराक्षसा ॥
वैदेही च महाभागा स्नात्वा दत्त्वा वसूनि च ।
कान्ति लेभे स्वका तत्र सर्वतेजोमयीं शुभाम् ॥
एतस्मिन्नन्तरे धीमान्मुनीनामग्रणी प्रभु ।
मुनीनामपि सर्वेषामगस्त्यो भगवानृपि ।
सेव्यमानो मुनिगणैराययौ रामसंनिधिम् ॥
बोधायनस्तु भगवानापस्तम्बोऽथ गालव ।
शातातपो मय शङ्ख कात्यायनबृहस्पती ॥
संवर्तो यमकण्वौ च गौतम पुलह क्रतु ।
विश्वामित्र स्थूलशिरा कचच्यवनभार्गवौ ॥
सत्यापाढ शतानन्दो देवलो लोमश प्रभु ।
व्यास पराशरश्चैव याज्ञवल्क्यश्च भारत ॥
एवमाद्या महात्मानो मुनय संशितव्रता ।
राममालोकितु जग्मुर्दर्शनान्मुक्तिद प्रभुम् ।
अगस्त्यमग्रत कृत्वा सर्वे वै मुनिपुंगवा ॥

कृताशिषं राममुदीक्ष्य सर्वे
सत्यक्तकृच्छ्र सह लक्ष्मणेन ।
निरीक्ष्य सेना महतीं विमान
सविस्मय पुष्पकमाजगाम ॥

अथ रामो महातेजा गायत्र्याख्यशिलातले ।
नत्वा मुनीनां सर्वेषामर्घ्यं पाद्य चकार ह ॥
विनयावनतो भूत्वा रामो धर्मभृतां वर ।
सस्मित वचनं चेदमुवाच वदता वर ॥
कुशलं वो मुनिश्रेष्ठा पुनीतो भवदागमे ।
सौमित्रिर्जानकी चाह ऋक्षवानरराक्षसा ॥
अद्य मे सफल जन्म जीवित च सुजीवितम् ।
अद्य मे पापजालानि ध्वस्तानि भवदागमे ॥
इत्युक्त्वा तु मुनीन्सर्वान्पुनर्नत्वा महामति ।
प्राञ्जलि सीतया सार्धमुत्तस्थे लक्ष्मणेन च ॥
गृहीतार्घ्यैर्मुनिगणैर्निषीदेत्यनुसाशितम् ।
अगस्त्योऽप्याह धर्मात्मा रामचन्द्रमकल्मषम् ॥
काकुत्स्थ करुणासिन्धो राम राम हितकर ।
दिष्ट्या प्राप्तोऽसि वैदेह्या लक्ष्मणेन महात्मना ॥
त्वया सरक्षितो लोको अद्य वै करुणाकर ।
निहत्य रावणं सख्ये यज्ञशत्रु दुरासदम् ॥
ऋषीणाममितरूपाणां रक्षितानि तपासि ते ॥
अस्माभिर्यानि कर्माणि कृतानि सुबहूनि च ।
सफलानि भवन्त्यद्य राम त्वद्दर्शनात्प्रभो ॥

---

पापात् ( for सत्पापै ) — ( L 4470 ) D1 हसयुक्तविमानेन ( for ° ) — ( L. 4471 ) G(ed ) वह्निपुष्करिणीस्नानम् ( for ° ) — ( L. 4481 ) M1 सीतार्थे तव राक्षसै ( for ° ) — G1 om line 4484 — ( L. 4486 ) G1 नष्टा स्यु पापकर्मण ( for ° ) — ( L. 4488 ) G1 नात्र कार्या विचारणा ( for ° ) — ( L. 4491 ) C1 दु सङ्गात्रके मज्जेत् ( for ° ) — G1 om lines 4492 4498 D1 om. line 4494 — ( L. 4500 ) D1 संतर्प्य चात्र वैदेहि ( for ° ),— G1 om. lines 4503–4504 M1 om. the ref — ( L. 4507 ) D1 G(ed.) योगिनाम् ( for मुनी° ). — D1 G1 M1 om line 4508 — ( L 4509 ) D1 M1 ऋषि ( for मुनि ) — ( L. 4512 ) G1 संवर्तकश्च कश्यप ( for ° ) — ( L. 4514 ) D1 सत्याशुप ( for °षाढ° ) — ( L. 4516 ) G1 महाभागा ( for °त्मानो ) D1 ऋषयश्च मुनीश्वरा ( for ° ), — ( L. 4520 ) M1 सैन्यज्य सर्वे ( for °त्तकृच्छ्रं ) — ( L. 4523 ) D1 सविस्मिता राघवपुरस्तत्पुरा द्विजा ; M1 °च वे गतकल्मषा जना , G(ed ) °बालस्तमुरकल्मषा पुर — Before line 4527, G(ed ) ins. श्रीराम — ( L. 4527 ) G1 कुल च मे, M1 कुशलं वै ( for °लं वो ) — ( L. 4529 ) G1 अद्य मे जन्मसाफल्य ( for ° ) — ( L. 4532 ) D1 उपासी ( for °स्थे ) — For line 4533, G1 subst.

178** गृहीतार्घ्ये मुनिगणे ऋषि परमपावन ।

— ( L 4533 ) D1 [उ]कमजसा ( for [अ]नुसंशित — Before line 4535, D1 ins अगस्त्य — D1 om. (hapl.) lines 4544–4545 M1 om. (hapl.) lines 4544°–4545° — After line 4547, D1 ins. :

सूर्यलोकप्रदा देवी चन्द्रलोकप्रदा तथा ।
सूर्याचन्द्रमसोर्लोकं शिवलोकप्रदायिनी ॥
स्नातानां संगमे चास्या. श्रीनिवासस्य चाग्रत ।
विष्णुलोकप्रदा नृणां साक्षात्कृष्णेन भाषितम् ॥
षण्मासं पुत्रकामस्तु स्नाति तत्र हि यो नर ।
कृपया वासुदेवस्य पुत्रांश्च लभते ध्रुवम् ।
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ॥
अब्दत्रयं व्रतं कृत्वा कावेर्यां स्नाति यो नर ।
इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ॥
एवं प्रबोधितस्तेन कावेर्या स्नानवैभवम् ।
देवव्रतेन धर्मात्मा धर्मपुत्रो महामति. ॥
प्रणम्य वैभवं देव्या कावेर्या विविधं स्थलम् ।
श्रोतुकामो महातेजा गाङ्गेयं पुनरब्रवीत् ॥

युधिष्ठिर उवाच ।

पितामह नमस्तेऽस्तु पीत्वा तव वचोऽमृतम् ।
तृप्तिरद्य न मे जाता कावेर्यास्तीर्थसंभवे ॥
सगमे कपिलायास्तु कावेर्याश्च महामते ।
यत्फलं तु भवेन्नृणां तन्मे त्वं कृपया वद ॥
चन्द्रार्कपुष्करिण्योस्तु वह्निपुष्करिणी तटे ।
कुम्भघोणे महाक्षेत्रे हेमवत्यास्तु संगमे ॥
विश्वेश्वरे भृगुक्षेत्रे गजारण्यस्य वैभवम् ।
तद्भेदं तस्य विवरं ऋषीणां तत्र वर्तनम् ॥
अन्यच्चैव भवान्वेत्ति कावेर्या स्नानवैभवम् ।
कीर्तयस्व महाभाग कीर्तनादघनाशनम् ॥

सूत उवाच ।

प्रार्थितो धर्मपुत्रेण भीष्म कुरुकुलोत्तम. ।
चिरं ध्यात्वा नमस्कृत्य गङ्गा यदुकुलोत्तमम् ।
अब्रवीन्मधुरं वाक्यं धर्मसूनुमरिंदमम् ॥
परोपकारिण सन्तो धर्मार्थं स्वकलेवरैः ।
वाचा किमुत सर्वेषां कुर्वन्ति प्रीणयन्ति च ॥
ये लोके भूसुरा विप्रा धर्मान्वक्ष्यन्त्यमिष्यया ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
रात्रौ दिनमुखे विप्रा निरुद्योगमना प्रभो ।
शृण्वन्ति सत्कथा ये ते यान्ति विष्णो परं पदम् ॥
कावेर्या कीर्तन ये तु कुर्वन्ति ह्यनिश नरा ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
श्रीनिवासस्य माहात्म्यं कावेर्या स्नानवैभवम् ।
शृणोति य सदा भक्त्या सर्वान्कामान्समश्नुते ॥
य इद पुण्यमाख्यानं शृणोति श्रद्धया नर. ।
सर्वपापविमुक्तो ब्रह्मलोकं स गच्छति ॥

Colophon.

वैशंपायन उवाच ।

श्रीनिवासस्य माहात्म्यं श्रुत्वा प्रीतो महामति ।
धर्मराजः पुन प्राह कावेरीं कीर्तयेति च ॥

भीष्म उवाच ।

अहो वक्ष्यामि माहात्म्यं कावेर्या कुरुनन्दन ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
वह्न्यर्कपुष्करिण्योश्च माहात्म्य प्रवदामि ते ।
पुष्करिण्योस्तयोर्मध्यं पापिनामघनाशनम् ॥
वह्निपुष्करिणीं गत्वा नरा पापाकृता अपि ।
प्रयान्ति विष्णुभवन परमानन्ददायकम् ॥
वह्निपुष्करिणीस्नानं ईश्वरस्यावलोकनम् ।
कुर्वन्ति ये नरा भक्त्या ज्वलनार्कसमप्रभाः ।
हंसयुक्तेन यानेन यान्ति विष्णो परं पदम् ॥
वह्निपुष्करिणीं राम आदित्यकुलसंभव. ।
अकरोद्भार्यया सार्धं लक्ष्मणेन महात्मना ॥
ब्राह्मणेभ्यो धनं दत्त्वा सहरिः सविभीषण ।
गायत्र्याख्या शिला राक्षसधिरुह्य जजाप च ॥
देवानां चैव सर्वेषां मातर भुवनेश्वरीम् ।
आराध्य मनसा राजन्कावेरीं वै ननाम च ॥

(for द्वित- ). — G₂ om. lines 4410–4414 — (L. 4410) G(ed.) स्नानं सयत्तपो जप्य ( for ° ). — (L. 4412) G(ed) लभ्यते ( for वर्धते ) — G₂ om lines 4419–4429 M₁ om line 4422 — (L. 4423) G(ed) सकृत्स्मरणमात्रेण ( for ° ). D₁ शिवलोकं ददाति सा ( for ° ) — (L. 4425) G(ed) विष्णुलोको भवेन्नृणा ( for ° ) — (L. 4427) D₁ M₁ देवदेवस्य ( for वासु° ) — (L. 4428) G₁ G(ed) धनलाभो ( for °कामो ) — D₁ G₁ ₂ M₁ om line 4429. — After line 4430, G(ed) ins. '

177** इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ।

— Before line 4431, D₁ G₁ ins सूत. and G(ed) वैशंपायन . — — (L. 4433) G(ed) शिरसा ( for वैभवं ). G₁ कावेर्यां स्नानवैभवम् ; G(ed) °र्यां विविधस्थलम् ( for ° ). — G₂ om. the ref — (L. 4438) G₂ यत्तत्तेषु फलं नृणां ( for ° ). — (L. 4439) D₁ चन्द्र॰ ( for वह्नि ). — (L. 4441) G(ed) गजारण्ये च वैभवम् ( for ° ). — (L. 4446) G₁ हरिं ( for गङ्गा ). — (L. 4447) D₁ अरिंदम ; G₁ अनुत्तमम् ( for अरिंद° ) — (L. 4448) D₁ धनैरपि ( for धर्मार्थैः स्व- ) — G₁ M₁ om (hapl ) 4452–4455. — (L. 4452) D₁ निरुद्योगे महात्मनु , G(ed) °गा जितेन्द्रिया ( for ° ). — (L. 4454) D₁ कुर्वन्तोऽहर्निश नरा ( for ° )

Colophon — *Subparvan*. D₁ G₁ M₁ अनुशासनिके ... ; G₂ G(ed) ... — *Adhy name* M₁ G(ed) कावेरीमाहात्म्यम् — *Adhy no* - D₁ G₁ ₂ M₁ 34, G(ed) 35.

(L. 4460) G(ed) महीपति ( for महामति ) — (L. 4461) G₁ G(ed) धर्मपुत्र ( for °राज ) — (L. 4462) D₁ कावेर्या स्नानवैभवम् ( for ° ) — (L. 4463) G₂ M₁ नरः

आहूय सीतया सार्धं तत्र विश्रवसः सुतम् ।
अब्रवीन्मधुरं वाक्यं सर्वलोकोपकारकम् ॥
विभीषण महाभाग ब्राह्मणेभ्यो ददस्व ह ।
सौवर्णानि च रत्नानि धनानि विविधानि च ॥
रावणो निहतः सख्ये सीतार्थं सर्वराक्षसैः ।
राक्षसानां च सर्वेषां तृप्तिरद्य भविष्यति ॥
यत्त्वया सेविता देवी कावेरी पापनाशिनी ।
निवापः क्रियतामत्र युष्मत्पितृगणं प्रति ॥
अत्र कुर्वन्ति ये श्राद्धं पितृणां मुक्तयेऽनघ ।
तेषां पुरातनास्तात प्रयान्ति हरिमन्दिरम् ॥
जपं कुर्वन्ति ये विप्रा ह्यत्र पापविवर्जिताः ।
प्रयान्ति हरिसालोक्यं नारदात्तु मया श्रुतम् ॥
सङ्गात्तु यत्कृतं पापमप्रजेन त्वयापि वा ।
तत्सर्वं लयमायातु ह्यगस्त्यानुग्रहात्प्रभो ॥
सत्सङ्गात्प्राप्यते स्वर्गो दुःसङ्गान्निरयो ध्रुवम् ।
तस्मात्त्वया कृतः सङ्गस्तेनैव लयमेष्यति ॥
कृतकृत्यो भवानेको राक्षसानां दुरात्मनाम् ।
सत्सङ्गतोऽप्यसद्भिस्त्वं तत्र जात महामते ॥
अगस्त्येन पुरा तात कावेरी पुण्यदायिनी ।
सर्वलोकहितार्थाय निर्मिता पुण्यकर्मणा ॥
वैदेहि पश्य कावेरीं गङ्गाद्यां सर्वतोमुखाम् ।
कवेरकन्यां सवासां नदीनां प्रवरां शुभाम् ॥
अगस्त्यपत्नीं पापघ्नीं ब्रह्मणो मानसीं सुताम् ।
स्नातव्यमत्र वै भीरु त्वया दानानि यत्नतः ॥
दातव्यानि च विप्रेभ्यो वासांसि विविधानि च ।
रत्नानि विप्रमुख्येभ्यो भूमिदानमनुत्तमम् ॥

भीष्म उवाच ।

राघवेन्द्रस्य तद्वाक्यं श्रुत्वा परमपावनम् ।
पौलस्त्यप्रमुखाः सर्वे स्नाताश्च कपिराक्षसाः ॥
वैदेही च महाभागा स्नात्वा दत्त्वा वसूनि च ।
कान्तिं लेभे स्वकां तत्र सर्वतेजोमयीं शुभाम् ॥
एतस्मिन्नन्तरे धीमान्मुनीनामग्रणीः प्रभुः ।
मुनीनामपि सर्वेषामगस्त्यो भगवानृषिः ।
सेव्यमानो मुनिगणैराययौ रामसंनिधिम् ॥
बोधायनस्तु भगवानापस्तम्बोऽथ गालवः ।
शातातपो मयः शङ्खः कात्यायनबृहस्पती ॥
संवर्तो यमकण्वौ च गौतमः पुलहः क्रतुः ।
विश्वामित्रः स्थूलशिराः कचश्च्यवनभार्गवौ ॥
सत्यापाढः शतानन्दो देवलो लोमशः प्रभुः ।
व्यासः पराशरश्चैव याज्ञवल्क्यश्च भारत ॥
एवमाद्या महात्मानो मुनयः संशितव्रताः ।
राममालोकितुं जग्मुर्दर्शनान्मुक्तिदं प्रभुम् ।
अगस्त्यमग्रतः कृत्वा सर्वे ते मुनिपुंगवाः ॥

कृताशिषं राममुदीक्ष्य सर्वे
सत्यक्तकृच्छ्रं सह लक्ष्मणेन ।
निरीक्ष्य सेनां महतीं विमानं
सविस्मयं पुष्पकमाजगाम ॥

अथ रामो महातेजा गायत्र्याख्यशिलातले ।
नत्वा मुनीनां सर्वेषामर्घ्यं पाद्यं चकार ह ॥
विनयावनतो भूत्वा रामो धर्मभृतां वरः ।
सस्मितं वचनं चेदमुवाच वदतां वरः ॥
कुशलं वो मुनिश्रेष्ठाः पुनीतो भवदागमे ।
सौमित्रिर्जानकी चाहं ऋक्षवानरराक्षसाः ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
अद्य मे पापजालानि ध्वस्तानि भवदागमे ॥
इत्युक्त्वा तु मुनीन्सर्वान्पुनर्नत्वा महामतिः ।
प्राञ्जलिः सीतया सार्धमुत्तस्थौ लक्ष्मणेन च ॥
गृहीतार्घ्यैर्मुनिगणैर्निषीदेत्यनुसान्त्वितम् ।
अगस्त्योऽप्याह धर्मात्मा रामचन्द्रमकल्मषम् ॥
काकुत्स्थ करुणासिन्धो राम राम हितंकर ।
दिष्ट्या प्राप्तोऽसि वैदेह्या लक्ष्मणेन महात्मना ॥
त्वया संरक्षितो लोको अद्य वै करुणाकर ।
निहत्य रावणं सख्ये यज्ञशत्रुं दुरासदम् ॥
ऋषीणामभिकल्पानां रक्षितानि तपांसि ते ॥
अस्माभिर्यानि कर्माणि कृतानि सुबहूनि च ।
सफलानि भवन्त्यद्य राम त्वद्दर्शनात्प्रभो ॥

---

पापात् ( for सत्रपापे ) —( L 4470) D1 हंसयुक्तविमानेन ( for ° ) —( L 4471 ) G(ed) वह्निपुष्करिणीस्नानम् ( for ° ) —( L 4481 ) M1 सीतार्थे तव राक्षसे ( for ° ) —G3 om line 4484 —( L 4486 ) G2 नष्टाः स्युः पापकर्मणः ( for ° ) —( L. 4488 ) G3 नात्र कार्या विचारणा ( for ° ) —( L. 4491 ) G2 दुःसङ्गान्नरके मजेत् ( for ° ) — G3 om lines 4492 4498 D1 om line 4494 —( L. 4500 ) D1 सतर्पं चात्र वैदेहि ( for ° ) — G3 om lines 4502 4504 M1 om. the ref —( L 4507 ) D1 G(ed) योगिनाम् ( for मुनी° ). — D1 G1 M1 om line 4508 —( L 4509 ) D1 M1 ऋषि ( for मुनि ) —( L. 4512 ) G1 संवर्तकश्च कण्वश्च ( for ° ) —( L. 4514 ) D1 सत्यायुष° ( for °षाढ° ) —( L. 4516 ) G3 महाभागा ( for °त्मानो ) D1 ऋषयश्च मुनीश्वराः ( for ° ), —( L 4520 ) M1 सलज्य सर्वं ( for °कृच्छ्रं ) —( L. 4522 ) D1 सविस्मितं तरशुक्रकल्मषा द्विजाः ; M1 °य ते गतक्लमा जनाः G(ed) °यास्तरशुक्रकल्मषा मु° — Before line 4527 G(ed) ins श्रीरामः —( L. 4527) G1 कुलं च मे M1 कुशलं वै ( for °लं वो ). —( L. 4529 ) G3 अद्य मे जन्मसाफल्यं ( for ° ) —( L. 4532 ) D1 तस्थौ ( for °स्थे ) — *For line 4533 G3 subst.*

178** गृहीतार्घ्ये मुनिगणे ऋषिः परमपावनः ।

—( L 4533 ) D1 [उ]क्तमञ्जसा ( for [अ]नुसान्त्वितम् — Before line 4535, D1 ins *अगस्त्य* — D1 om ( hapl ) lines 4544 4545 M1 om ( hapl ) lines 4544° 4545° — After line 4547, D1 ins

हिताय सर्वलोकानां जातं रघुकुले शुभे ।
विष्णुं पुरातनं वेद्मि त्वामद्य रघुनन्दन ॥
संशास्ता सर्वलोकानां रक्षिता शिक्षितानघ ।
आत्मा सर्वभूतानां त्वमेव रघुनन्दन ॥
ब्रह्मविष्णुमहेशाना सृष्टिस्थित्यन्तकारिणम् ।
विदुस्त्वां राजशार्दूल रघुवंशविवर्धन ॥
इक्ष्वाकूणामयं वंशस्त्वया राम महामते ।
दिवो मार्गो यथा नूनं सविता पावनीकृतः ॥
एवं ब्रुवाणं तं रामो मुनिं नत्वा पुनः पुनः ।
अब्रवीन्मधुरं वाक्यं विनयावनतो नृप ॥
अगस्त्य मुनिशार्दूल ब्रह्मन्साक्षात्पिता यथा ।
संरक्षिता वयं सर्वे युष्माभिर्दण्डकावने ॥
कृपया तव विप्रेन्द्र पौलस्त्यं जितवानहम् ।
त्वया दत्तौ मुनिश्रेष्ठ तूणी चाक्षयसायकौ ॥
खड्गो दत्तो जितामित्रो लक्ष्मणस्य महात्मनः ।
तेनैवेन्द्रजितं हत्वा त्वया संरक्षितो रणे ॥
सीता संरक्षिता तात राक्षसीगणसेविता ।
अदृष्टा राक्षसैर्मूढैः कृपया तव सुव्रत ॥
भूयोऽपि दर्शनं प्राप्तं त्वया मुनिवरोत्तम ।
अत्र किं करणीयं मे तद्ब्रूहि करवाण्यहम् ॥

वैशंपायन उवाच ।

सुधासारमयं वाक्यं श्रुत्वा प्रीतो मुनीश्वरः ।
उवाच रामं धर्मज्ञं वदतां वरमव्ययम् ॥
गायत्र्याख्या शिला चेयं सर्वपापप्रणाशिनी ।
अस्यास्तु पुरतो राजन्कर्तव्या तु गवाकृतिः ।
कुरु गोप्रसरं तस्याः कुक्षौ सिद्धिं गमिष्यसि ॥
तथेति मुनिवाक्येन प्रीतो रघुकुलोत्तमः ।
गां तु स्वर्णमयीं कृत्वा तस्याः कुक्षौ प्रविश्य च ।
दानानि च बहून्यत्र ब्राह्मणेभ्यो ददौ नृप ॥
ऋषयोऽपि कपीन्द्राश्च राक्षसा भीमदर्शनाः ।
कृत्वा गोप्रसरं सर्वे पापैस्तत्र विमोचिताः ॥

शिवलिङ्गप्रतिष्ठां च कृत्वा तत्र मुनीश्वरैः ।
पूजयित्वा तु धर्मात्मा गायत्र्याख्यां शिलां गतः ॥
लक्ष्मणः पूजयामास शंकरं दक्षिणे तटे ।
वानराश्चैव रक्षांसि पूजयामासुरव्ययम् ॥
दक्षिणे लक्ष्मणक्षेत्रमुत्तरे राघवस्य च ।
सेव्यमानं सदा देवैर्मुक्तिमुक्तिफलप्रदम् ॥
गायत्र्युपरमध्यस्थो रामो रघुकुलोत्तमः ।
अगस्त्यं प्राह धर्मात्मा कृताञ्जलिपुटस्तदा ॥
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
इयं शिला तु गायत्र्या नाम्ना ख्यातिं कथं ययौ ।
नूनं तत्तु भवान्वेत्ति कृपया वद सुव्रत ॥

अगस्त्य उवाच ।

पुरा वृत्रवधं कृत्वा सुत्रामा रघुनन्दन ।
तद्दोषपरिहारार्थं कावेर्यां स्नातुमागतः ॥
ब्रह्मणो वचनाद्राम गायत्रीं वेदमातरम् ।
अस्यां शिलायामारुह्य जजाप च चतुर्युगम् ॥
सांनिध्यमकरोद्देवी गायत्री द्विजवन्दिता ।
तमब्रवीन्महाभाग मरुत्वन्तमरिंदमम् ॥
प्रसादं तव सुत्रामंस्तपसा तोषितास्म्यहम् ।
वरं वरय भद्रं ते वरदाहमिहागता ॥

इन्द्र उवाच ।

वृत्रस्य निधनाद्देवि महापापमुपस्थितम् ।
तद्दोषपरिहारार्थं त्वं मयोपासितानघे ॥
अघं मे नाशय क्षिप्रं पाहि मां स्वपुरे शुभे ।
बुद्धिस्वास्थ्यं मनःस्वास्थ्यं कुरु मे सर्वमङ्गले ॥

गायत्र्युवाच ।

तथा भवतु धर्मिष्ठ त्वया या सेविता शिला ।
गायत्री नामतो यस्मिँल्लोके ख्यातिं गमिष्यति ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
अत्र जप्त्वा दिवं याति गतपापो महामते ॥
इति तस्मै वरं दत्त्वा गायत्री तु तिरोदधे ।

---

179** ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपः शिवे स्थितः ।
स्वयं हि भगवान्विष्णुः पालयत्यखिलं जगत् ॥

— (L 4549) D1 तृणां (for नूनं) — Before line 4550, D1 G1 G(ed) ins भीष्म — (L 4553) D1 त्वया वै दण्डके (for ˚वने) (for ˚) — (L 4558) G1 M1 G(ed) ˚संवृता (for ˚सेविता) — (L 4559) G1 M1 रक्षिता (for अदृष्टा) — G1 om the ref G1 भीष्म — G1 om lines 4560–4561 — (L 4562) G1 नारायणः, M1 धारामय (for वैशंपायन) — (L 4563) G1 राजन्, G(ed) वाक्यं (for सार˚) — For line 4563, G1 subst

180** उवाच राजशार्दूल धर्मज्ञं वदतां वरम् ।

— Before line 4564, D1 G1 G(ed) ins. अगस्त्य and before line 4567, D1 M1 ins भीष्म — (L 4569) G2 ददौ नत्वा पुनः पुनः (for ˚) — (L 4570) G2 ऋषयः कपयश्चैव (for ˚) — (L 4572) D1 शिवलिङ्गं प्रतिष्ठाप्य (for ˚) — (L 4573) G(ed) पूजयामास धर्मात्मा (for ˚). — M1 om (hapl) line 4575 — (L 4575) G(ed.) ईश्वरम् (for अव्ययम्) — (L 4576) D1 दक्षिणे लक्ष्मणं तीर्थम् (for ˚) D1 उत्तरे रामतीर्थकम्, G1 M1 ˚रे राममव्ययम्, G(ed) ˚रे रामसेविते (for ˚) — (L 4581) D1 नाम्ना सेयं च गायत्र्या G1 नाम्ना गायत्र्याख्या चेयं (for ˚) D1 G1 M1 कथं ख्यातिं गता प्रभो, G2 कथं ख्यातिं गमिष्यति (for ˚) — (L 4586) G1 आरोप्य, G2 M1 आरूढो (for आरुह्य) — (L 4591) D1 अवारिथतम्, G(ed) समुप˚ (for उपस्थि˚) — (L 4593) G1 पाहि मां शुभदर्शने (for ˚) — After line 4602, D1

तस्माद्राघव जप्या सा गायत्री लोकवन्दिता ॥
ब्रह्मपुत्रो हि पौलस्त्यस्त्वया वै निहतो रणे ।
तद्दोषपरिहारार्थं गायत्र्यास्तु जपं कुरु ॥

राम उवाच ।

तथा करोमि भगवंस्त्वद्वचो मे हितं शुभम् ।
अयोध्यामृषिभिः सार्धं गन्तुमद्य त्वमर्हसि ।
यास्ये वानरमुख्यैश्च सार्धं रक्षोगणैः प्रभो ॥

भीष्म उवाच ।

इत्युक्त्वा तं नमस्कृत्य पुनः स्नात्वा युधिष्ठिर ।
छन्दसां मातरं जप्त्वा पुनर्दानानि दत्तवान् ॥
अगस्त्यो भगवानाह धर्मज्ञः सत्यसंगरम् ।
हरन्तं सर्वसंतापं देहिनामीश्वरं शुभम् ॥
तथा कुरु रघुश्रेष्ठ यास्ये पश्चाद्द्विजैः सह ।
स्नात्वात्र ऋषिभिः सार्धं जप्त्वा वै वेदमातरम् ॥
इति मुनिवचनं निशम्य रामो
मुनिविनिर्मितमेत्य सर्वं ।
सपदि समुपगतवानयोध्या
मुनिवरनिकरैरभिष्टुतात्मा ॥
स्नाता नरा ह्यत्र महाघसंयुता
दिवं प्रयान्त्येव कुमार्गगा अपि ।
तस्मादियं पाण्डव दुर्लभा भुवि
गङ्गा यथा ह्युत्तरदेशगामिनी ॥
अश्वमेधसहस्रं हि सविता त्वजयत्तपः ।
तेन पुण्यप्रभावेन सहस्रांशुरभूत्प्रभुः ॥

युधिष्ठिर उवाच ।

श्रीमता राघवेणेयं तप्तहाटकनिर्मिता ।
दृषद्रूपं समास्थाय दृश्यते धेनुरुत्तमा ।
एतन्मे कथ्यतां तात पापघ्नी पापनाशिनी ॥

भीष्म उवाच ।

क्रूराः कलौ युगे राजन्भविष्यन्ति हिंसकाः ।
मत्वैव मतिमान्विद्वानगस्त्यः कृतवान्दृषत् ।
तस्मादगस्त्यशापेन दृषद्रूपमुपागता ॥
पापानां नाशिनी धेनुर्दुर्लभा पापिनां कलौ ॥
वाञ्छितार्थप्रदा देवी कावेरी पापनाशिनी ।
शिला मोक्षप्रदा ह्येषा गायत्र्याख्या युधिष्ठिर ॥
महापातकयुक्तो वा यो वा को वा नृपोत्तम ।
मुच्यते सर्वपापेभ्यो रामलिङ्गस्य दर्शनात् ॥
य इदं पुण्यमाख्यानं राघवेन्द्रस्य चेष्टितम् ।
श्रुत्वा पापविनिर्मुक्तो यानारूढो दिवं व्रजेत् ॥

Colophon

भीष्म उवाच ।

*अत ऊर्ध्वं प्रवक्ष्यामि ह्यर्कपुष्करिणीं नृप ।*
यस्याः श्रवणमात्रेण नरः पापैः प्रमुच्यते ॥
अर्कपुष्करिणीतीरं गतानां सर्वदेहिनाम् ।
नश्यन्ति सर्वपापानि स्नातानां किमिहोच्यते ॥
पुरा विभावसुर्धीमांस्तपस्तेपे सुदुश्चरम् ।
तपसा तोषितो रुद्रः सांनिध्यमगमत्प्रभुः ॥
तं निरीक्ष्य तपस्यन्तं दिवाकरमरिंदमम् ।
प्राह गम्भीरया वाचा पार्वतीपतिरव्ययः ॥
सवितः पश्य मां देवमुमापतिमरिंदमम् ।
*वाञ्छितार्थप्रदं विद्धि तपसा तोषितं तव ॥*
एवमुक्तो महातेजाश्चण्डांशुश्च महामतिः ।
प्रणम्य शूलिनं देवं सविता स्तौति शंकरम् ॥

आदित्य उवाच ।

नमः शिवाय रुद्राय देवानां पतये नमः ।
ईशाय विष्णुरूपाय शूलिने परमात्मने ॥
नमः शर्वाय देवाय शंकराय नमो नमः ।
भूतेशाय नमस्तुभ्यं गिरीशाय नमो नमः ॥
मृत्युंजय विरूपाक्ष नमस्ते वेदरूपिणे ।
नमः पिनाकहस्ताय कृत्तिवासाय ते नमः ॥
भूताय भूतरूपाय भूतेशाय नमो नमः ।
उग्राय भीमरूपाय श्रीकण्ठाय नमो नमः ॥

(marg.) ins.

181** इति तस्य वचः श्रुत्वा राघवो मुनिरब्रवीत् ।

— G2 om. lines 4603b–4604a — (L. 4604) G2 गन्तु मर्हसि सुव्रत (for b) — (L. 4605) G2 अयोध्यां राक्षसैः सह (for a) — G(ed.) om. the ref. — (L. 4622) G2 M1 राघवेन्द्रेण (for °णेय) — (L. 4624) G2 पापघ्न पापनाशनम्, G(ed.) श्रोतॄणामघनाशनम् (for b) — (L. 4625) G2 M1 घोराः (for क्रूराः) D1 तस्कराः (for हिंसकाः) — (L. 4626) G(ed.) अगस्त्यश्च शशाप ताम् (for b) — G2 om. lines 4630–4632 — (L. 4632) D1 G1 M1 कोटि (for सर्वं) — (L. 4634) G2 M1 G(ed.) तु पाप- (for पापवि)

Colophon — *Sub-parvan* D1 M1 आश्रयपर्वणि शेषधर्मा, G1.2 G(ed.) शेषधर्मो — *Adhy. name* D1 G(ed.) वह्निपुष्करिणीप्रशंसा — *Adhy. no.* D1 G1.2 M1 35, G(ed.) 36

(L. 4636) G1 सर्वं (for नरः) — G2 om. lines 4637–4638 — (L. 4638) G(ed.) स्नातानां किमुतानघ (for b). — (L. 4643) D1 अवस्थितम् (for अरिंदमम्) — G1 om. the ref. G2 सविता (for आदित्य) — (L. 4649) G1.2 शिवाय (for शर्वाय) — D1 om. (hapl.) line 4650 G1 M1 om. (hapl.) lines 4651–4656 — (L. 4651) D1 G(ed.) मूर्तये (for -रूपिणे) — (L. 4652) D1 G(ed.) नमस्ते कृत्तिवाससे (for ) — M1 om. (hapl.) lines 4653–

चन्द्रचूडामणे तुभ्यं वामदेवाय ते नमः ।
कृशानुरेतसे तुभ्यं सर्वज्ञाय नमो नमः ॥
त्रिपुरान्तक नमस्तेऽस्तु मृत्युरूपाय ते नमः ।
धर्माय धर्मरूपाय सुधर्मपतये नमः ॥
यज्ञाय यज्ञरूपाय यज्ञानां फलदायिने ।
वेदमूर्ते नमस्तुभ्यं ब्रह्मविष्णुदिवाकृते ॥
एवं स्तुत्वा वरं वव्रे नन्दिवाहनमव्ययम् ॥
आदित्य उवाच ।
त्रयाणामपि मूर्तीनां शान्तिं मे शंकर प्रभो ।
देहि देहभृतां मोक्षं मामेव स्तुवतां सदा ॥
मया कृतमिदं स्तोत्रं शृण्वतो वदतामपि ।
सर्पापक्षय देव कुर्वस्यास्तीरवासिनाम् ॥
स्नातानामत्र कावेर्यामाख्यानं शृण्वतामपि ।
एतान्सर्वान्पशुपते देहि मे करुणाकर ॥
इति स्तुतो महादेवो दत्त्वा तस्मै वरान्बहून् ।
तथास्त्विति समामन्त्र्य भूतैः सह तिरोदधे ॥
स भानुस्तत्र तं देवं चिरमाराध्य भक्तितः ।
क्रतुं पशुपतेरिष्ट्वा ह्यश्वमेधमनेकशः ॥
प्रीणयित्वा तदा देवान्पुरंदरपुरोगमान् ।
त्रिदशैः प्रार्थ्यमानोऽसौ पुरंदरपुरं ययौ ॥
सर्वतेजोमयं दृष्ट्वा ह्यदितेरात्मसंभवम् ।
यष्टुं तत्र समागम्य कावेर्यास्तटमुत्तमम् ॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा बहुलदक्षिणैः ।
ईशानं प्रीणयित्वा ते द्योतमाना दिवं ययुः ॥
भस्मानि तत्र दृश्यन्ते ह्यद्यापि मनुजेश्वर ।
तैरालेपितसर्वाङ्गः सर्वपापैः प्रमुच्यते ॥
आराध्य तत्र वै देवं बहवो मनुजेश्वर ।
स्वर्गं प्रपेदिरे पूर्वमद्यापि मनुजेश्वर ॥
शूलपाणिनमुद्दिश्य मुक्त्यर्थं मनुजोत्तमाः ।
जमदग्निर्भरद्वाजः कचः कण्वो युधिष्ठिर ॥
एते वै द्विजमुख्याश्च तपः कुर्वन्ति चाधुना ।
शान्ता जितारिषड्वर्गा ह्यदृष्टाः पापकर्मभिः ॥
करोति यः सदा स्नानमर्कपुष्करिणीतटे ।
मासमेकं नृपश्रेष्ठ तस्य मोक्षो भवेद्ध्रुवम् ॥
कावेर्यां स्नाति यो विद्वानर्कनाथस्य संनिधौ ।
सूर्यलोकमवाप्नोति ह्यादित्यकृपया नृप ॥
अत्र स्नाता पापिनोऽपि ज्वलनार्कसमप्रभाः ।
पितृमातृकुलैः सार्धं ब्रह्मलोकं व्रजन्ति हि ॥
तत्र स्नानप्रभावेन तपसा परमष्ठिना ।
प्रापिता सूर्यलोकं तु सूर्यरक्षार्थमादरात् ।
त्वं चासौ मारुतिर्भीमः सव्यसाची यमौ नृप ॥
अर्कपुष्करिणीस्नानं कुरुध्वं वै द्विजैः सह ॥
प्रीतोऽस्मै भास्करो देवः सर्वदेवाभिपूजितः ।
स्वस्थानं स्नानमात्रेण सर्वान्कामान्प्रयच्छति ॥
कलौ तु दुर्लभं नॄणां पापिनां मनुजेश्वर ।
अर्कपुष्करिणीस्नानं प्राप्यते पुण्यकर्मभिः ॥
यज्ञभुक्सर्वगो विष्णुः कर्मणां फलदायकः ।
स्नानेन तपसा यस्मै रवेस्तुष्टो जनार्दनः ॥
कालमूर्तिधरं दिव्यं ब्रह्मणः कालकारकम् ।
उदयास्तकरं दिव्यं चक्रमण्डलमध्यगम् ॥
सहाध्युग्यं देवालिसेवितं ब्रह्मकोटिभिः ।
तत्तद्धाटकरत्नैश्च चित्रितं ब्रह्ममूर्तिमत् ॥
स्वयं लोकरक्षार्थं ददौ तस्य जनार्दनः ।
स एव तात भगवान्स्नातानामत्र वै फलम् ।
न वेद्मि राजशार्दूल नारदोऽप्येवमब्रवीत् ॥
अथ वै संप्रवक्ष्यामि कावेर्यास्तीर्थमुत्तमम् ।
यस्य श्रवणमात्रेण नरः पापैः प्रमुच्यते ॥
कण्वतीर्थं प्रवक्ष्यामि कावेर्याश्चोत्तरे तटे ।
कण्वस्य चरितं राजन्सर्वमङ्गलदायकम् ॥
कण्वाश्रमसमीपे तु कावेर्यां स्नाति यो नरः ।
स मुक्तः सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
अत्राश्चर्यतमं पुण्यमितिहासं पुरातनम् ।
वक्ष्यामि भारतश्रेष्ठ सर्वपापप्रणाशनम् ॥
कावेर्यास्तु नदीतीरे हैमवत्यास्तु संगमे ।
पुरं हैमवतं नाम सर्वैश्वर्यसमन्वितम् ॥
चित्रकेतुसुतः श्रीमान्व्याघ्रकेतुः प्रतापवान् ।
रैवतस्य मनोर्वंशे संजातो हेमभूषणः ॥
बह्वर्कपुष्करिण्योऽस्तु मध्ये परमपावनम् ।
यशवाट चकारासौ व्याघ्रकेतुर्महामतिः ॥
राजसूयशतं धीमानश्वमेधशतं नृपः ।
अकरोद्गुणा सार्धं गुरुणा वशिना वशी ॥
कण्वाय ब्रह्मविदुषे स राजा मदनां वरः ।
ग्रामाणामेकपञ्चाशद्दक्षिणार्थं प्रदत्तवान् ॥
तस्य भृत्यो वसुर्नाम ब्राह्मणो वेदपारगः ।

4658 G1 : om (hapl) lines 4653-4656 — For line 4655, D1 subst
*182** चन्द्रमूर्धमणे तुभ्यं सर्वेशाय नमो नमः ।
— D1 om (hapl) line 4656 — (L. 4657) G2 त्रिपुर — G1 प्राय देवाय, G(ed) पुरान्तक नमस्तेऽस्तु (for °) — G1 G(ed) om the ref G1 om lines 4665 4666 — (L. 4671) D1 G2 M2 क्रतु पशुपतिं दृष्ट्वा (G2 यजन्, M1 यष्टुं) (for °) G(ed.) ह्यश्वमेधान् (for °मेधम्) — (L. 4675) D1 स्नातु (for यष्टु) — (L. 4676) G(ed) अश्वमेधादि भिर्यज्ञैर् (for °) G2 द्योतमाना दिव गताः (for °) — G(ed) om lines 4680-4681 — (L. 4681) D1 मनु° जोत्तमा (for °जेश्वर) — G1 om line 4682 — (L. 4687) G2 नरश्रेष्ठ G(ed) द्विज° (for नृप°) — G2 om lines 4690 4710 G1 M1 om (hapl) lines 4695°-4699° — M1 — (L. 4704) M1 स्थापित ब्रह्ममूर्तिमत् (for °) — M1 om line 4705 — (L. 4709) D1 कावेर्याश्चोत्तरे तटे; G1 M1

बाल्यात्प्रभृति शिष्यश्च ह्यनुकूलार्थविद्बुध ।
ग्रामाणां चैव सर्वेषामाधिपत्यं चकार ह ॥
वञ्चयित्वा मुनिवरं निष्काणां तु शतत्रयम् ।
कृष्यैरर्जयामास सहस्रं राजसत्तम ॥
चोरतस्करदुर्वृत्तैस्तद्धनं तु विनाशितम् ।
पापानां पाण्डवश्रेष्ठ पात्रमासीद्द्विजोत्तम ।
तथापि मन्युं न प्राप कण्वो वदविदां वर ॥
स निर्जितेन्द्रियग्राम समलोष्टाश्मकाञ्चन ।
शिष्याणां चैव सर्वेषां ददौ ग्रामान्पृथक्पृथक् ।
सोऽतिष्ठत्सर्वधर्मज्ञो निर्द्वन्द्वो गतकल्मष ॥
स वसुश्चाल्पकालेन गुरुद्रोहात्सुदुर्बुद्धिमान् ।
पञ्चत्वमगमद्राजस्तेषु तेषु स्थितेषु च ॥
विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात् ।
आदौ पपात तामिस्रे व्याघ्रशूल तत परम् ॥
तप्तकुम्भ तप्तशूल तप्तसैकतमञ्जनम् ।
कृमिभोजनमन्युग्रं वृकराक्षसभक्षणम् ॥
एतान्सर्वान्महाघोरान्नरकाननुभूय च ।
षष्टिवर्षसहस्राणि तदन्ते ब्रह्मराक्षस ॥
तत्रापि युगपर्यन्तं तदन्ते गृध्रोऽभवत् ।
जातिस्मरणसंपन्न सदा दवप्रपूजक ।
उद्युक्त सर्वथा राजन्कण्व पुनरथागमत् ।
नमस्कृत्य द्विजवरं प्राञ्जलि पुरत स्थित ॥
तमब्रवीन्महाभाग पाहि मां मुनिपुंगव ।
त्वत्पादकमलादन्या गतिर्मम न विद्यते ॥
रक्ष मां नरके मग्नं दैवयोगाद्विनिगतम् ।
दीनं कृतघ्नं दुर्वृत्तं ब्रह्मद्रव्यापहारकम् ॥

भीष्म उवाच ।

एतच्छ्रुत्वा द्विजश्रेष्ठ शूद्रस्य करुणां गिरम् ।
दृष्ट्वा तमब्रवीद्विद्वांस्तस्य निर्वेदकारणम् ॥

कण्व उवाच ।

अवैमि तेऽधुना वृत्तं भो शूद्र प्राकृत खलु ।
तद्दोषपरिहारार्थमुपायं ते वदामि च ॥
ईश्वरं सर्वभूतानां कर्तारं भुवनेश्वरम् ।
अमुं पुरातनं देवं शूलपाणिमरिंदमम् ॥
त्रिकालमर्चयन्नित्यं प्रदक्षिणपुरःसरम् ।
जन्मान्तरशते पापैर्विमुक्तो ध्रुवमेष्यसि ॥
तथेति तं नमस्कृत्य नाम्ना वै शूद्रशूलक ।
त्रिंशदब्दत्रयं राजन्कुर्वाणो देवपूजनम् ॥
स्नात्वा स्नात्वा पुन स्नात्वा कावेर्यां भक्तिमान्दृढम् ।
पूजयामास राजेन्द्र तदा निष्कल्मषोऽभवत् ।
पूजयित्वा चिरं कालं धर्मतो धर्मनन्दन ॥
स्नात्वा कदाचित्कावेर्यां देवदेवस्य चाग्रत ।
दिष्टान्तमाययौ शूद्रो नमस्कारात्प्रकाशित ॥
दिव्यं विमानमारुह्य देवगन्धर्वसेवित ।
अप्सरोगणसंकीर्णो मुनिमेनमथाब्रवीत् ॥
भगवन्मुनिशार्दूल सिद्धोऽहं त्वत्प्रसादत ।
ते कीर्तिर्लोकविख्याता भविष्यति नमोऽस्तु ते ॥
एकाहमपि य कुर्वन्पूजनं तु पिनाकिन ।
स्नात्वा प्रदक्षिणं कृत्वा तस्य मोक्षो भविष्यति ॥
देवस्यास्य पुरो विद्वान्कावेर्यां स्नाति यो नर ।
तस्य मुक्तिर्भवेच्छुद्धा मया दृष्टा हि संप्रति ॥
मया वसूनि सर्वाणि पूर्वं त्वपहृतानि ते ॥
तत्सर्वं क्षम्यतां विप्र भूयो भूयो नमोऽस्तु ते ॥
इत्युक्त्वा देवकुसुमैरभिषिच्य मुनिं प्रभुम् ।
भूतसंघै परिवृत शिवसायुज्यमाप्तवान् ॥
प्रदक्षिणनमस्कारं य कुर्यात्स्नानपूर्वकम् ।
तस्य मुक्तिर्भवेत्पार्थ कावेर्यां नात्र संशय ॥
भद्रार्कपुष्करिण्योस्तु स्नातानां तीर्थ उत्तमे ।
मुक्तिरेव भवेद्राजन्हैमवत्यास्तु संगम ॥
संगमे हैमवत्यास्तु कावेर्याश्च महानले ।
स्नातानां ब्रह्मणो लोक स्थिरमाह च नारद ॥
एकवारं तु य स्नायात्कावेरीहैमसंगमे ।
जन्मान्तरकृतै पापैर्मुच्यते नात्र संशय ॥
यज्ञदत्त पुरा विद्वान्निर्धनो ब्रह्मवित्तम ।
सर्वतीर्थेषु स स्नात्वा पितॄन्संतर्प्य वारिणा ॥
पितरो मे न तृप्ता स्युरिति मत्वा सुबुद्धिमान् ।
कावेरीहैमवत्योस्तु संगमं प्राप्तवान्द्विज ॥
स्नात्वा अहत्वा तथा देवान्प्रीणयित्वा तु तर्पणै ।
उद्दिश्य स्वपितॄंस्तत्र निवापं दत्तवान्किल ॥
गोत्रनामानि संकीर्त्य निवापे दत्तमात्रके ।
मूर्तिमन्त पितृगणा ह्यग्रे तस्थुश्च संगमे ॥
अब्रुवन्विप्रशार्दूल यज्ञदत्तमकल्मषम् ।

---

°यां स्नानवैभवम् (for °) — D1 om line 4710–4711 — (L. 4715) D1 अत्राश्चर्यमयं पुण्यम् (for °) — (L. 4717) D1 महाभाग (for नदीतीरे) — (L. 4727) G(ed) शिष्यो (for भृत्यो) — (L. 4740) M1 कारणात् (for पातकात्) — (L. 4754) G1 मुनि (for द्विज) — (L. 4759) G2 महेश्वरम् (for अरिंदमम्) — (L. 4761) G1 G(ed) °कृते (for शते) G(ed) °न्ध्रुवम् (for ध्रुवम्) — (L. 4762) G(ed) तदा वै स तु शूद्रक (for °) — (L. 4764) D1 स्नात्वा च तर्पणं कृत्वा (for °) D1 स्थित, G1 दृढ (for दृढम्) — (L. 4768) D1 नमस्कारप्रदर्शित, G(ed) °रात्प्रकाशयन् (for °) — D1 om. lines 4769–4773 — (L. 4774) D1 च तर्पणं (for प्रदक्षिणं) G(ed) भवेद् ध्रुवम् (for भविष्यति) — (L. 4776) G2 शुद्धिर्; G(ed) दृष्टा (for शुद्धा) G(ed) सृष्टा (for दृष्टा) — (L. 4777) G(ed) पूर्वं तव हृतानि वै (for °) — (L. 4779) G(ed) अभ्यर्च्य मुनिपुंगवम् (for °) — Before line 4781 G1 ins भीष्म॰ G2 om lines 4783–4788 — (L. 4788) M1 शते (for कृते) — G1 2 om lines 4791–4793 — (L. 4794) G2 निवा°

पितर प्रीतिमापन्ना दिव्यरूपधरामला ॥

पितर ऊचु ।

अद्य तृप्ता स्म वत्स त्व कावेरीहेमसगमे ।
निवाप दत्तवानस्मानुद्दिश्य हि शुभे जले ॥
तस्मात्प्रीता स्म ते वत्स सर्वसपद्भविष्यति ।
ब्रह्मणो लोकमायामो यत्र गत्वा न शोचति ॥
इत्युक्त्वा पितर सर्वे पश्यद्दत्तमकल्मषम् ।
तिरोऽभवन्स विप्रेन्द्रो विस्मय परम गत ॥
देहावसानपर्यन्त स विप्रो भार्यया सह ।
पुत्रपौत्रै परिवृत सर्वान्कामानवाप्तवान् ॥
देहावसानसमये सुरलोकेषु पूजित ।
ततो वै भुवमासाद्य चक्रवर्ती ह्यजायत ॥
स विप्र पुत्रपौत्रैश्च भुक्त्वा स्वर्लोकमाप्तवान् ।
ततो वै भुवमासाद्य चक्रवर्तीह जायते ॥
हेमभूषणनाम्नासौ विख्यातो भुवि भूपते ।
पुर हैमवत नाम चक्रे राजन्स्वनामत ॥
तत्र दिव्यक्रतूनिष्ट्वा सर्वान्देवान्प्रपूज्य च ।
वर्षाणामयुत श्रीमान्प्रजा धर्मेण पालयत ॥
इष्ट्वा तु विविधान्यज्ञान्प्रजा धर्मेण पालयन् ।
अन्ते जगाम भवन विष्णो सर्वात्मन प्रभो ।
तत्र भोगाश्चिर भुक्त्वा तत्रैव स प्रमुच्यते ॥
तस्मात्सेव्या त्वया राजन्कावेरी हेमसगमे ।
पितरस्तृप्तिमेष्यन्ति तव मुक्तिर्भविष्यति ॥
य इद पुण्यमाख्यान कावेरीहेमसगमे ।
श्रुत्वा पापविनिर्मुक्तो ब्रह्मलोक स गच्छति ॥

Colophon

वैशपायन उवाच ।

प्रहृष्टात्मा महातेजा धर्मपुत्रो महामति ।
पुनरेव शुभ वाक्य नमस्कृत्वेदमब्रवीत् ॥
ब्रूहि मे कपिलायाश्च कावेर्या सगमे फलम् ।
यस्य श्रवणमात्रेण तृप्तिर्मे भवितानघ ॥

भीष्म उवाच ।

कावेर्या कपिलायाश्च माहात्म्य स्नानज फलम् ।
वक्ष्यामि तव सप्रीत्यै शृणु नान्यमना प्रभो ॥
कावेर्या कपिलायाश्च सगमे वासिन प्रभो ।
श्रीकण्ठस्य शिवस्यास्य कीर्तन प्रवदामि ते ॥
कावेरी पाविता येन नीलकण्ठेन शभुना ।
स्नातानाममलस्तस्य कैवल्य भवति प्रभो ॥
कवेरकन्या कपिला स्मृता पापप्रणाशिनी ।
स्नानानां मोक्षदा देवी कपिला सर्वकामदा ॥
क्षेत्राणामुत्तम क्षेत्र तीर्थाना च तथोत्तमम् ।
कावेरीकपिलायोग वदन्ति परमर्षय ॥
कावेरीकपिलातीर ब्रह्माद्या सर्वदेवता ।
मुनयो मानवाश्चैव सेवन्ते पुण्यकाङ्क्षिण ॥
कावेरी पुण्यदा ज्ञेया निर्मिता परमेष्ठिना ।
पापहा कपिला ज्ञेया तयोर्योगस्त्वनुत्तम ॥
स्मृतार्तिनाशिनी देवी कावरी पुण्यदायिनी ॥
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ॥
यानि क्षेत्राणि पुण्यानि दक्षिणस्या दिशि प्रभो ।
तेषा पुण्यतम ज्ञेय कावेरीकपिलासगम् ॥
यन्मज्जन महापुण्य दुर्लभ ह्यकृतात्मनाम् ।
साधूना सुलभा देवी प्रीता मोक्षप्रदायिनी ॥
ईजे च विश्वसृग्धीमान्नीलकण्ठ प्रति प्रभो ।

पान् ( for ॰प ) — ( L 4795 ) G2 सकल्प्य ( for सकीर्य ) — ( L 4797 ) G2 अर्जुन राजशार्दूल ( for ॰ ) M1 यशमूर्तिम् — ( L 4802 ) D1 ब्रह्म॰ ( for ॰दत्तम् ) — G1 om the ref — ( L 4803 ) D1 ब्रह्म॰ — G2 om lines 4805 4808 G1 लोकमितो यामो ( for ॰ ) — G2 om lines 4805 4808 G1 M1 G(ed) om line 4809 — ( L 4811 ) G2 विख्यातो M1 G(ed) om line 4809 — ( L 4814 ) सुपनत्रये ( for ॰ ) — G1 om lines 4813 — ( L 4814 ) सुपनत्रये ( for ॰ ) — G2 G1 M1 ( also in text ) इष्ट्वा तु विविधा यज्ञान् ( for ॰ ) — G2 om lines 4816 4818 — ( L 4821 ) G(ed) शृणोति पाप॰ om lines 4816 4818 — ( L 4821 ) G(ed) शृणोति पाप॰ निर्मुक्तो ( for ॰ ) D1 M1 व्रजेद् ध्रुवम् ( for स गच्छति )

Colophon — *Sub-parvan* D1 M1 आश्चर्यपर्वणि शेष धर्मो , G1 2 G(ed) शेषधर्मो — *Adhy name* D1 कावेरी हेमवतीसगमे अर्कपुष्करिणीप्रशसा M1 G(ed) अर्कपुष्करिणी प्रशसा ( M1 ॰सनम् ) — *Adhy no* D1 G1 2 M1 36 ; G(ed) 37

D1 om lines 4822–4823 with the ref — ( L 4822 ) G(ed) सप्रहृष्टो ( for प्रहृष्टात्मा ) — Before line 4824 D1 ins युधिष्ठिर — ( L 4824 ) G(ed) प्रब्रूहि ( for ब्रूहि मे )

D1 माहात्म्य स्नानजं फलम् ( for ॰ ) — D1 om lines 4826–4827 — ( L 4826 ) G(ed) स्नानवैभवम् ( for ॰ज फलम् ) — ( L 4830 ) G(ed) कपिला ( for पाविता ) G(ed) भूषिता ( for शंभुना ) — ( L 4831 ) D1 M1 G(ed) ध्रुवम् ( for प्रभो ) — G2 om lines 4832 4841 — ( L 4832 ) G(ed) कावेरीकपिलासगे ( for ॰ ) — ( L 4833 ) G1 कावेरी पुण्यदायिनी ( for ॰ ) — ( L 4834 ) G(ed) तीर्थानामुत्तमं तीर्थं ( for ॰ ) G(ed) क्षेत्राणां ( for तीर्थानां ) — ( L 4839 ) D1 M1 तयोर्योगमनुत्तमम् ( for ॰ ) — ( L 4842 ) G1 दिव्यानि ( for पुण्यानि ) G(ed) यानि पुण्यानि तीर्थानि ( for ॰ ) — After line 4842 G2 ins

183** तानि मुक्तिप्रदायीनि सत्य सत्य वदाम्यहम् ॥
अधुना किं प्रलापेन कावेरी सरितां वरा ।
दर्शनात्स्पर्शनात्पानात्कीर्तनस्नानमुक्तिदा ॥
अश्वमेधसहस्राणि कावेर्यास्तु तटे शुभे ।
मोक्षदायीनि सर्वाणि सत्य सत्य मयोदितम् ।
समस्तदेवता सर्वे ऋषिसिद्धाप्सरास्तथा ।

तथा च मुनय सर्वे चक्रुश्च विविधान्मखान् ॥
कावेरी कपिला लोक त्रायते पुण्यवारिणा ।
स्नाताना सर्वपापानि छित्वा मुक्तिं ददाति च ॥
यत्र स्नाता पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य प्रयान्ति परम पदम् ॥
कावेर्या कपिलायाश्च महिमा केन गण्यते ।
नाह शक्नोमि गदितु स्नाताना सगमे फलम् ॥
तुलामासे महाराज गङ्गाद्या सकलापगा ।
कावेर्यावर्तनं तात कुर्वन्त्यात्मविशुद्धये ॥
या पुण्यतिथय प्रोक्ता शास्त्रेषु मुनिपुंगवै ।
तासु स्नाति नरो भक्त्या ब्रह्मलोक प्रयाति वै ॥
मकरस्थे रवौ माघे संगमे स्नाति यो नर ।
सर्वाल्लँलोकान्विनिर्जित्य विष्णुलोक व्रजेद्ध्रुवम् ॥
यस्या दर्शनमात्रेण कावेर्या सगमे नृणाम् ।
सर्वपापानि नश्यन्ति जन्मान्तरकृतानि च ॥
मकरस्थे रवौ माघे यो वा स्नाति त्र्यह नृप ।
स मुक्त सर्वपापेभ्यो यानारूढो दिव व्रजेत् ॥
माघमासे महाराज पक्षमात्रमतन्द्रित ।
स्नाति य सकलान्वश्यानुद्धार्य स दिवं व्रजेत् ॥
मासमात्रं नरो माघे कावेर्यां कपिलागमम् ॥
कोटिवंशसमायुक्तो ब्रह्मलोक स गच्छति ॥
अश्वमेधसहस्राणि वाजपेयायुतानि च ।
कृत्वा यत्फलमाप्नोति स्नातानामत्र तद्भवेत् ॥
कावेरीं स्मरतो नित्य लोकानां हितकृत्तमाम् ।
सर्वदानफलं तस्य भवेत्तत्र स्थितस्य च ॥
ददाति संगमे यस्तु सौवर्णं रजत तु वा ।
कोटिकोटिगुणं तस्य भवेत्फलमनुत्तमम् ॥
यो ददाति च गोदानं कावेरीकपिलातटे ।
एकस्य कोटिगुणित फलमाप्नोति धर्मज ॥
अन्न ददाति या राजन्कावेरीकपिलातटे ।
पितरस्तस्य तृप्यन्ति तृप्ता स्यु सर्वदेवता ॥
कन्यादान महाराज कावेरीकपिलातटे।
ददाति ब्राह्मणेभ्यो य स विष्णो पदमश्नुते ॥
जप दान च होमश्च सर्वं कोटिगुण भवेत् ।
कुर्वतस्तस्य कावेर्यां पाप च कुरुनन्दन ॥
चन्द्रसूर्यग्रहे चैव सक्रान्तावयने तथा ।
व्यतीपाते वैधृतौ च तथा पर्वणि धर्मज ॥
य स्नाति सगमे देव्या कपिलाया शुभे दिने ।
मातृत पितृतश्चैव तथा श्वशुरवशत ।
त्रिकोटिकुलसयुक्तो विष्णुलोक स गच्छति ॥
ब्रह्मादय सुरा सर्वे योगिन सनकादय ।
गन्धर्वा लोकपालाश्च ऋषयश्च तपोधना ।
अणिमादिगुणैर्युक्ता ये चान्ये तत्त्वदर्शिन ॥
ब्राह्मी माहेश्वरी लक्ष्मी शची मेनादितिर्दिति ।
घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥
गणाश्चाप्सरसा सर्वे पितृणा च गणास्तथा ।
स्नातुमायान्ति ते सर्वे कावेर्या कपिलागमे ॥
किमत्र बहुनोक्तेन ब्रह्मणा निर्मिता पुरा ।
प्रजाना पापभीरूणा शुद्धये मुक्तये नृप ॥
अत्र वर्षसहस्राणि तप कृत्वा सुदारुणम् ।
नीलकण्ठप्रसादेन पुरा विश्रवस सुत ॥
धनानामाधिपत्य च सखित्वं शूलपाणिन ।
प्रासवानलका राजन्देवगन्धर्वसेवित ॥
चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमा ।
तप कृत्वा चिरं कालमत्र मुक्तिं प्रपेदिरे ॥

युधिष्ठिर उवाच ।

चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमा ।
कथं मुक्तिं गता स्नातास्तन्मे त्व कृपया वद ॥

भीष्म उवाच ।

याज्ञवल्क्यसुता राजन्नेते वै लोकविश्रुता ।
चन्द्रकान्तमहामेघविजयाश्चन्द्रभूषणा ॥
ज्येष्ठ गृहे प्रतिष्ठाप्य चन्द्रभूषमकल्मषम् ।
कावेरीकपिलामध्यवर्तिन भुवनेश्वरम् ॥
आराध्य सुचिरं कालं तपसा ब्राह्मणोत्तमा ।
मुक्तिकामा महात्मानस्तप कुर्वन्ति च स्म ते ॥
चतुर्दशसहस्राणि शिष्यास्तेषा महात्मनाम् ।
अद्वैतवादिन सर्वे तपसा दीर्घदर्शिन ॥
ध्यायन्त पुरुषं शभु सृष्टिस्थित्यन्तकारिणम् ।
आराधयन्तस्त देवमजमक्षरमव्ययम् ।
स्तुवन्ति विविधै स्तोत्रैर्नमस्यन्ति हि केचन ॥
ध्यायन्त पुरुष केचित्तिष्ठन्ति च निरङ्कुशा ।
अत्युग्रमतुल राजन्कुर्वन्तस्तप उत्तमम् ॥
पार्वतीवल्लभस्तेषां सानिध्यमकरोत्प्रभु ।
अष्टमूर्तिधर श्रीमान्प्रहसन्वाक्यमब्रवीत् ॥

स्नातुमायान्ति भूपाल अद्यापि मनुजेश्वर ॥

— G2 om lines 4843-4893 — (L. 4845) D1 सेव्यता मोक्षदायिनी (for °) — (L. 4846) M1 दधाव विश्वरूपी मान् (for °) — (L. 4862) D1 य स्नाति त्रिदिन नृप (for °) — (L. 4869) G1 M1 यत्फल समवाप्नोति (for °) — (L. 4873) समने फलमुत्तमम् (for °) — M1 om. (hapl) lines 4875-4876 — (L. 4884) D1 M1 शुभप्रदे (for शुभे दिने) — (L. 4899) D1 सेवितास् (for °त) — (L. 4901) D1 G1 तत्र (for अत्र) — (L. 4902) M1 तान (for स्नाता स) — (L. 4904) G1, 2 M1 G(ed) एते (for एते) — (L. 4906) D1 गृह (for गृहे) D1 चन्द्रभूषण कल्मषम् (for °) — (L. 4907) G2 °वर्तिन परमेष्ठिनम् (for °) — (L. 4913) D1 आराधयस्तु त देव (for °). — (L. 4915) D1 G2 M1 निराकुला (D1 °लम्) (for निरङ्कुशा) — (L. 4916) G(ed) कुर्वन्ति (for °न्तस) G2 कुर्वन्ति स्तोत्र मुत्तमम् (for °) — (L. 4917) D1 °नन्दनस (for °

तत्रैव मुनय सर्वे तप कुर्वन्ति धर्मज ॥
संवर्तकस्य लिङ्गस्य पश्चिमे पुण्यमाश्रमम् ।
पादपे फलितैर्युक्ते पनसे फलमण्डिते ।
कौशिकस्याश्रमो राजन्क्रोशमात्रे युधिष्ठिर ॥
पुरा राजर्षिमुख्यैश्च सेविता ब्रह्मवादिभि ।
चचार तप उग्रं तु कौशिको मुनिसत्तम ॥
तत्र दीर्घशिला नाम रमणीया पवित्रदा ।
तत्र दान जपं ध्यान कृत कोटिगुणं भवेत् ॥
ध्यान प्रकुर्वतस्तत्र सदा तु जपशीलिन ।
भवन्ति सपदस्तस्य यस्य कस्यापि च प्रभो ॥
कुशलिङ्गमिति ख्यात कौशिकेन प्रतिष्ठितम् ।
स्नात्वा तत्र महादेव पूजयित्वा तु नित्यश ।
स वै गोत्रऋषिर्लोके पूजितोऽभूद्द्विजन्मभि ॥
वसिष्ठस्याश्रम पश्चात्तस्याश्रमसमीपत ।
कुण्डिनो नाम विप्रेन्द्रश्चचार तप उत्तमम् ॥
तपसा तोषितो रुद्रो वृषमारुह्य सत्वरम् ।
तत्र गत्वा भूतगणै शाश्च तस्योपदिष्टवान् ॥
तव गोत्रऋषिर्ब्रह्मन्ख्यातिमत्र गमिष्यसि ।
इत्युक्त्वान्तर्दधे देव स विप्रो विस्मय गत ॥
नन्दिवाहननाम्ना वै प्रतिष्ठाप्य महेश्वरम् ।
सिद्धोऽभूद्ब्राह्मणश्रेष्ठ कावेर्या स्नानवैभवात् ॥
नन्दिवाहनलिङ्गस्य कृपया तीरवासिनाम् ।
कुशनाम्नस्य लिङ्गस्य तथा संवर्तकस्य च ।
स्नातानां तत्र वै काले सर्वसंपद्भविष्यति ॥
इत्युक्त्वा दवता सोम स्नाति नित्य तु भक्तित ।
संवर्तकस्य लिङ्गस्य पुरस्तात्पनसाश्रमे ॥
तत्र राजा हरिश्चन्द्र सुरलोकस्य काङ्क्षया ।
राजसूयशत चक्रे वसिष्ठमुनिनेरित ॥
चक्रुश्च विविधान्यज्ञानृषयो ब्राह्मणोत्तमा ।
महाध्वरविदो विप्रा कावेर्या स्नानतत्परा ।
तोषयित्वा यज्ञपतिं सुरलोक प्रपेदिरे ॥
कृतवीर्यकुमारश्च कार्तवीर्यो महामति ।
भौमस्याश्रममासाद्य पनसाख्यमिति श्रुतम् ।
राजसूयशत कृत्वा मुख्योऽभूच्चक्रवर्तिनाम् ॥
भूसुतस्तत्र तपसा यज्ञैर्विविधदक्षिणै ।
आदावाराध्य धातार ग्रहाणामग्रगोऽभवत् ॥
पुरस्तादस्ति कावेर्या विश्वेश्वर उमापति ।
बोधायनो मुनिस्तत्र तप कुर्वन्महामति ॥
आराध्य त भूतपतिं भूतेश भक्तवत्सलम् ।
आसवान्सर्वशास्त्राणि वेदार्थांश्च महामति ॥
सर्वेषां सूत्रकर्तॄणामग्रणीर्मुनिसत्तम ।
चकार सूत्र मतिमाञ्श्रौतस्मार्तविदा वर ।
तद्धि विश्वेश्वरस्थानमद्यापि परिदृश्यते ॥
वटवृक्षोत्तरे भागे सर्वपुष्पफलप्रद ।
निर्मितस्तपसा तेन मुनिना धर्मनन्दन ॥
आग्नेय्यामरविन्दाक्ष दक्षिणे सरसस्तटे ।
विष्णु सर्वगत ध्यायन्नास्ते भृगुमुनीश्वर ॥
तेनारोपितमश्वत्थं सेवन्ते स्वर्गकाङ्क्षिण ।
तस्य मूले चिर स्थित्वा चचार तप उत्तमम् ॥
याज्ञवल्क्यो मुनि पार्थ कृपया तस्य सुव्रत ।
अवाप योगसामर्थ्यमणिमादिगुणांस्तथा ॥
विश्वेश्वर सदा ध्यायस्तत्र योगेश्वरं विभुम् ।
वर्तते शास्त्रमार्गं च दर्शयन्ब्रह्मचारिणाम् ॥
अगस्त्यो भगवांस्तत्र लिङ्गं विश्वेश्वराख्यया ।
प्रतिष्ठाप्य सदा भक्त्या भजते मुक्तिकाङ्क्षया ॥
शिवश्च रुद्रश्च हरि स एव
ब्रह्मा च देव्यश्च दिशा पतिश्च ।
राजा च राज्य च विराट् स एव
धनप्रदो वै ह्यकृत्स एव ॥
बन्धुश्च विद्याविभव स एव
स्वामी समस्तस्य गुरु स एव ।
उर्वी शशाङ्कदिवाकरौ च
तीर्थानि चाग्निर्वियदादिदेव ॥
नक्षत्रतारामुनय स एव
ब्रह्मा समुद्राश्च तदन्तराश्च ।
शैला द्रुमा पार्थिव एव विष्णु
स्तस्मात्पर नास्ति समस्तलोके ॥
तस्य विश्वेश्वरस्याह नमस्कृत्य च तानृषीन् ।

line 4963 — (L. 4967) G(ed) [उ]त्तरे (for °रा) — (L. 4968) G(ed.) कलतोया हि तत्रैव (for °) — G2 om lines 4969[b]–4981[b] — (L. 4973) D1 पादपे फल संयुक्ते (for °) — (L 4985) D1 G(ed.) [आ]मज (for [आ]श्रमं) — (L. 4988) G2 ऋषि (for भूत ) — For line 4989 M1 subst

189** तव गोत्रमिति ख्यातिं भवानत्र गमिष्यति ।

— (L. 4990) G2 सोऽपि विस्मयमागत (for [b]) — After line 4990 G1 ins

190** किमत्र बहुनोक्तेन स्थान विश्वेश्वरस्य तु ।
एवमन्ये महात्मान न त्वा स्तुत्वा दिवं गता ॥

— G2 om lines 4991–5039 — (L 4995) G(ed) कावेर्यां (for वै काले) — (L 4997) M1 पुरस्ताद्ब्राह्मणोत्तमा (for [b]) — M1 om (hapl.) lines 4998–5000 — (L. 5006) G1 विपुल (for विविध ) — (L. 5008) D1 G1 M1 विश्वेश्वर मरिंदमम् (for [b]) — (L 5010) D1 भूतेशं (for विश्वेश) — (L. 5013) D1 विशारद (for विदां वर ) — (L. 5015) G(ed) तद्दृश्यते वटतरु (for °) — M1 om lines 5028–5032 — (L. 5029) D1 G1 हरि (for विराट्) — After line 5039 G2 ins.

191** किमत्र बहुनोक्तेन स्थानं विश्वेश्वरस्य तु ।
एवमन्ये महात्मानो नत्वा स्तुत्वा दिवं गता ।

गजारण्यस्य माहात्म्यं वक्ष्यामि कुरुनन्दन ॥
आसीत्पुरा महीपाल ब्राह्मणो वृत्तिकर्शितः ।
सोमदत्त इति ख्यातो वसिष्ठस्य कुलोद्भवः ।
शंकरं तोषयामास तपोभिर्विविधैर्मखैः ॥
काशीक्षेत्रे महाराज देवर्षिगणसेविते ॥
स तुष्टोऽपि विरूपाक्षो देवो दिव्यपराक्रमः ।
दर्शयित्वा स्वकं रूपं सस्मितं वाक्यमब्रवीत् ॥
सोमदत्त महाभाग तपसा तोषितोऽस्म्यहम् ।
क्रतुभिश्च विशेषेण भक्त्या चैव द्विजोत्तम ॥
एकमेव वरं दास्ये द्वितीयं तव न प्रभो ।
इत्युक्तो देवदेवेन शंभुना पाण्डुनन्दन ।
ध्यात्वा चिरं त्रिकालज्ञो वचनं चेदमब्रवीत् ॥
अनेककोटिजन्मानि संभ्रान्तस्य च मे शिव ।
यद्गत्वा न निवर्तन्ते तद्ददस्व च मे शिव ॥
तथास्त्विति समामन्त्र्य वचनं चेदमब्रवीत् ।
कावेरी कपिला यत्र संगता ब्राह्मणोत्तम ।
पुरतः संगमस्यास्य योजनार्धेऽस्ति वै स्थलम् ।
गजारण्यमिति ख्यातं सर्वसिद्धनिषेवितम् ॥
आश्रमं तद्वीकस्य शान्तैर्मुनिगणैर्वृतम् ।
तत्र ते भविता मुक्तिः शिष्याणामपि सत्तम ॥
अहं तत्र गमिष्यामि त्वं तु बन्धुजनैः सह ।
दारिद्र्यदुःखितो ह्यत्र भुक्त्वा भोगान्यथेच्छया ॥
यदि पश्चाद्द्विजश्रेष्ठ तव मुक्तिर्भविष्यति ।
इत्युक्त्वान्तर्दधे देवो भूतैः सह युधिष्ठिर ॥
ब्राह्मणोऽपि कुरुश्रेष्ठ भुक्त्वा भोगाननेकशः ।
अनेकैर्द्विजमुख्यैश्च प्रतस्थे मुक्तिकाङ्क्षया ॥
विन्ध्यं प्रयातो विप्रेन्द्रो द्विजानामग्रणीर्बली ।
मदोन्मत्तो महानागो ब्राह्मणांस्तानमर्दयत् ॥
मर्दिता ब्राह्मणाः सर्वे तत्क्षणेन समन्विताः ।
गजा जातिस्मरा जाताः प्रवृद्धबलदर्पिताः ॥
कृपया नीलकण्ठस्य तं देशं ते प्रपेदिरे ॥
तत्र स्नात्वा जगन्नाथं प्रणतार्तिप्रणाशनम् ।
स्नात्वा स्नात्वा तु कावेर्यां जीवन्ति निरहंकृताः ॥
नीलकण्ठो महादेवो मन्दिरमारुह्य तान्द्विजान् ।
आत्मन्यारोपयामास मुनीनां पश्यतां प्रभो ॥
सशरीरं गताः सर्वे ब्राह्मणा गजरूपिणः ।
तिरोऽभूत्तत्र देवेशस्तस्मान्न दृश्यतेऽधुना ॥
तदाप्रभृति तत्क्षेत्रं गजारण्यमिति श्रुतम् ॥
लिङ्गं तत्राद्भुतं रात्नं प्रतिष्ठाप्य नृपोत्तमाः ।
आराध्य मुनिभिः सार्धं तत्पदं ते प्रपेदिरे ॥
गजारण्यस्य माहात्म्यमहं वक्तुं हि न क्षमः ।
स एव भगवान्वेत्ति तत्फलं स्नानवैभवम् ॥
गजारण्यमिति क्षेत्रं दुर्लभं तु कलौ युगे ।
पुरा संचितपुण्यानामनायासेन लभ्यते ॥
यः स्नाति वै त्वहं राजन्निगृहीताखिलेन्द्रियः ।
सर्वदानफलं तस्य सर्वक्रतुफलं भवेत् ॥
गजारण्यस्य माहात्म्यं यः पठेच्छृणुयादपि ।
सर्वान्कामानवाप्नोति स्वर्गलोके सुखी भवेत् ॥

Colophon

भीष्म उवाच ।

कावेरीमहिमा केन वर्ण्यते युगकोटिभिः ।
नारायणस्तु भगवान्वेत्ति नान्यो महीतले ॥
तीरयोरुभयोः क्षेत्रं मुनीनां शुद्धचेतसाम् ।
योजने योजनार्धे च क्रोशमात्रे तु चाश्रमः ॥
आ समुद्रात्तु सह्याद्रेर्मध्यं देवैर्निषेवितम् ।
कावेरीमाश्रयन्त्यत्र सुगोचरजले शुभे ॥
सर्वलोकहितार्थाय सर्वत्र हितकारिणः ।
ऋषयो मुनिविप्राश्च कावेरीं समुपागते ॥
सर्वत्र पुण्यस्थाने पुण्याश्रमसमन्विते ।
वसन्ति लोकरक्षार्थं कावेर्यां तु मुनीश्वराः ॥
दैत्यदानवरक्षांसि ह्यसुरा मृगपक्षिणः ।
उभेषु रूपमास्थाय चरन्ति सरितस्तटे ॥
मुख्यस्थानं प्रवक्ष्यामि कावेर्या मध्यवर्तिनाम् ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
कावेर्यां पुण्यनद्यास्तु तीरयोरुभयोरपि ।
देवा ऋषिगणाश्चैव सिद्धाश्चारणगुह्यकाः ।
गन्धर्वा लोकपालाश्च सेवन्ते पुण्यकाङ्क्षया ॥

---

— (L. 5041) $G_1$ $M_1$ महाराज (for महीपाल) — (L. 5043) $G_1$ तपोभिर्विविधोज्ज्वलैः (for °) — (L. 5049) G(ed) द्विज (for प्रभो) $G_2$ द्वितीयं सत्तमप्रभ (for ᵇ) — (L. — $G_1$ $M_1$ om line 5059 — For line 5059, $G_2$ subst

192** यदि पूर्वं द्विजश्रेष्ठ ततो मुक्तिर्भविष्यति ।

— (L. 5062) $G_1$ मम पादाम्बुजद्वयम् (for ᵇ) — (L. 5071) $D_1$ गजा तत्र, G(ed) तत्र गत्वा (for तत्र स्नात्वा) — (L. 5074) $G_1$ प्रवर° (for पश्यता) — (L. 5075) $D_1$ सशरीरा गणाः सर्वे (for ᵃ) — (L. 5077) G(ed) शिवलोके (for तत्पदं ते) — (L. 5084) $D_1$ विदित्वा (for वै त्वहं) — (L. 5087) $D_1$ $M_1$ स्वर्लोके तु (for सर्वलोके) $G_2$ कैलासे सुसमश्नुते (for ᵇ)

COLOPHON — *Sub-parvan* $D_1$ $G_1$ आनुशासनिके [illegible] — *Adhy name* $D_1$ नारदोपर्शो, $G_2$ $M_1$ G(ed.) शरभम। — *Adhy no* $D_1$ $G_1$ [illegible], G(ed.) गजारण्यप्रशंसा — *Adhy no* $D_1$ $G_1$ [illegible] $M_1$ 38, G(ed) 39

After line 5092, $D_1$ $G_1$ $M_1$ ins

193** मृगभूचरपक्षीणां मुनिमण्डितं क्वचित् ।
देवा यत्र गतं [illegible] निर्जने तु महावने ॥

— (L. 5093) $G_2$ कावेरीमाश्रयन्ति च (for ᵃ) $D_1$ हृदे- पङ्कजे शुभे (for ᵇ) — (L. 5097) G(ed) °ष्विपु

तरुरूपधरा देवाश्चारणा पक्षिरूपिण ।
ऋषयो विप्ररूपाश्च वर्तन्ते तीरमाश्रिता ॥
शाखज्ञा लोकविख्याता सदा सत्कर्मशीलिन ।
वेदशास्त्रसुसपन्ना सदा ध्यानपरायणा ।
कावेर्यां मरणं यान्ति ते गच्छन्ति हरे पदम् ॥
ये तत्र पापकर्माणश्चण्डालाद्या युधिष्ठिर ।
दानवासुररक्षांसि तान्विद्धि भरतर्षभ ॥
पापाना लयहेतोऽस्तु सदा क्रीडन्ति राक्षसा ।
तत्कलेवरमुत्सृज्य प्रयान्ति ब्रह्मण पदम् ॥
त्रिरात्रं जाह्नवीतीरे पञ्चरात्रं तु यामुने ।
सद्य पुनाति कावेरी पापमामरणान्तिकम् ॥
गौतम्यां सप्तरात्र तु नर्मदाया चतुर्दिनम् ।
तुङ्गायां दशरात्र तु हेमकूटे दशार्धकम् ॥
तुलामासे तु संप्राप्ते गङ्गाद्या सकलापगा ।
स्नातुमायान्ति ता सर्वा ह्यात्मदोषजिगीषया ॥
गजारण्यपुरोभागे कावेर्या योजनद्वये ।
भीमेश्वरेति विख्याते सर्वसिद्धनिषेविते ॥
प्रसन्नसलिला देवी कावेरी पादपैर्वृता ।
भीमरूपी शिव साक्षात्तत्र तिष्ठति भूमिप ॥
पुरा वै कलिदोषेण नळ परमदारुण ।
अज्ञातवासमापेदे कान्तिनिर्धामकारणात् ॥
श्वशुरस्तस्य विख्यातो भीमराजो महामति ।
लब्धु कन्या नळ शभु तत्र चाराधयत्प्रभुम् ॥
नीलकण्ठप्रसादेन कावेर्या स्नानवैभवात् ।
शुद्धात्मा स्तोत्रमकरोच्छंकरं प्रति धर्मज ॥
नीलकण्ठविरूपाक्ष विश्वेशाय च शूलिने ।
सदाशिवाय लोकानामीश्वराय नमो नम ॥
मृत्युंजय सदानन्द नन्दिवाहन विश्वदृक् ।
मनोभवहरायेति सर्वज्ञाय नमो नम ॥
भस्मोद्धूलितसर्वाङ्ग नागचर्मधराय च ।
नागभूषण लोकेश शंकराय नमो नम ॥
कैलासवासनिलय पार्वतीवल्लभ प्रभो ।
त्रिपुरान्तक भूतात्मन्गङ्गाधर नमोऽस्तु ते ॥
त्रिशूलपाणिने तुभ्य कपालाभरणाय च ।
गिरीश गिरिजानाथ मृत्युंजय नमोऽस्तु ते ।
त्वमेव गतिरस्माक पाहि पाहि जगत्पते ॥
इति स्तुतो जगन्नाथो भीमराजेन शंकर ।
अष्टमूर्तिधरो भूत्वा राजानमिदमब्रवीत् ॥
अभीष्टसिद्धिर्भविता जामाता च तवात्मजा ।
आगमिष्यन्ति भद्र ते तनुजा पतिमेष्यति ।
तव नाम्ना भवेल्लिङ्गमत्र वै ख्यातिमेष्यति ॥
नामसंकीर्तन मेऽद्य त्वया कृतमरिंदम ।
य पठेत्सततं भक्त्या मम लोको भविष्यति ॥
भीमेश्वरमिदं स्थान कावेर्या मध्यम शुभम् ।
सर्वपापप्रशमन भुक्तिमुक्तिफलप्रदम् ।
अत्र स्नाता पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य ब्रह्मलोकं प्रयान्ति वै ॥
दान श्राद्धं तथा होम जप स्नानमकल्मषम् ।
य कुर्यात्पितरस्तस्य प्रविशन्ति त्रिविष्टपम् ॥
अद्य नो भविता मुक्तिरद्य नो वैष्णवं पदम् ।
भविता न पद शभोर्ब्रह्मणो मरुता पते ॥
हृष्यन्त्येव पितृगणा देवगन्धर्वकोटिभि ।
पुण्यलोकान्प्रयान्त्येव सेविता पितरोऽमला ॥
अत्र स्नातं नर दृष्ट्वा पापिनो वा नरेश्वर ।
पुनीता स्वर्गमायान्ति सेवित पुण्यकर्मभि ॥
अत्र भूतगणान्विद्धि भूरुहान्वेणुकीचकान् ।
ये च कण्टकिनो वृक्षा पिशाचान्विद्धि पाण्डव ॥
अहमत्र चिरं स्थित्वा गतानामत्र कर्मिणाम् ।
क्षयं करोमि पापानां पुण्यलोक ददामि च ॥
अत्र स्नात्वा च मा दृष्ट्वा कावेरीमध्यवर्तिनम् ।
नरश्च दिव नरो याति मम लोक च शाश्वतम् ॥
इत्युक्त्वान्तर्दधे देवो भूतै सह सदाशिव ।
भीमराजो महातेजा विस्मयं परम गत ॥
प्रणिपत्य जगन्नाथं मनसा च पुन पुन ।
प्रययौ नगरं पार्थ पुण्य मित्रनिषेवितम् ॥
अथाद्भुततम दृष्ट्वा शंकरं लोकशंकरम् ।
भृगुस्तत्र समासीनो जपन्नास्ते स वै मुनि ॥
कदा पश्यामि देवेश कदा त नौमि निर्गुणम् ।
कदा मे जन्मसाफल्य भविता शाश्वत तप ॥
इत्युक्त्वा स्नाप्य सलिलै स्वयं स्नात्वा सदाशिवम् ।

(for ऊर्मिषु) —(L 5104) G(ed) मोक्ष (for पुण्य-) G3 वसन्ते मुक्तिकाङ्क्षया (for $^{b}$) — G3 om lines 5105$^{b}$–5108$^{a}$ —(L 5116) M1 गोदावर्यां; G(ed) कृष्णवेण्यां (for नर्मदाया) D1 कृष्णायां तु दिनत्रयम् (for $^{b}$) —(L 5122) D1 -चमला (for -सलिला) —(L 5126) M1 महाद्युति (for °मति) — Before line 5130, D1 ins भीमराजोवाच M1 om. lines 5132-5134 —(L 5134) G1 नागचर्मधराव्यय (for $^{b}$) — M1 om lines 5136-5137 —(L 5131) D1 निरत (for निलय) — D1 om. lines 5138 5139 —(L 5140) G1 s देवेश सदाशिव (for $^{b}$) —(L 5141) G1 G(ed) जगत्कर्ता (for भूतनाथो) — D1 om lines 5142-5143 —(L 5148) D1 इति स्थाने, G3 इद लिङ्गं (for इद स्थानं) — After line 5148$^{a}$, G3 ins

194*

नत्वा स्नात्वा समाहित ।
मम सायुज्यमाप्नोति सत्यं सत्य वदाम्यहम् ॥

— G3 om lines 5148$^{b}$–5165$^{a}$ —(L 5152) D1 स्नानं (for स्नानम्) —(L 5153) M1 प्रयान्ति त्रिविष्टपे (for $^{b}$). —(L 5155) M1 भविता मे शुभ शंभो (for $^{a}$) —(L 5162) D1 अपामत्र चिरं पीत्वा (for $^{a}$) — G3 om. lines

रुद्रसूक्तमहामन्त्रैस्तोषयामास शंकरम् ॥

वैशंपायन उवाच ।

तस्मिन्नवसरे राजा नळो नाम महामतिः ।
कलिना पीडितः सम्यगाययौ भीमसंनिधिम् ॥
स्नात्वा नत्वा च कावेर्यां भीमनाथं तु शूलिनम् ।
जपं प्रदक्षिणं कुर्वन्सददर्श च भार्गवम् ॥
प्रणिपत्य मुनिश्रेष्ठं त्रिकालज्ञमकल्मषम् ।
निवेदयामास मुने कलिबाधां सुदुःसहाम् ॥
ज्ञात्वा तदद्भुतं रूपमीदृशं घोरदर्शनम् ॥
प्रोवाच कृपया विद्वान्नैषधं प्रति धर्मवित् ॥
राजस्त्वेदृशं रूपं कुत्सितं लोकनिन्दितम् ।
भीमेश्वरस्य कृपया स्वच्छतामप्यति ध्रुवम् ॥
तपसा भीमराजस्य कृपया शूलिनः प्रभो ।
जगन्मोहनकं रूपमचिरात्त्वं समप्स्यसि ॥
लोकेषु पञ्च विख्यातं सद्यः कलिमलापहम् ।
काशीभीमेश्वरमिदं तच्च पुष्करिणीत्रयम् ॥
अत्र त्वं कृतकृत्योऽसि पापस्य विमोचितः ।
नत्वा देवं विरूपाक्षं त्रिकालं स्नानमाचर ॥
ऋतुपर्णो महाराज स्नात्वात्र सुचिरं नृप ।
कृपया नीलकण्ठस्य कालिदोषहरोऽभवत् ॥
तक्षकस्य कुले जातः कार्कोटक इति श्रुतः ।
शाकल्यस्य तु शापेन महानजगरोऽभवत् ॥
प्रापितो दैवयोगेन भीमनाथस्य संनिधिम् ।
स्नात्वा सलिलमचलं नत्वा नत्वा तु चेष्टते ॥
अतिक्रूरतरं रूपं विहाय कृपया नृप ।
भूपणत्वमवापाशु सत्त्वं च कलिदोषहा ॥
तवाङ्गस्पर्शनाद्देवी भैमी सुरसुतोपमा ।
कलिदोषहरा ख्याता भविष्यति न संशयः ॥
कर्कोटकस्य नागस्य दमयन्त्या नळस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥
स्नात्वा संपूज्य विधिवद्भीमेशमघनाशनम् ।
ऋतुपर्णपुरं गच्छ तेन स्वस्थानगोऽप्यसि ॥

भीष्म उवाच ।

इत्युक्तो मुनिना तेन नळो वै गतकल्मषः ।
स्थित्वा तु कंचित्कालं तेन सार्धं युधिष्ठिर ।
स्वस्थानं प्राप्य धर्मात्मा भैम्या सह ननन्द ह ॥
त्वं च गच्छ महाराज पूजयित्वा महेश्वरम् ।
अचिरात्प्राप्स्यसे स्थानं मनसा यद्यदिच्छसि ।

Colophon

वैशंपायन उवाच ।

श्रुत्वा राजा महातेजा कावेर्या स्नानवैभवम् ।
चन्द्रपुष्करिणीस्नानात्फलं पप्रच्छ धर्मजः ॥

युधिष्ठिर उवाच ।

चन्द्रपुष्करिणिस्नानं कुर्वतां किं फलं प्रभो ।
कावेर्यां रङ्गनाथस्य दर्शने किं फलं भवेत् ॥
चकार वासं लोकानामीश्वरः प्रभवोऽव्ययः ।
नारायणो जगन्नाथो निर्भक्ताधीनो जगन्मयः ।
दर्शनं वरफलं ब्रूहि पितामह महामते ॥
किमर्थं वासमकरोज्जगदानन्दकारणम् ।
एतानन्यांश्च गाङ्गेय विस्तराद्वक्तुमर्हसि ॥

भीष्म उवाच ।

चन्द्रपुष्करिणीक्षेत्रं क्षेत्राणामुत्तमं विदुः ।
योगीश्वरो हरिः साक्षात्परमात्मा प्रत्यक्षतां गतः ॥
तस्य विष्णोः प्रसन्नस्य महिमानं तु यो नरः ।
कीर्तयेत्सकलान्पापानुद्धरिष्यति स ध्रुवम् ॥
चन्द्रपुष्करिणीस्नानं रङ्गमण्डपदर्शनम् ।
मानुष्यं जन्म राजेन्द्र दुर्लभं तु कलौ युगम् ॥
मनुष्यजन्म संप्राप्य रङ्गेशं ये नमन्ति नो ।
जायन्ते मरणायैव ते नराः पापकर्मिणः ॥
चन्द्रपुष्करिणीं गत्वा च स्नाति प्रयतेन्द्रियः ।
रङ्गेश्वरं नमस्कृत्वा स विष्णुपदमश्नुते ॥

5170–5175 — (L. 5171) D1 M1 महेश्वरम् (for रम वै [illegible]) — (L. 5174) D1 G M1 गुरा शिवम् (for [illegible] मुनि) — (L. 5176) G1 महामुनि, शिवम्) — G2 om. the ref. — (L. 5178) M1 स्नान [illegible] M1 महीपति (for महामति) — (L. 5178) M1 दुर्गा [illegible] (for स्नात्वा नत्वा) — (L. 5181) G2 दुरत्ययाम्, M1 दुर्ग° (for °hr) — Before line 5181, G(ed.) ins. हाम् (for सुदुःसहाम्) — (L. 5184) G1 कुत्सितं घोरद[illegible]नम् (for °) भार्गव — (L. 5184) G1 [illegible] — (L. — (L. 5185) G2 स्वच्छन्दमोति च ध्रुवम् (for °) — (L. 5190) G1 5192) D1 [illegible] सुचिरेव च (for °) — (L. 5193) [illegible] °दोषजम्; M1 दोषहम् (for °हा)

Colophon — Subparvan D1 [illegible] — Adhy. name D1 भीमेश्वर° G1 2 M1 G(ed.) [illegible] — Adhy. name D1 भीमेश्वर G(ed.) भीमेश्वर [illegible] महिमावर्णनम्, G1 भीमेश्वर[illegible]म् — Adhy. no. D1 G1 2 M1 37, G(ed.) 40

— (L. 5213) G2 कावेरीरङ्गनाथयो (for °) — G1 om. lines 5214–5216 — (L. 5216) D1 महाद्युति°, G1 M1 मुनेर्द्युति (for [illegible]) G2 [illegible] (for °) — G1 om. line 5219 — (L. 5220) G2 [illegible] — G2 om. lines 5222–5223 — (L. 5222) मम् (for °), — G2 om. lines 5222–5223 — (L. 5224) M1 [illegible] D1 M1 निश्चितम् (for स ध्रुवम्) — (L. 5224) M1 [illegible] G(ed.) [illegible] (for [illegible]) — G1 om. lines 5225–5227. — (L. 5227) G2 [illegible] (for °) G(ed.) [illegible] D1 G1 M1 G(ed.) रङ्गेशं [illegible] (for [illegible]) — After line 5227 G2 ins.

1935* च [illegible] ।
[illegible] ॥
[illegible] ।
[illegible] ॥

चन्द्रपुष्करिणीस्नानं कुर्वन्ति ह्यनिशं नरा ।
गन्धर्वा लोकपालाश्च मुनयस्त्वृषयस्तथा ॥
सिद्धाश्च वसवश्चैव चन्द्रादित्यमरुद्गणा ।
अणिमादिगुणैर्युक्ता ये चान्ये तत्त्वदर्शिन ॥
वसन्ति ह्यनिशं पार्थ ब्रह्मरूपा सुरोत्तमा ।
मुक्तिकामा महाराज केचिद्वै भोगकामिन ।
केचिद्वैराग्यकामाश्च वर्तन्त भूमिलिप्सव ।
अस्य क्षेत्रस्य माहात्म्यं वक्ष्यामि कुरुपुंगव ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशय ॥
शृणु राजन्पुरा तत्र ह्याश्चर्यं पुण्यवर्धनम् ।
अदितेश्चरितं साक्षान्नारदेन प्रभाषितम् ॥
अदिति पुत्रकामा तु कश्यपस्य प्रिया सती ।
धर्मिष्ठा लोकविख्याता तपश्चक्रे चिरं नृप ॥
चन्द्रपुष्करिणीतीरे ह्यनन्तमपराजितम् ।
ध्यायन्ती लोकमाता सा लोकानां हितकाम्यया ॥
अयुतत्रयमब्दानां कुर्वती तप उत्तमम् ।
तत्रास्ते देवकल्याणी चन्द्रपुष्करिणीतटे ॥
विज्ञाय चरितं तस्या देवदेवो जनार्दन ।
आययौ गरुडारूढो यत्रास्ते देववल्लभा ॥
पीताम्बरधर श्रीमान्दिव्यमालाविभूषित ।
स्वरूपं दर्शयामास योगिनामपि दुर्लभम् ॥
स्पृशन्करेण पुण्याङ्गीं बाधयित्वा पुन पुन ।
सस्मितं वचनं चेदमुवाच मधुरं तदा ॥
किमर्थं देवि कल्याणि करोषि तप उत्तमम् ।
तुष्टोऽस्मि तपसा तेन किं ददामि तवानघे ॥

भीष्म उवाच ।

अदितिर्देवमाता सा देवदेवेन चक्रिणा ।
स्पृष्ट्वा परमकल्याणी ह्युक्ता वचनमब्रवीत् ॥

अदितिरुवाच ।

देवदेवारविन्दाक्ष पुराणपुरुषोत्तम ।
पाहि मां सर्वलोकेश भक्तानामभयंकर ॥
लक्ष्मीपते नमस्तुभ्यं नि स्पृहाय नमो नम ।
ब्रह्मणे विष्णुरूपाय रुद्ररूपाय चक्रिणे ।
आदित्याग्निस्वरूपाय चन्द्रकान्ताय ते नम ॥
भूधराय सुवर्णाय मेरुमूर्ध्नि स्थिताय च ।
रजताद्रिनिवासाय सदा सागरवासिने ।
चन्द्रपुष्करिणीनाथ पाहि मां भक्तवत्सल ॥
इति स्तुतो देवमात्रा देवयोनिरतीन्द्रिय ।
भगवान्पुण्डरीकाक्ष प्रसन्नो वाक्यमब्रवीत् ॥
स्तोत्रेण तपसानेन तुष्टो दक्षसुते शुभे ।
वरं वृणीष्व भद्रं ते वरदोऽहमिहागत ॥
त्वया कृतमिदं स्तोत्रं शृण्वतां वदतामपि ।
चन्द्रपुष्करिणीस्नानाद्यत्फलं तद्भविष्यति ॥

अदितिरुवाच ।

पुत्रं मे त्वादृशं देहि दैत्यानां विनयक्षमम् ।
पुरंदरस्य पुत्रस्य स्वर्गं दास्यसि मेऽनघ ॥
त्रैलोक्यसंपदं देहि दैत्यानेतानघ कुरु ।
एवान्सर्वान्समानन्त तव दास्य सुरेश्वर ॥
दातुमर्हसि भूतेश भूयो भूयो नमोऽस्तु ते ॥
संप्रार्थितो देवमात्रा भगवान्मधुसूदन ।
क्षणं ध्यात्वा दक्षसुतामाह लोकेश्वरो हरि ॥
त्वत्पुत्रमसुरं जेतुं शक्तं वै लोकवन्दिते ।
न तु पश्यामि लोकेऽस्मिन्मामन्यत्र मनस्विनि ॥
तस्मात्त्वाहं पुत्रत्वं यतिष्ये गन्तुमव्यय ।
अत्रैव मे चिरं वासो भविष्यति न संशय ॥
स्थितानामत्र कैवल्यं दिनमेकमपि क्वचित् ।
भविष्यतीति तामुक्त्वा तत्रैवान्तरधीयत ॥
देवमाता ततो देवी सती कश्यपवल्लभा ।
नत्वा हरिं जगद्योनिं स्वाश्रमं प्रययौ नृप ॥
निवेद्य वृत्तं स्वं भर्तुं सुषुवे लोकनायकम् ।
शङ्खचक्रधरं देवं वनमालाविभूषितम् ॥
चतुर्भुजमुदाराङ्गं कोटिसूर्यसमप्रभम् ।
चन्द्रादित्यदृशं देवं वामनं जगतां पतिम् ।
वेदराशिं विशालाक्षं चन्द्रकोटिसुशीतलम् ॥
तं दृष्ट्वा कश्यपो विष्णुं स्तुत्वा नत्वा पुन पुन ।
अब्रवीन्मधुरं वाक्यं कृताञ्जलिपुटो नृप ॥
देवदेव जगन्नाथ प्रणतार्तिप्रणाशन ।
पाहि देवान्समस्तांस्त्वं त्वत्पादकमलाश्रयात् ॥

भीष्म उवाच ।

प्रार्थितो देवमात्रा च विश्वयोनिर्बलेर्मखम् ।
गत्वा यज्ञफलं तस्य हृत्वा वचनमब्रवीत् ॥
कैवल्यं तव दास्यामि ह्यागच्छागच्छ सुव्रत ।

—(L 5232) D1 ऋषयो, G1 M1 मनवो (for सिद्धाश्च) —(L 5239) D1 -वृत्त (for तत्र) —(L 5248) G(ed.) यत्रास्तेऽदितिरुत्तमा (for *) — G3 G(ed.) om the ref. —(L 5256) D1 दृष्ट्वा, G1 सृष्टा, G3 दृष्टा M1 हृष्टा (for स्पृष्ट्वा) — G1 M1 G(ed) om the ref. G1 om. lines 5261 5264 —(L 5265) G3 अरिन्दम (for अतीन्द्रिय) —(L 5267) G3 त्रयेण (for स्तोत्रेण) — G3 om lines 5269-5270 —(L 5271) D1 M1 विजये, G3 निधने (for विजय-) —(L 5272) G(ed) अर्धदानारमञ्जसा (for *)

—(L 5280) G3 गमिष्यामि सुशोभने (for *) — After line 5280 G3 ins

196** अत्रैव कुरु वासस्त्वं इत्युक्त्वान्तर्दधे हरि ॥
देवी स्वमाश्रमं प्राप्य भर्तुर्वृत्तं निवेदयत् ।
पश्चात् सुषुवे देवं शङ्खचक्रगदाधरम् ॥

— G3 om lines 5287 5290 —(L 5287) D1 -नायकं (for भर्तुस्त्वं) —(L 5291) G3 नमस्कृत्वा (for स्तुत्वा नत्वा) — After line 5292 G3 ins

197** कृष्ण कृष्ण जगन्नाथ त्वद्भक्तान्पाहि दुर्मद ।

मम सेवापरो नित्यं मम ध्यानपरायणः ॥
चन्द्रपुष्करिणीतीरे मामर्चय सदानघ ।
आसुरं भावमुत्सृज्य ब्राह्मणीं तनुमाश्रितः ।
मम पूजां सदा कुर्वन्परं श्रेयो गमिष्यसि ॥
दिव्यं ददामि ते चक्षुर्मम रूपमनुत्तमम् ।
पश्य पश्येति तं चोक्त्वा दर्शयामास भैरवम् ॥
ब्रह्माण्डकटाहं यावत्पूरितं तद्रूपोत्तम ।
तावत्कृत्वा स्तुतो देवैर्मानुष्यं रूपमाश्रित ॥
इक्ष्वाकुपूजितो देवो जगद्रूपी सुरेश्वर ।
चन्द्रपुष्करिणीतीरं गन्तुं समुपचक्रमे ॥
पौलस्त्यकुलसंजातो बली दैत्यपतिर्नृप ।
विभीषणोऽभूद्धर्मात्मा भक्तानामग्रगः प्रभुः ॥
विष्णुर्नृणां स्वभक्तानामपवर्गप्रदो विभुः ।
संप्रार्थितो देवगणैर्भूत्वा रघुकुलोत्तमः ।
विनिहत्य दशग्रीवमयोध्यां प्राप धर्मवित् ॥
श्रीरामचन्द्रो भगवान्सीतया लक्ष्मणेन च ।
सुग्रीवप्रमुखैर्वीरैर्वानरैः स्वपुरं ययौ ॥
तत्राहूय रघुश्रेष्ठो विभीषणमरिंदमम् ।
ददौ पूजां स इक्ष्वाको हरेरंशात्तु मुक्तिदाम् ॥
सोऽपि पूजां समादाय गच्छंस्तस्मै प्रणम्य च ।
चन्द्रपुष्करिणीतीरं प्राप्तवान्धर्मनन्दन ॥
तत्र शङ्कानिवृत्यर्थं तं देव तु शुभे तटे ।
निक्षिप्याचम्य वै गन्तुं शुद्धात्मा ह्यन्वियेष सः ॥
तमुत्थापयितुं गृह्य न शशाक विभीषणः ।
पुन पुनस्तमालिङ्ग्य श्रममाप विभीषणः ॥
तस्मिंश्चिन्ताकुले नाथो देवदेवो विभीषणे ।
अदृश्यस्वरो भूत्वा तमाहूयेदमब्रवीत् ॥
विभीषण महाभाग शृणु मे परमं वच ।
अत्र मेऽस्तु वने वासः कावेर्या परिवेष्टिते ॥
रक्षोभिर्दूषितं देशं नाहं गच्छामि सुव्रत ॥
अत्रैवागत्य मां नित्यमर्चयित्वा विभीषण ।
षण्मासे वापि पौलस्त्य प्रत्यब्दमथ वा कुरु ।
अस्मिञ्जन्मनि ते मुक्तिर्भविष्यति न संशयः ॥
रङ्गस्थानमिदं विद्धि भुक्तिमुक्तिफलप्रदम् ।
अस्य क्षेत्रस्य सदृशं पृथिव्यां नास्ति किंचन ॥
इत्युक्त्वा भगवा राजन्रङ्गस्थानं प्रविश्य च ।
श्रीरङ्गशायी भगवानद्यापि कमलापतिः ॥
अथ पूजां प्रयत्नेन कृत्वा तं प्रणिपत्य च ।
ययौ लङ्कां स पापिष्ठैर्विहीनां समलंकृताम् ॥
तदाप्रभृति देवाश्च देवमाता युधिष्ठिर ।
पूजां कुर्वन्ति यत्नेन रङ्गेशं मुक्तिकाङ्क्षया ॥
रङ्गमित्यब्रवीद्धीमान्यो वा को वा नृपोत्तम ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं भजेद्ध्रुवम् ॥
रङ्गं रङ्गमिति ब्रूयात्संप्राप्ते पापकर्मणि ।
दूरे तिष्ठन्ति पापौघा यद्येवं समुदीरयेत् ॥
चन्द्रपुष्करिणीस्नानं रङ्गमण्डपदर्शनम् ।
पुरा संचितपुण्यानामप्रयत्नेन लभ्यते ॥
ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः ।
पूजां कुर्वन्ति यत्नेन प्रत्यब्दं पाण्डुनन्दन ॥
संसारसागरं तर्तुं य इच्छेत्पाण्डुनन्दन ।
स भजेद्रङ्गमध्यस्थं देवदेवं चतुर्भुजम् ॥
दृष्टः स्मृत पूजितो वा ध्यातो वा नमितोऽपि वा ।
तमुद्धरति रङ्गेशो दुस्तराद्भवसागरात् ॥
रङ्गभक्तिपरा ये तु रङ्गनामपरास्तु ये ।
दुर्वृत्ता वा सुवृत्ता वा तेषां मुक्तिर्भविष्यति ॥
य इदं पुण्यमाख्यानं शृणोति सततं नरः ।
रङ्गेशे विद्यते भक्तिः पातके स न लिप्यते ॥

Colophon.

युधिष्ठिर उवाच ।

चन्द्रपुष्करिणी ज्ञेया केनादौ सेवितानघ ।
तन्मे कथय तत्त्वेन गङ्गासुत नमोऽस्तु ते ॥

भीष्म उवाच ।

चन्द्रपुष्करिणीस्नानं रङ्गेशस्य च दर्शनम् ।
दम्भाल्लोभाद्बलाद्वा यः करोति स मुक्तिमान् ॥
ते धन्यास्ते प्रपूज्याश्च नमस्कार्या विशेषतः ।
येऽर्चयन्ति च रङ्गेशं प्रणतार्तिप्रणाशनम् ॥

— (L. 5294) D1 त्वत्पादकमलाश्रितान् (for ⁵). — G1 om. line 5296. — (L. 5298) D1 M1 मदर्चन- (for मम ध्यान-). G1 मदर्चनपरायणम् (for ⁵) — G2 om lines 5300–5301 — (L. 5300) G(ed) आसुरीं तनुमुत्सृज्य (for ᵃ). — After line 5302, G2 ins :

198** बलिं बध्वा महातेजा वैकुण्ठं संप्रपद्य ॥
पुरा दाशरथिः श्रीमान्हत्वा रावणमाहवे ।
चन्द्रपुष्करिणीं स्नात्वा अयोध्यां पुनराप ह ॥

— G2 om lines 5303–5342 — (L. 5306) M1 महेश्वरः (for सुरे°) — (L. 5331) D1 उत्थापयाति तं पुन (for ᵃ). — Before line 5324, M1 ins श्रीभगवानुवाच. — (L. 5325) M1 शृणु मे वचनं परम् (for ᵇ). — (L. 5333) G1 M1 ... — (L. 5340) G1 स गच्छति इत्युक्त्वा देवमार्गे तु (for ᵃ). — (L. 5341) G1 रङ्गरङ्गेति यो ब्रूयात् (for भजेद् ध्रुवम्). — (L. 5342) M1 यद्येव समुदीरयन् (for ᵃ). (for ᵃ). — For line 5342, D1 subst. :

199** दूरे तिष्ठन्ति पापौघो यद्येवं समुदीरिते ।

— G2 om. lines 5345–5360. — (L. 5354) G(ed.) जायते (for विद्यते). D1 पातकैस्तु न लिप्यते (for ᵇ).

COLOPHON. — *Sub-parvan* : D1 G1.2 M1 G(ed.) ... — *Adhy. name* : D1 M1 G(ed.) श्रीरङ्गमाहात्म्यम् भर्ता.. — *Adhy. no.* : D1 G1.2 M1 40; G1 रङ्गेशमाहात्म्यम्.



२ हरिवंश—१११

स स्नात सर्वतीर्थेषु सर्वयज्ञेषु दीक्षित ।
चन्द्रपुष्करिणीस्नान य करोति नराधिप ॥
तीर्थस्नानतपोभिश्च व्रतदानमखैरपि ।
यजन्ति कर्मयोगेन रङ्गेश मुक्तिद विभुम् ॥
शान्ता जितारिषड्वर्गा योगेनाप्यनहंकृता ।
यजन्ति ज्ञानयोगेन रङ्गेश मनुजेश्वर ॥
दुर्वृत्ताना भवेन्मोक्ष सुवृत्ताना किमुच्यते ।
रङ्गभूमिगताना च सर्वेषा च नृपोत्तम ॥
अत्रैवादाहरन्तीममितिहास पुरातनम् ।
शृण्वतां वदतां चैव सर्वपातकनाशनम् ॥
आसीत्पुरा महीपाल सोमवंशसमुद्भव ।
धर्मकतुरिति ख्याता नारायणपरायण ॥
चन्द्रपुष्करिणीतीरे देवेश पूज्य भक्तित ।
अकरोद्यज्ञसाहस्र मातापित्रोश्च पूजनम् ।
हेमवस्त्रान्नदानानि गोभूतिलवराणि च ॥
तेन पुण्यप्रभावेन सर्वबन्धुजनै सह ।
प्राप्तवान्वैष्णव लोकं योगिनामपि दुर्लभम् ॥
तस्मिन्काले महाभाग ब्राह्मणो यज्ञवत्सल ।
वेदवेदाङ्गतत्त्वज्ञस्तथा वै ग्रामयाजक ॥
अयाज्ययाजकश्चैव धनार्जनपर सदा ।
पिशुनो निष्ठुर क्रूरो ह्यपण्याना च विक्रयी ।
निषिद्धकर्माचरणात्परित्यक्तश्च बन्धुभि ।
कृषिको दु खितो दीनो हीनाङ्गो व्याधिपीडित ॥
स कदाचिद्धनार्थं तु पृथिव्यां पर्यटन्नृप ।
जगाम नर्मदातीर श्वासकासप्रपीडित ।
तत्र पञ्चत्वमापन्नो न लेभे चौर्ध्वदेहिकम् ॥
तस्मिन्गते तस्य भार्या सुरूपा च सुयौवना ।
कामचाररता भूत्वा परित्यक्ता च बन्धुभि ॥
तस्या जातो महाराज चण्डालात्तु नराधम ।
पापबुद्धिरिति ख्यातो जन्तूनामन्तकोपम ॥

महापापरतो नित्य ब्रह्मद्वेषपरस्तथा ।
परदारपरद्रव्यलोलुपो बन्धुवर्जित ॥
गावश्च बहवो नित्य निहत्य बहुपक्षिण ।
चतुर्लक्षसुवर्णानि बहून्यपहृतानि च ।
मद्यमांसरतो नित्य बहुशो मार्गरोधकृत् ॥
स कदाचिद्धनार्थं तु पृथिव्या संचरन्नृप ।
कावेरीमध्यगा देवीं चन्द्रपुष्करिणीं गत ॥
छादित हेमकलशैर्दिव्यालंकारशोभितम् ।
रङ्गेशस्य निवास तु दृष्ट्वाविधि धर्मज्ञ ॥
त दृष्ट्वा मुदमापन्नश्चोराणामधिपो नृप ।
हराम्यत्र सुवर्णानि बहूनीति मुद ययौ ॥
स्नात्वा तत्र महाराज नत्वा स भक्तिमानिव ।
विलोक्य बहुधा रत्नकाञ्चनानि बहूनि च ।
अपहर्तुमना रात्रौ वास तत्राकरोन्नृप ॥
एतस्मिन्नन्तरे देवी कावेरी पापनाशिनी ।
जलौघै प्लावयामास निशि चोरास्तट स्थितान् ।
चौरै सह स्वकै सोऽपि पापबुद्धिर्लय गत ॥
तस्मिन्नवसरे देवा विमानाना सहस्रकम् ।
आदाय तान्समारोप्य दिव जग्मु सहस्रश ॥
सेव्यमानास्तु गन्धर्वै पूज्यमानास्तु वज्रिणा ।
ब्रह्मलोक गताश्चोरा यस्य संनिधिमात्रत ॥
पापबुद्ध्या गता ह्येते पापिनाऽपि नरेश्वर ।
भक्त्या तु कुर्वता नृणा सवामाज किमुच्यते ॥
सहस्रयुगपर्यन्त भुक्त्वा भोगाननकश ।
तस्माच्च ब्रह्मणो लोकाद्विष्णुलोक प्रयान्ति ते ।
वैष्णवे तु स वै लोके तावद्भुक्त्वा दिव गत ॥
प्रवृद्धज्ञानसपन्नो बन्धुमान्नाम भूपति ।
सोमवंशोद्भव श्रीमान्सप्तद्वीपैकराड्भूत् ॥
आसन्पदातयश्चोरा प्रभवस्तेऽतिधर्मिण ॥
जातिस्मरत्वमापन्नो विशेषण हरिप्रिय ।

G(ed) 41

(L. 5355) G2 निर्मिता (for सेविता) G(ed.) पुरा (for [अ]नघ) — (L. 5357) G2 रङ्गनाथस्य दर्शनम् (for ⁶) —(L 5358) G2 लोभान्मोहाद् (for दम्भाल्लोभाद्) — G2 om lines 5359 5364 — (L 5368) G(ed) पुनर्जन्म न विद्यते (for ³) —(L 5370) D1 G1 M1 सद्य (for सर्वे) — (L. 5376) G1 G(ed) स नृप स्व (for सर्वैर्बन्धु) — (L. 5379) D1 -संपन्नस् (for -तत्त्वज्ञस्) — (L. 5380) G1 मूर्खो (for चैव) D1 G1 3 M1 तथा च (for दुर्वृत्तो) — After line 5388 G(ed.) ins

200** अधर्मनिरतो मूर्खो दुर्वृत्तो वृषलीपति ।

—(L. 5387) M1 सुलोचना (for सुयौवना) — (L 5390) G2 जनानाम् (for जन्तू°) — (L. 5393) D1 G(ed) गावश्च तेन वै (D1 निहता) राजन् (for °) D1 G(ed) निहता (for °त्य) M1 भक्षक (for -पक्षिण) —(L. 5399) G1 G(ed) विमाने (for निवास) — (L. 5404) G1 G(ed) अपहर्तुमना रात्रे (for °) — After line 5404 G1 ins

201** तत्र स्नानप्रभावेन चौर्यबुद्धिर्लय गता ।
मनो विकृतिमापेदे पश्चात्तप्त अभून्नृप ॥

—(L. 5406) M1 पूरयामास (for प्लाव°) —(L 5407) M1 स्वसेवकै (for सह स्वकै) D1 चोरै स्वसेवकै साधी (for °) —(L. 5412) G2 दिव गता (for नरेश्वर) — After line 5412 D1 ins

202** पापबुद्धिर्लय गत्वा सप्राप्य ज्ञानमुत्तमम् ।
यस्या वै स्नानमात्रेण उत्तमां सद्गति ययु ॥

— G2 om lines 5413–5414 — (L. 5416) D1 तत्र भुक्त्वा भुव गत (for ³) — For line 5416 G2 subst. :

203** विष्णुलोके बहु भुक्त्वा भुवि राजा हि जायते ।

G2 cont

204** व धुमानिति विख्यातो सोमवंश प्रतापवान् ।

विष्णोर्देवालये नित्यं समार्जनपरायण ।
दीपदानरतश्चैव रङ्गेशे भक्तिमानभूत् ॥
स कदाचिन्महीपालो रङ्गेशं प्राप्य धर्मवित् ।
विचित्रकलशोपेत प्राकारमकरोत्प्रभु ॥
तन्मध्ये मण्डपं दिव्यं विस्तीर्णं चतुरस्रकम् ।
कारयामास धर्मात्मा चित्रस्थानविराजितम् ॥
तन्मध्ये पुण्डरीकाक्ष रङ्गेशं चन्द्रुमासूप ।
पूजयामास विविधैर्महारजतभूषणै ॥
चन्द्रपुष्करिणीस्नानं कावेर्याश्च तथामलम् ।
स्वभृत्यै पूजनं कुर्वंस्तत्र स परिमुच्यते ॥
एतद्दृष्ट्वा विस्मयानो ब्रह्मपुत्रोऽथ नारद ।
अब्रवीन्मे कृपा कृत्वा गङ्गातीरे मनोरमे ॥

वैशंपायन उवाच ।

चन्द्रपुष्करिणीस्नानं रङ्गेशस्य च दर्शनम् ।
कुर्वन्ति ये कलौ भक्त्या तेषां मुक्तिर्हि शाश्वती ॥
रङ्गेशो देवदेवेशश्चन्द्रपुष्करिणीतटे ।
तिष्ठन्ददाति भूतानां मोक्षमक्षयमव्ययम् ॥
जन्मकोटिसहस्रेषु पुण्यं यै समुपार्जितम् ।
तेषां भक्तिर्भवेच्छुद्धा रङ्गेशे सरसोवरे ॥
जन्मकोट्ययुतं पुण्यं यत्करोति नरो भुवि ।
तत्सर्वं दिनमेकं तु रङ्गेशे वसतो भवेत् ॥
य इदं पुण्यमाख्यानं शृणोति सततं नर ।
रङ्गेशदर्शनफलं भवेत्तस्य न संशय ॥

Colophon

वैशंपायन उवाच ।

श्रुत्वैतद्रङ्गनाथस्य वैभवं भाग्यवर्धनम् ।
विस्मयानं महाप्राज्ञ भीष्मो धर्मसुतं जगौ ॥

भीष्म उवाच ।

अथात संप्रवक्ष्यामि रङ्गनाथस्य वैभवम् ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
चन्द्रपुष्करिणी नाम शाश्वती मुक्तिदायिनी ।
तत्रास्ते जगतां नाथ सर्वकालमरिंदम ॥
तां विसृज्य च धर्मात्मा भगवानव्यय प्रभु ।
भक्तानां कामद श्रीमांस्तत क्वापि न गच्छति ॥
सर्वानन्दकरी राजन्सर्वभाग्यप्रदायिनी ।
चन्द्रपुष्करिणी रम्या प्रीता सारूप्यदायिनी ॥
चन्द्रपुष्करिणी दिव्या यत्र तिष्ठति केशव ।
स्नातानामत्र सा देवी संसारभयनाशिनी ॥
पुत्रदा पुत्रकामानां पापहा पापकारिणाम् ।
क्रतूनां फलदा देवी सर्वेषां भरतर्षभ ॥
तीर्थानां भुवि मुख्यानां क्षेत्राणां च नृपोत्तम ।
चन्द्रपुष्करिणी मुख्या यत्र तिष्ठति केशव ॥
सिद्धचारणगन्धर्वयक्षविद्याधरान्वित ।
दिव्यस्त्रीनिकरै सेव्यो भुक्त्यर्थं च विमुक्तये ॥
सा राजन्दुर्लभा लोके विशेषेण कलौ युगे ।
हिमांशुरत्र धर्मात्मा तपस्तेपे सुदुश्चरम् ।
आराध्य देवदेवेशं ग्रहाणामधिपोऽभवत् ॥

युधिष्ठिर उवाच ।

किमर्थं तप्यते तेन ताराणामधिपेन वै ।
एतन्मे विस्तराद्ब्रूहि कृपा मयि तवास्ति चेत् ॥

भीष्म उवाच ।

आदौ तावन्महाभाग सविता च त्रयीमय ।
तपसा हरिमाराध्य लोकचक्षुस्तथाभवत् ॥
ज्ञात्वा त सर्वभूतानां जीवभूतं दुरासदम् ।
अत्रिनेत्रोद्भव श्रीमांस्तपस्तु मनो दधे ॥
तपसा लोकविख्यातो देवान्सेन्द्रानकम्पयत् ।
वायुभक्षो निराहारो जितक्रोधो महामति ॥
चन्द्रमा देवदेवेशं चन्द्रपुष्करिणीतटे ।
ध्यायन्स्तुवन्नमस्यंश्च चचार तप उत्तमम् ॥
ग्रीष्मे पञ्चाग्निमध्यस्थ हेमन्ते जलवासिनम् ।
जलधाराकुले राजन्वर्षतौ हि निराश्रयम् ॥
ध्यायन्तमतुलं देवं वासुदेवं जनार्दनम् ।
नीलजीमूतसंकाशं पीताम्बरधरं शुभम् ॥

— G3 om lines 5417-5418 — (L 5417) D1 धर्मेते पुत्र भूपति (for °) — (L 5421) G(ed) स तु विष्णवालये नित्यं (for °) — G3 om line 5422 M1 om lines 5423-5427. — (L 5424) G(ed) नृप (for प्रभु) — (L 5427) D1 भक्तिमान्, G1 बुद्धि° (for बन्धु°) G3 — (L 5429) G2 कावेर्यां रङ्गदर्शं रङ्गेश पूजयेत्सदा (for ᵇ) — (L 5429) G2 कावेर्या रङ्गदर्शनम् (for ᵇ) — For line 5430, G2 subst

205** कृत्वा तत्रैव राजेन्द्र मुक्तिमाप सुदुर्लभाम् ॥

— G3 om the ref — (L. 5434) G1 G(ed) कलियुगे (for कलौ भक्त्या) — G2 om lines 5435-5440 — (L. 5436) D1 इष्टं (for तिष्ठन्) M1 मुक्तिम् (for मोक्षम्) D1 पुनरावृत्तिवर्जितम् (for ᵇ) — (L 5437) G1 पुण्यं यत्सुसमार्जितम्, M1 पुण्य वै सुमहा° (for ᵇ) — D1 G1 om lines 5438 5439 M1 om lines 5439-5440

Colophon — *Mention of the Epic* G1 — *Sub-parvan* G1 2 M1 G(ed) शेषधर्मा — *Adhy name* D1 श्रीरङ्गमाहात्म्यम्, G G(ed) श्रीरङ्गेशमाहात्म्यम्, M1 चन्द्रपुष्करिणीमाहात्म्यम् — *Adhy no* D1 G1 2 M1 41, G(ed.) 42

(L 5444) G(ed) महाप्राज्ञो (for °प्राज्ञ) G1 2 विस्मयानो — G2 महाप्राज्ञो (for ᵃ) G2 भीष्मो धर्मज्ञमब्रवीत् (for ᵇ) — G2 om the ref G2 om line 5447-5461 — (L. 5447) G1 G(ed) पुण्या (for नाम) — D1 om lines 5448-5457 G1 M1 om line 5453 M1 om line 5458 — (L. 5461) M1 सुलभा (for दुर्लभा) — For line 5462, G2 subst °

चन्द्रार्कनेत्रममलं विद्युच्चञ्चललोचनम् ।
सहस्रादित्यसंकाशो वेदमूर्तिमकल्मषम् ॥
अणिमादिगुणोपेतमार्तत्राणपरायणम् ।
कल्पवृक्षतरोर्मूलं स्वर्गिणामास्पदं शिवम् ॥
कामधेनोर्मूलधनं सनकादिनिषेवितम् ।
जीवभूतमशेषाणां लोकानां पाण्डुनन्दन ।
सर्वगं तु सहस्राक्षं सहस्रकिरणं प्रभुम् ॥
एवं भक्त्या प्रार्थयन्तमन्तर्यामी जगन्मयः ।
आविर्बभूव धर्मात्मन्गरुडोपरि संस्थितः ॥
तमुवाच कुरुश्रेष्ठ देवगन्धर्वसेवितः ।
अत्रिनेत्रोद्भव श्रीमान्किमर्थं तप्यते त्वया ॥
तोषितस्तपसानेन वहदामि तवेप्सितम् ।
वरदं पश्य मां तात यत्ते मनसि रोचते ॥
लोकनाथवचः श्रुत्वा शीतांशुस्तं प्रणम्य च ।
वरदं पुण्डरीकाक्षमस्तौषीत्कमलापतिम् ॥
नमो भगवते तुभ्यं सर्गस्थित्यन्तकारिणे ।
गुणत्रयस्वरूपाय तस्य भेदकराय च ॥
विश्वयोने जगन्नाय सहस्रशिरसे नमः ।
सहस्रचक्षुषे तुभ्यं सहस्रभुजशालिने ॥
सहस्रपादमूलाय कर्मणा फलदायिने ।
यज्ञाय यज्ञरूपाय यज्ञानां पतये नमः ॥
पाहि पाहि जगन्नाथ प्रणतार्तिप्रणाशन ।
ध्रुवं पदमसामान्यं देहि मे भक्तवत्सल ॥
सौभाग्यमण्डलं देहि कान्तिं शीतकरीं प्रभो ।
अत्र तिष्ठ सदा देव चन्द्रपुष्करिणीतटे ।
मम नाम्ना पुष्करिण्या नामधेयं कुरु स्वयम् ॥
स्नातानामत्र देवेश भुक्तिं मुक्तिं प्रयच्छ ह ।
मां पाहि सर्वलोकेश भूयो भूयो नमोऽस्तु ते ॥

भीष्म उवाच ।

तथास्त्विति समामन्त्र्य पुनर्वचनमब्रवीत् ।
ग्रहाणामग्रणीः श्रीमानादित्योऽयं हुताशनः ।
भवितासि द्वितीयो मे त्वमेवाहं न संशयः ॥
चन्द्रपुष्करिणी ह्येषा लोके ख्यातिं गमिष्यति ।
स्नातानामत्र सायुज्यं भविष्यति च मेऽनघ ॥
लोकमातुर्महालक्ष्म्या वरं दत्त्वा ततः परम् ।
अत्रैव स्थिरमेष्यामि तत्रांशेन सुधाकर ॥

सोम उवाच ।

अशेषजननी सा तु कुत्रास्ते मापते सती ।
लोकनाथ नमस्तेऽस्तु वद तत्कारणं प्रभो ॥

श्रीभगवानुवाच ।

पुराहं लोकरक्षार्थं संभवामि पुनः पुनः ।
परित्राणाय साधूनामसतां निधनाय च ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥
तपश्चरति सा देवी सोढुं विरहमक्षमा ।
कुम्भघोणे महाक्षेत्रे सर्वसिद्धनिषेविते ॥
लक्ष्मीसरोवरे देवी स्वर्णपङ्कजकानने ।
ध्यायन्ती मां सदा देवी सर्वगं भक्तवत्सलम् ॥
सदा सेवितुमिच्छन्ती योगिध्येयं महामते ।
युगान्तां षट्शतं सोम ध्यायन्त्या मां तपः कृतम् ॥
तत्कारणात्तु यास्यामि चन्द्र संप्रति तत्र वै ।
गच्छ त्वं लोकमतुलं ज्योतिर्गणनिषेवितं ॥
पतिस्त्वं सर्वऋक्षाणामद्यप्रभृति चन्द्रमाः ।
वृक्षगुल्मलतादीनामोषधीनां द्विजन्मनाम् ॥

चन्द्र उवाच ।

कियद्दूरे स्थिता देवी तत्क्षेत्रस्य फलं तु किम् ।
एतद्वेदितुमिच्छामि लोकनाथ नमोऽस्तु ते ॥

श्रीभगवानुवाच ।

प्राचीभागे तपस्यन्ती योजनानां चतुष्टये ।
आस्ते तत्र सरस्तीरे स्वर्णपङ्कजकानने ।
कुम्भघोणमिति ख्यातं क्षेत्राणामुत्तमं विदुः ॥
लक्ष्मीसरोवरं नाम तत्र तिष्ठति संप्रति ।
निर्मितं तपसा देव्या परिशुद्धहृदा तथा ॥
आदावपि च तत्क्षेत्रं देवर्षिगणसेवितम् ।
धर्मवृद्धिकरं क्षेत्रं कुम्भघोणं विदुर्बुधाः ॥
कुम्भकोणे स्थितिर्यस्य तस्य लोको ममैव हि ।
ब्रह्मणा सेवितं स्थानं लोकानां सृष्टिमिच्छता ॥
गङ्गादिसर्वतीर्थानि संगृह्य च पुरा रमा ।
निर्ममे लोकरक्षार्थं पावनं तत्सरोवरम् ॥

---

206** चन्द्रपुष्करिणीतीरे हिमांशुस्तप आस्थितः ।
— After line 5470, G1 ins.:

207** लोकानामीश्वरं देवं स्तोत्रैः श्रुतिमनोहरैः ।
स्तुत्वा लक्ष्मीपतेरेवं तूष्णीमास महामनाः ।

— G1 om. lines 5471–5495 — (L. 5477) G(ed.) शुभम् (for हरिम्) — (L. 5484) M1 सहस्रकिरणप्रभम् (for °). — (L. 5489) G(ed.) सतोत्मा (for धर्मात्मन्). — (L. 5489) D1 ददामि च यथेप्सितम्; G1 वरदोऽहमिहा-गत. (for °). — (5490) D1 वरवस्व च मां तात (for °). — G1 om. lines 5491–5501. Before line 5493, D1 ins. चन्द्रमाः. — (5498) M1 भूतानां (for यज्ञानां). — Before line 5502, G1 ins चन्द्र° — (L. 5503) G1 मम नाम्ना पुष्करिणी (for °). — M1 om. lines 5504–5506. — Before line 5507, M1 ins श्रीभगवान्. — (L. 5507) D1 °भग° G1 M °ग° (for °णी). G(ed) सुधाकर (for हुताशन). — G1 om. line 5509 — (L. 5512) M1 स्थिरम्; G(ed.) स्थितिम् (for स्थिरम्). M1 निशाकर (for सुधा°). — G(ed.) चन्द्र (for सोम). — (L. 5514) G1 भगवन्वद विस्तरात् (for °). — (L. 5515) G1 G(ed.) युगे युगे (for पुनः पुनः) — G1 om. lines 5521–5531. — (L. 5527)

वर्षे वर्षे समागम्य ब्रह्माद्यास्तत्र देवता ।
स्नात्वा मुनिवरा सर्वे यान्ति स्थान स्वक पुन ॥
एकाहमपि य कुर्यात्स्नान तत्र सुधाकर ।
प्राप्नोति सुरलोक स पूजित सिद्धचारणै ॥
त्रिरात्र वसता तत्र कुम्भघोणे सुरालये ।
ब्रह्मलोको भवेत्तेषा यावदाभूतसप्लवम् ॥
लक्ष्मीसरोवरे स्ना वा पूज्य मा भक्तिसयुत ।
यो ददाति च यद्दान तद्दान पितृमुक्तिदम् ॥
पुण्यक्षेत्राणि सर्वाणि तीर्थानि सुमहान्ति च ।
वसन्ति तत्र वै सोम ह्यनिश पुण्यकाङ्क्षया ॥
तस्यैव सदृश नास्ति त्रिषु लोकेषु सुव्रत ।
अन्यक्षेत्रे कृत पाप पुण्यक्षेत्रे विनश्यति ॥
पुण्यक्षेत्रे कृत पाप वाराणस्या विनश्यति ।
वाराणस्या कृत पाप कुम्भघोणे विनश्यति ।
कुम्भघोणे कृत पाप कुम्भघोणे विनश्यति ॥
तस्या सकाश गच्छामि सुखी भव सुधाकर ।
तत्रापि मा भजस्वेति तत्रैवान्तरधीयत ॥
इति श्रुत्वा हरेर्वाक्य हिमाशुर्विस्मयान्वित ।
ध्यायस्तत्रापि देवेशमास्ते चिरतर नृप ॥
भूसुतोऽपि च त दृष्ट्वा हिमाशु च सुधाकरम् ।
उग्रेण तपसा तत्र स तृतीयो ग्रहोऽभवत् ॥
पितुराज्ञा पुरस्कृत्य सौम्योऽपि तपसात्र च ।
अवाप रविसालोक्य ग्रहाणा मध्यमेव च ॥
गुरु कमलपत्राक्षीं स्वका भार्यां हिमाशुना ।
हृतां परमकल्याणीमवापात्र च सेवनात् ॥
दैत्यमन्त्री चिर काल तत्र तप्त्वा तप परम् ।
अवाप्य मध्य तेषा तु ग्रहाणा शुभदोऽभवत् ॥
शनिस्तु रविज श्रीमान्राहुकेतू च तावुभौ ।
ते सर्वे सुचिर तप्त्वा ग्रहसख्यामुपागता ॥
इन्द्रो यम प्रचेताश्च कुबेरनळकूबरौ ।
कुम्भघोणे महाविष्णुमाराध्य प्रपयुर्दिवम् ॥
दिशा पतित्वमापन्ना नित्य देवै प्रपूजिता ।
आराध्य देवदवेश दिक्पालत्वमुपागता ॥
हरिश्चन्द्रो नलो राजा पुरुकुत्स पुरूरवा ।
सगर कार्तवीर्यश्च षडेत चक्रवर्तिन ॥
ख्याति लोके मह सत्त्व धर्मश्रद्धा महद्धनम् ।
अवापुस्तस्य कृपया तपसा च शुभव्रता ।
शृण्वता वदता चेदमेतद्भाग्य भवेद्ध्रुवम् ॥

Colophon

युधिष्ठिर उवाच ।

देवदेवो जगन्नाथ प्रणतार्तिप्रणाशन ।
शिवमूर्ति प्रसन्नात्मा लोके प्रत्यक्षता गत ॥
कथ शभुरिति ख्यात पूज्यते विधिवद्द्विजै ।
कथ ददाति भक्ताना प्रसन्नात्मा वर परम् ॥
तस्य देवस्य पूजाया फल किं कृत पूजित ।
क प्राप्नोति शुभाँल्लोकानतान्सर्वान्यदस्व मे ॥
देवव्रत महाभाग कृपा मयि तवास्ति चेत् ।
तस्मात्त्वा प्रार्थयाम्यद्य पातु धर्मामृत प्रभो ।

भीष्म उवाच ।

अहो वक्ष्यामि ते पार्थ भूतनाथस्य वैभवम् ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
आद्यन्तशून्यो देवेश सृष्टिस्थित्यन्तकारक ।
ब्रह्मा रुद्रस्तथा विष्णु कुबेरो देवराट् प्रभु ॥
इन्द्रोऽग्निर्यमधर्मेशौ निर्ऋतिर्वरुण प्रभु ।
वायु सूर्य सहस्राक्ष सर्वेशो भूर्भुव सुव ॥
कालरूपस्य धर्मस्य लोकनाथस्य धर्मिण ।
नाह वक्तुमशक्तोऽस्मि तत्स्वभावमशेषत ॥

युधिष्ठिर उवाच ।

तेषामीश्वरभक्तानां विष्णुलोक कथ भवेत् ।

---

$G(ed)$ नृप ( for तक ) — $G_2$ om lines 5534 5535 $G_2$ om lines 5537–5542 —( L 5540 ) $G_1$ पापानां नाशक परम् ( for $^b$ ) —( L 5543 ) $D_1$ $G_2$ $M_1$ स्नानमात्र ( for स्नान तत्र ) —( L 5544 ) $D_1$ $G_2$ $M_1$ सर्वपापविवर्जित ( for $^b$ ) — $G_2$ om lines 5545 5548 —( L 5549 ) $G_2$ सुबहूनि ( for सुमहान्ति ) —( L 5560 ) $G_2$ $M_2$ सुधामयम् ( for °करम् ) — After line 5560, $G_2$ ins

208** गुरुस्तत्र च तप्त्वाथ तप परमदारुणम् ।

— $G_2$ om lines 5562 5566 —( L 5562 ) $G_1$ बुधो ( for सौम्यो ) —( L 5567 ) $G_2$ एतेषां ( for तेषां तु ) — After line 5567, $G_2$ ins

209** भृगु सोम्य शनि केतु राहुर्देवगुरुस्तथा ।
एवं तप्त्वा तप क्रूरं लेभिरे ग्रहदेवताम् ।
एवमन्ये महाराज अत्र तप्त्वा दिवङ्गत ॥
इदं पवित्र पापघ्न शृण्वतां पठतामपि ।
य शृणोति नरो भक्त्या सर्वपापै प्रमुच्यते ॥

— $D_1$ om lines 5570 5573 —( L 5578 ) $M_2$ तथ ( for भाग्य )

COLOPHON S parvan $D_1$ $G_1$ आश्चर्यपर्वणि दैवधर्मा, $G_2$ $M_1$ $G(ed)$ देवधर्मा — Adhy name $D_1$ $G_1$ $M_2$ ... — Adhy no $D_1$ $G_1$ $M_2$ 42, $G(ed)$ कुम्भघोणमाहात्म्यम् ... $G(ed)$ 43

( L 5581 ) $M_1$ $G(ed)$ विधिना ( for °वद् ) — $G_2$ om. lines 5585 5586 — $G_2$ देवव्रत ( for भीष्म ) —( L 5590 ) $D_1$ $G_2$ ब्रह्मा विष्णुस्तथा कृष्ण ( $G_2$ $M_1$ कृष्ण ( for विष्णु ) ) — $G_2$ om lines 5591–5592 —( L 5591 ) $D_1$ इन्द्रो- ... ( for ... ) —( L 5594 ) $D_1$ नाहं वक्तुं न शक्तो ऽस्मि ... ( for $^a$ ) — After line 5593, $D_1$ ins

210** भीष्म ।
अथ हि भगवत्पूर्वं सृष्टिदिनात्परे ।

चन्द्रार्कनेत्रममलं विद्युच्चञ्चललोचनम् ।
सहस्रादित्यसंकाशं वेदमूर्तिमकल्मषम् ॥
अणिमादिगुणोपेतमार्तत्राणपरायणम् ।
कल्पवृक्षतरोर्मूलं स्वर्गिणामास्पदं शिवम् ॥
कामधनोर्मूलधनं सनकादिनिषेवितम् ।
जीवभूतमशेषाणां लोकानां पाण्डुनन्दन ।
सर्वगं तु सहस्राक्षं सहस्रकिरणं प्रभुम् ॥
एवं भक्त्या प्रार्थयन्तमन्तर्यामी जगन्मयः ।
आविर्बभूव धर्मात्मन्गरुडोपरि संस्थितः ॥
तमुवाच कुरुश्रेष्ठ देवगन्धर्वसेवितः ।
अत्रिनेत्रोद्भव श्रीमान्किमर्थं तप्यते त्वया ॥
तोषितस्तपसानेन ददामि तवेप्सितम् ।
वरदं पश्य मां तात यत्ते मनसि रोचते ॥
लोकनाथवचः श्रुत्वा शीतांशुस्तं प्रणम्य च ।
वरदं पुण्डरीकाक्षमस्तौषीत्कमलापतिम् ॥
नमो भगवते तुभ्यं सर्गस्थित्यन्तकारिणे ।
गुणत्रयस्वरूपाय तस्य भेदकराय च ॥
विश्वयोने जगन्नाथ सहस्रशिरसे नमः ।
सहस्रचक्षुषे तुभ्यं सहस्रभुजशालिने ॥
सहस्रपादमूलाय कर्मणां फलदायिने ।
यज्ञाय यज्ञरूपाय यज्ञानां पतये नमः ॥
पाहि पाहि जगन्नाथ प्रणतार्तिप्रणाशन ।
ध्रुवं पदमसामान्यं देहि मे भक्तवत्सल ॥
सौभाग्यमण्डलं देहि कान्तिं शीतकरीं प्रभो ।
अत्र तिष्ठ सदा देव चन्द्रपुष्करिणीतटे ।
मम नाम्ना पुष्करिण्या नामधेयं कुरु स्वयम् ॥
स्नातानामत्र देवेश भुक्तिं मुक्तिं प्रयच्छ हि ।
मां पाहि सर्वलोकेश भूयो भूयो नमोऽस्तु ते ॥

भीष्म उवाच ।

तथास्त्विति तमामन्त्र्य पुनर्वचनमब्रवीत् ।
ग्रहाणामग्रणी श्रीमानादित्योऽयं हुताशनः ।
भवितासि द्वितीयो मे त्वमेवाहं न संशयः ॥
चन्द्रपुष्करिणी ह्येषा लोके ख्यातिं गमिष्यति ।
स्नातानामत्र सायुज्यं भविष्यति च मेऽनघ ॥
लोकमातुर्महालक्ष्म्या वरं दत्त्वा ततः परम् ।
अत्रैव स्थिरमेष्यामि तत्रांशेन सुधाकर ॥

सोम उवाच ।

अशेषजननी सा तु कुत्रास्ते मापते सती ।
लोकनाथ नमस्तेऽस्तु वद तत्कारणं प्रभो ॥

श्रीभगवानुवाच ।

पुराहं लोकरक्षार्थं संभवामि पुनः पुनः ।
परित्राणाय साधूनामसतां निधनाय च ।
*धर्मसंस्थापनार्थाय संभवामि युगे युगे* ॥
तपश्चरति सा देवी सोढुं विरहमक्षमा ।
कुम्भघोणे महाक्षेत्रे सर्वसिद्धनिषेविते ॥
लक्ष्मीसरोवरे देवी स्वर्णपङ्कजकानने ।
ध्यायन्ती मां सदा देवी सर्वगं भक्तवत्सलम् ॥
सदा सेवितुमिच्छन्ती योगिध्येयं महामते ।
युगान्वा षट्शतं सोम ध्यायन्त्या मां तपः कृतम् ॥
तत्कारणात्तु यास्यामि चन्द्र संप्रति तत्र वै ।
गच्छ त्वं लोकमतुलं ज्योतिर्गणनिषेवितं ॥
पतिस्त्वं सर्वनक्षत्राणामद्यप्रभृति चन्द्रमाः ।
तरुगुल्मलतादीनामोषधीनां द्विजन्मनाम् ॥

चन्द्र उवाच ।

कियद्दूरे स्थिता देवी तत्क्षेत्रस्य फलं तु किम् ।
एतद्वेदितुमिच्छामि लोकनाथ नमोऽस्तु ते ॥

श्रीभगवानुवाच ।

प्राचीभागे तपस्यन्ती योजनानां चतुष्टये ।
आस्ते तत्र सरस्तीरे स्वर्णपङ्कजकानने ।
कुम्भघोणमिति ख्यातं क्षेत्राणामुत्तमं विदुः ॥
*लक्ष्मीसरोवरं नाम तत्र तिष्ठति संप्रति* ।
निर्मितं तपसा देव्या परिशुद्धहृदा तया ॥
आदावपि च तत्क्षेत्रं देवर्षिगणसेवितम् ।
धर्मवृद्धिकरं क्षेत्रं कुम्भघोणं विदुर्बुधाः ॥
कुम्भकोणे मृतिर्यस्य तस्य लोको ममैव हि ।
ब्रह्मणा सेवितं स्थानं लोकानां सृष्टिमिच्छता ॥
गङ्गादिसर्वतीर्थानि संगृह्य च पुरा रमा ।
निर्ममे लोकरक्षार्थं पावनं तत्सरोवरम् ॥

---

206** चन्द्रपुष्करिणीतीरे हिमांशुस्तपः आस्थितः ।
— After line 5470, G2 ins

207** लोकानामीश्वरं देवं स्तोत्रैः श्रुतिमनोहरैः ।
स्तुत्वा लक्ष्मीपतेरेव तूष्णीमास महामनाः ॥

— G2 om lines 5471–5485 —(L. 5477) G(ed) शुभम् (for हरिम्) —(L. 5484) M1 सहस्रकिरणप्रभम् (for °), —(L. 5488) G(ed) सर्वात्मा (for धर्मात्मन्) — (L. 5489) D1 ददामि च यथेप्सितम्, G1 वरदोऽहमिहागत (for °) —(5490) D1 वरयस्व च मां तात (for °) — G2 om. lines 5491 5501 Before line 5493 D1 ins. चन्द्रमा —(5498) M1 भूतानां (for यज्ञानां) — Before line 5502 G2 ins चन्द्र —(L. 5503) G2 मम नाम्ना पुष्करिणी (for °) — M1 om lines 5504–5506 — Before line 5507, M1 ins श्रीभगवान् — (L. 5507) D1 अथग°; G1 M °ग (for °णी) G(ed) सुधाकर (for हुताशन) — G2 om line 5509 —(L 5512) M1 सिद्धिम्। G(ed.) स्थितिम् (for स्थिरम्) M1 निशाकर (for सुधा°) — G(ed) चन्द्र (for सोम) —(L. 5514) G2 भगवन्वद विस्तरात् (for °) —(L. 5515) G2 G(ed.) युगे युगे (for पुनः पुनः) — G2 om lines 5521 5531 —(L. 5527)

एतन्मे संशयं तात छेत्तुमर्हस्यशेषतः ॥

भीष्म उवाच ।

ब्रह्माविष्णुमहेशानां भेदः कुत्रापि न प्रभो ।
कर्तारो ह्यत्र लोकानां सृष्टिस्थितिलयेषु च ॥
त्वया दृष्टः पुरा कृष्णो लोकनाथो जगन्मयः ।
कैलासयात्रामकरोत्पुत्रार्थं भरतर्षभ ॥
तत्राराध्य चिरं कालं भूतनाथमुमापतिम् ।
ईप्सितं प्राप्तवान्पुत्रं तस्माद्भेदो न विद्यते ॥
शंकरो विष्णुमव्यक्तं चिरमाराध्य भक्तिमान् ।
षण्मुखं लभते पुत्रं देवतार्थमरिंदमम् ॥
ब्रह्मा च जनयामास विष्णुमाराध्य भक्तितः ।
लोकान्प्रजापतीन्सर्वांस्तस्माद्भेदो न विद्यते ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
शृण्वतां सर्वपापघ्नमायुरारोग्यवर्धनम् ॥
पुरा कृतयुगे राजन्सुशान्तो नाम वै द्विजः ।
शान्तो जितेन्द्रियो मौनी सदा ध्यानपरायणः ॥
वेदेषु धर्मशास्त्रेषु वेदान्तेषु विचक्षणः ।
गार्हस्थ्ये सकलान्कामाननुभूय द्विजोत्तम ।
मोक्षकामो हि राजेन्द्र विशेषेण शिवव्रतः ॥
किष्किन्धां समुपागम्य ब्रह्मदत्तेन पालिताम् ।
पम्पासरोवरे स्नानं कृत्वा तु शिवमर्चनम् ।
तपस्तप्तुमना राजंस्तत्रास्त शंकरं स्तुवन् ॥
पम्पानाथं विरूपाक्षं नीललोहितमव्ययम् ।
मृत्युंजयं कृत्तिवासं पिनाकिनमरिंदमम् ॥
सहस्राक्षं सदानन्दं नीलमेघनिभं हरम् ।
शूलपाणिं महादेवं सृष्टिस्थित्यन्तकारिणम् ॥
ध्यायन्स्तुवन्नमस्यंश्च तत्रास्ते ब्राह्मणोत्तमः ।
त्रैयम्बकं महामन्त्रं रुद्रसूक्तादिभिः शिवम् ॥
स्नापयित्वा तु तं पूज्य त्रिकालं स्नानतत्परः ।
शाकमूलफलाहारः शान्तः परमबुद्धिमान् ॥
अत्र तिष्ठति राजेन्द्र तस्मिन्नास्ते द्विजोत्तमः ।
शूद्रो वै धर्मकुशलो नामतः सगतो बुधैः ।
शिवभक्तो जितक्रोधः शुश्रूषुश्च द्विजन्मनाम् ॥
विरूपाक्षस्य देवस्य वन्दनार्थं ययौ च सः ।
सुशान्तस्य तदा कुर्वञ्शुश्रूषां राजसत्तम ।
तत्रास्ते सरसस्तीरे जिताहारः शतं समाः ॥
तस्मिन्काले विरूपाक्षो भूतनाथो जगन्मयः ।
आविर्बभूव राजेन्द्र ततो वाचमुवाच ह ॥
सुशान्त शृणु मद्वाक्यं तपसा तोषितोऽस्म्यहम् ।
वरं वरय भद्रं ते विद्धि भूतपतिं च माम् ॥
एतद्वचस्तदा श्रुत्वा ब्राह्मणो विस्मयान्वितः ।
नत्वा पुनः पुनर्देवमस्तौषीज्जगतां पतिम् ॥
नमस्ते पार्वतीकान्त नमस्ते चन्द्रशेखर ।
नमश्चैत्यरूपाय पशूनां पतये नमः ॥
विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव ।
शरणं भव भूतेश करुणाकर शंकर ॥
नमो धर्माय देवाय विश्वरूपाय शूलिने ।
भूतनाथाय धर्मात्मन्नमस्ते नागभूषण ।
भस्मोद्धूलितसर्वाङ्ग जटाधर सदाशिव ॥
मृगनाभिसुगन्धाय मृगचर्मधराय च ।
कपालमालिने तुभ्यमक्षसूत्रधराय च ।
भूयो भूयो नमस्तुभ्यं पुरान्तक जगन्मय ॥

भीष्म उवाच ।

एवं स्तुतः प्रसन्नात्मा पार्वतीवल्लभः प्रभुः ।
अष्टमूर्तिधरः श्रीमान्देवगन्धर्वसेवितः ॥
वरं गृहीति तं चोक्त्वा शूद्रं भक्तिसमन्वितम् ।
अतिष्ठत्तस्य पुरतः पूर्वाद्रावंशुमानिव ॥
वरेण्यं वरयामास ब्राह्मणो लोकविश्रुतः ।
चतुर्थोऽपि च मे श्रेयो ददस्वेति वरं तदा ॥
नीलकण्ठस्तदाकर्ण्य स्मितपूर्वमभाषत ।

त्रिरूपाणि चकारासौ त्रिरूपेषु व्यवस्थितः ॥

—(L. 5602) D1 च लभेत्, G1 2 M1 लभते (for प्राप्तवान्) D1 om (hapl) lines 5602b–5604a —(L. 5604) G(ed.) लब्धवान् (for लभते) G1 अनिन्दितम् (for अरिंदमम्). — After line 5606, D1 ins

211** ईश्वरो विष्णुमभ्यर्च्य शिवमाराध्य भक्तितः ।
षण्मुखं लभते पुत्रं देवपुत्रमरिंदम ।

—(L. 5608) G2 G(ed) आयुर्वेदनकारणम् (for b) — G2 om. lines 5611–5612 —(L. 5611) M1 विशारद (for विचक्षण) G1 वेदाङ्गेषु विशारदः (for b) —(L. 5613) D1 G2 शिवप्रिय (for °व्रत) —(L. 5615) G1 2 G(ed.) कर्च्यं च, M1 अव्ययम् (for अर्चनम्) —(L. 5616) G2 M1 चर्तुमना, G(ed) कर्तुं° (for तप्तुं°) G(ed) स्म शिवं (for शंकर) — G2 M1 om lines 5619 5620 —(L. 5625) G(ed.) अतिष्ठत्तत्र राजेन्द्र (for a) G1 काले (for आस्ते) —(L. 5626) D1 G(ed) रुद्रो (for शूद्रो) G2 रुद्रो वै तत्र कुशलो (for a) —(L. 5627) G1 जितवाक्कायमानसः (for b) —(L. 5628) D1 M1 सरः (for च सः) —(L. 5629) D1 सुशीलस्य (for सुशान्तस्य) — After line 5630, D1 ins

212** भीष्मः ।
इमां विद्यां शृणुष्वाद्य लोकवन्द्योऽसि मेऽनघ ।

— D1 om. lines 5631–5712 —(L. 5633) G1 मद्वाक्यं शृणुष्व मे वाक्यं (for a) —(L. 5636) M1 दोर्भ्याम् (for देवम्) —(L. 5637) G2 G(ed.) पार्वतीनाथ (for °कान्त) — M1 om lines 5639–5644 — After line 5640, G(ed) ins

213** शिव शंभो महादेव विश्वेश्वरामरवल्लभ ।

श्रियमन्तस्थमत्वां च प्रागाद्गर्गाश्रमं प्रति ॥
तत्रैव पञ्चमासांश्च स्थित्वा शोकसमन्वित ।
पङ्गुत्वमथ मूकत्वमन्धत्वमगमन्नृप ॥
राज्यभ्रष्ट पतिं पत्नी प्राप्तुकाम पुन श्रियम् ।
प्रलपन्त्य मुहु पुत्रान्हताम्युद्धे सुदुर्लभान् ॥
श्रिय राज्यं च भोगं च समुद्दिश्य पुन पुन ।
आश्वासयन्ती सा देवी जगौ श्लोकचतुष्टयम् ॥

वेदिका उवाच ।

धैर्यं विपदि कर्तव्य संपत्तौ च क्षमा परा ।
वाचालत्व सता मध्ये संद्दे शास्त्रपुर मरम् ॥
विक्रमो युधि कर्तव्य स्थिरत्व स्त्रोममीपत ।
ऐश्वर्ये च सदा क्षान्तिर्भक्ति शश्वत्तु भूसुरे ॥
भवितव्य भवत्येव नालिकेरफलाम्बुवत् ।
गन्तव्य गच्छति सदा गजभुक्तकपित्थवत् ॥
यद्भावि तद्भवत्येव यदभावि न तद्भवेत् ।
इति निश्चितबुद्धीना न चिन्ता बाधते क्वचित् ॥
एवं मनीषिण प्राहुर्नीतिशास्त्रविदो नृप ।
मुञ्च शोकं च मोह च चिन्ता देहविनाशिनीम् ॥
गर्गाश्रममिद राजन्प्रापयिष्ये तदन्तिकम् ।
स ते दास्यति धर्मात्मा सर्वान्कामान्सुदुर्लभान् ॥
सान्त्वयित्वा तदा वीरं स्वपतिं राष्ट्रवर्जितम् ।
अशक्तं गमने देवी बिभ्रती निजकन्धरे ।
प्रापयामास मुदिता गर्गाश्रममकल्मषम् ॥
पतिं तत्र प्रतिष्ठाप्य मुनिं नत्वा पुन पुन ।
कम्पमाना तदा साध्वी पीनोन्नतपयोधरा ॥
चन्द्रानना सुकेशी च बिम्बोष्ठी मञ्जुभाषिणी ।
कर्णान्तनयना बाला चन्द्रिकामदसुच्छविः ॥
वेदिका वेदिमध्या सा पञ्चविंशतिवार्षिकी ।
कोमलाङ्गी तु सा देवी श्यामा सा पुण्यलक्षणा ।
मुनिं प्रोवाच धर्मिष्ठा पाहि पाहीति मे पतिम् ॥
भगवन्पतिना सार्धमागता शत्रुपीडिता ।
राज्यभ्रष्टो ह्यय राजा त्वामेव शरण गत ॥
मुनिस्तत्र चिर ध्यात्वा ध्यानमार्गेण चक्षुषा ।
दृष्टवान्सर्वमेवैतद्दाशस्तस्य महात्मन ।
उवाच मुनिशार्दूलो राजानं महिषीसखम् ॥

गर्ग उवाच ।

युवयो कष्टमत्युग्र सर्वाभावं सुदु सहम् ।
येनेदमीदृशं प्राप्त तद्ब्रवीमि हि तऽधुना ॥
देवीनामुत्तमा देवी मनाना प्रवरा शुभा ।
सर्वकामप्रदा देवी भारती नैव पूजिता ।
तस्मात्यमीदृशीं प्राप्तो गतिं दुरवबोधनाम् ॥
अहो मूर्खा नरा सर्वे ऐश्वर्यमदगर्विता ।
धर्म्यं व्रत न कुर्वन्ति पीडां गच्छन्ति दु खिता ॥
व्रतोपवास कर्तव्यो ह्यात्मन श्रेय इच्छता ।
श्रेयसा सुखमाप्नोति परत्रामुत्र च प्रभो ॥
किमत्र बहुनोक्तेन दृष्टमाश्चर्यमुत्तमम् ।
शुभव्रतेन भारत्या नलो वै प्राप्तवान्पुरम् ॥
विरूपाक्षस्य कृपया पम्पातीरनिवासिन ।
प्राप्तवानचलां लक्ष्मीं नलो राजा विचक्षण ॥
इत्युक्ता सहसा देवी वेदिका शुभलोचना ।
नत्वा पुन पुन प्राह ऋषिं परमधार्मिकम् ॥
विरूपाक्षस्य माहात्म्य पम्पातीरनिवासिन ।
तीर्थस्य वैभवं मेऽद्य विस्तराद्वक्तुमर्हसि ॥

गर्ग उवाच ।

शृणु देवि प्रवक्ष्यामि पम्पानाथस्य वैभवम् ।
तुङ्गभद्रा शुभ तीर्थं कोटिशाकरसभयम् ॥

भीष्म उवाच ।

एवं प्रसन्नहृदयं मुनिं नत्वा पुन पुन ।
एकाग्रमनसौ भूत्वा दम्पती वाक्यजिज्ञासुम् ॥

गर्ग उवाच ।

अहो वक्ष्यामि माहात्म्यं विरूपाक्षस्य धूर्जिन ।
यस्य श्रवणमात्रेण वाजपेयफलं भवेत् ॥
विरूपाक्षं शिवं दृष्ट्वा नरा पापकृता अपि ।
विमुक्तकिल्बिषास्ते तु रुद्रलोकाधिगामिन ॥
सकृदपि नमेयस्तु विरूपाक्षं नराधिप ।

line 5769, G1 ins ·
917** तया सह सुचार्वङ्ग्या मात्स्यते युद्ध्यते ।
हतपुत्रश्च तैर्युद्धे परित्यक्तश्च बन्धुभि ॥
राजा चिन्ताकुलो भूत्वा कालोऽयमिति विक्रम ।
— G1 om line 5769 — (L. 5769) G(ed) पञ्चत्वम् (for पङ्गु°). — G1 3 M1 धीरा, G(ed) धीर (for पत्नी) — G1 om line 5771 — (L. 5772) D1 पुत्रांश्च राज्यभोगांश्च (for °) — G1 om the ref — (L. 5776) D1 धीरत्वं (for स्थि°) — (L. 5783) G4 मुञ्च भो राजशार्दूल (for °). — Before line 5786, D1 ins भीष्म. — (L. 5787) D1 उत्त° G(ed.) स्कन्धाभ्यां निधाय वै (for °) — (L. 5794) D1 शेषुना (for पुण्यल°) — Before line 5796, G2 ins. वेदिका
— (L. 5798) G1 G(ed) दासम°, M1 [अ]स्तान° (for °). — (L. 5800) G2 राजानं च महीपतिम् (for °). स्वन) — D1 G(ed) om the ref — (L. 5801) M1 राजसत्तमं (for सर्वाँ°) — For line 5803, G2 subst. :
918** देवानां मुनिनां चैव मनसां वरदं शुभम् ।
— (L. 5805) D1 G2 गतिं दुरवबोधिनीम् (for °). — (L. 5806) G1 G(ed.) मोहिता (for गर्विता). — Before line 5812, G2 ins. देवी — G2 om. lines 5815-5816 — (L. 5814) D1 एव तुष्ट तुष्टेऽद्य (for °) — (L. 5818) D1 सर्वसंपत्प्रदायकम् (for °) — (L. 5819) M1 ... (for शुभ तीर्थं). G(ed) ... (for कोटि°). G(ed) ... — D1 G2 om. the ref — (L. 5824) D1 ... ; G1

अनन्तभोगमायुष्य चिरं वासं महेश्वर ।
देहि स्वर्गे जगन्नाथ नीलकण्ठ नमोऽस्तु ते ॥
ईश्वर उवाच ।
ब्रह्मावसानपर्यन्तं युष्माकं स्वर्गवासिनाम् ।
अस्तु वासः सुराः सर्वे ह्यत्र वत्स्याम्यहं चिरम् ॥
रामोऽहं तु भविष्यामि विष्णवंशेन समन्वितः ।
दशाननपुरोगांश्च हनिष्ये तानि सयुगे ॥
ऋक्षवानररूपेण यूयमत्र जनिष्यथ ।
विहराम वने पुण्ये गोलाङ्गूलनिषेविते
तुङ्गाजलसमूहेन तृषा मूलफलेन च ॥
इत्युक्ता भूतनाथेन देवदेवेन राघव ।
संप्रहृष्टाः सुरगणा दिवं जग्मुर्यथासुखम् ॥
स एव राम महाबाहो शंकरो लोकशंकरः ।
वधार्थं रावणादीनां जातो रघुकुले शुभे ।
ते सुरा वानरा जाता ह्यागमिष्यन्ति सप्रति ॥
तैः सार्धमङ्ग नगरीं राक्षसेन्द्रस्य दुर्मतेः ।
लङ्कां गन्तासि धर्मात्मन्हनिष्यसि निशाचरम् ॥
इत्युक्तो मुनिना तेन मतङ्गेन महात्मना ।
रामो धर्मविदां श्रेष्ठो मुमोद च ननाम च ॥
पुनः प्रोवाच धर्मात्मा रामचन्द्रो महामनाः ।
मतङ्ग मुनिशार्दूल कृतकृत्योऽसि सप्रति ॥
केयं ब्रह्मशिला प्रोक्ता देवगन्धर्वसेविता ।
ब्रूहि तां मुनिशार्दूल यत्तन्मुख्यस्थलं शुभम् ॥
मतङ्ग उवाच ।
ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः ।
गन्धर्वा लोकपालाश्च स्नान्ति नद्यां शुभव्रताः ॥
शिलामारुह्य सर्वेऽहं विरूपाक्षस्य पार्श्वतः ।
जपध्यानपरा नित्यमासते ब्रह्मवित्तमाः ॥
दक्षिणे पूर्वदिग्भागे पश्चिमे रघुनन्दन ।
या शिला सुभगा प्रोक्ता सा वै ब्रह्मशिला स्मृता ॥
तस्यां स्थित्वा जपं चक्रुर्दिव्यमन्त्रविदः सुराः ।
माघमासे विशेषेण स्नात्वा तत्रोपविष्टिताः ॥
गायत्र्यादिमहामन्त्रैर्जपं कुर्वन्ति ते सुराः ॥
तस्माद्ब्रह्मशिला प्रोक्ता ब्रह्मानुष्ठानतो नृप ।
ये कुर्वन्ति जपं दानं तेषां लोकस्तु शाश्वतः ॥
ये नराः पुण्यकर्माणो ह्यत्र मज्जन्ति नित्यशः ।
तेषां लोकास्तु चातुरस्य देवगन्धर्वसेविताः ॥
विख्यातं त्रिषु लोकेषु विरूपाक्षस्य पश्चिमे ।
वसिष्ठस्याश्रमं विद्धि सर्वपापप्रणाशनम् ॥
तपः कुर्वन्ति मुनयो मनव ऋषयस्तथा ।
वसिष्ठस्याश्रमे पुण्ये सर्वपापविवर्जिते ॥
पुरतः पूर्वदिग्भागे कोटिशंकरसंज्ञिते ।
ये मज्जन्ति नरश्रेष्ठास्तेषां लोकः कपर्दिनः ॥
स्थापनात्कोटिलिङ्गानां दैवतैर्देववल्लभ ।
कोटिशंकरनाम्ना तत्ख्यातं पृथिवीतले ॥
तत्र कुर्वन्ति मुनयो जपं परमपावनम् ।
अद्यापि राघवश्रेष्ठ रूपद्भिरभिगूहिते ॥
तत्र देवास्त्रयस्त्रिंशत्कोटिलिङ्गप्रपूजनात् ।
शाश्वतं परमं स्थानं जग्मुस्ते भरतर्षभ ॥
अत्र मज्जन्ति मुनयो मानवा मनुजेश्वर ।
सिद्धयोगे पुण्यदिने माघमासे विशेषतः ॥
कोटिशंकरविख्यातं लिङ्गं परमपावनम् ।
नत्वा स्पृष्ट्वा दिवं याति पापवानपि राघव ॥
अभिषेकादिनैवेद्यैः शंकरं यः प्रपूजयेत् ।
स मुक्तः सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
यः स्नाति दिनमेकं तु शंकरस्य च संनिधौ ।
स कोटिकुलसंयुक्तः शिवलोके महीयते ॥
तस्माद्वै पूर्वदिग्भागे क्रोशमात्रं तु राघव ।
कपिलस्याश्रमं विद्धि सर्वपापप्रणाशनम् ॥
शंकरं तु विरूपाक्षं कपिलेश्वरमव्ययम् ।
त्रिकालं पूजनं कुर्वंस्तिष्ठामि रघुनन्दन ॥
तस्य पूजाप्रभावेन त्वामहं दृष्टवान्किल ।
कृतकृत्योऽस्मि भद्रं ते मां पालय रघूत्तम ॥
संसारविषवृक्षस्तु महारूढो दुरत्ययः ।
छेत्तुमर्हसि तं राम स्वस्ति स्यात्तु नमोऽस्तु ते ॥
एवमुक्त्वा मुनिवरस्तूष्णीमास्ते रघूत्तमम् ।
कृताञ्जलिपुटो धीमानानन्दाश्रुपरिप्लुतः ॥
रामोऽपि तं नमस्कृत्य वचनं चेदमब्रवीत् ।
मतङ्ग मुनिशार्दूल तथास्तु तव भाषितम् ।
कृपया तव धर्मात्मन्हनिष्ये राक्षसेश्वरम् ॥
तुङ्गास्नानफलाद्विद्वन्विरूपाक्षस्य दर्शनात् ।
मनःप्रसादमगमत्पापाच्च परिमोचितः ।
स्वस्ति तेऽस्तु गमिष्यामि किष्किन्धां नगरीं शुभाम् ॥
इत्युक्त्वा तं नमस्कृत्य प्रययौ रघुनन्दनः ।
तस्मात्त्वमपि तां पम्पां गन्तुमर्हसि सुव्रत ॥
तुङ्गास्नाने विरूपाक्षे धर्मज्ञे कोटिशंकरे ।
मतिं कुरु महाराज महापातकनाशिने ॥
सर्वत्र सुलभा तुङ्गा त्रिस्थानेषु तु दुर्लभा ।

°त्वजात् ) — ( L. 5954 ) G1 : G(ed.) प्राप्त ( for °व्याप्त ) D1 यास्यामहे ( for याचा° ) — ( L. 5957 ) D1 मूर्तेय कोटिश शुभा ( for ° ) — ( L. 5967 ) G(ed.) °गामिनाम् ( for °वासि° ) — After line 5969, D1 ins

221** आगमिष्यति रामोऽयं विष्णवंशो लोकपालकः ॥

— ( L. 5975 ) D1 हृष्टाः सुरगणाः सर्वे ( for ° ) G1 G(ed.) यथागतम् ( for °सुखम् ) — G1 om the ref. — ( L. 5995 ) G3 भूसुराः , M1 ते नराः ( for ते सुराः ) — ( L. 6001 ) D1 शिवार्जितम् ( for प्रणाशनम् ) — M1 om lines 6006–6008 — ( L. 6007 ) G2 पृथिवीतले ( for °तले ) — ( L. 6008 ) G1 तत्र परममास्थिताः ( for ° ) — ( L. 6015 ) G1 दृष्ट्वा ( for स्पृष्ट्वा ) — ( L. 6019 ) M1 स्वर्गे ( for शिव° ) — ( L. 6025 ) G1 श्रीराम करुणानिधे ( for ° ) — G3 om lines 6038–6040. D1 om. lines 6044–6045. M1 om lines

मार्कण्डेये गुहारण्ये विरूपाक्षे विशेषतः ॥
दुर्लभं सर्वलोकानां विरूपाक्षस्य दर्शनम् ।
कथंचिद्दर्शनं लब्ध्वा सर्वपापैः प्रमुच्यते ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
सकृत्तुङ्गाम्भसि स्नात्वा नरः पापैः प्रमुच्यते ॥
पिबेच्च कणमात्रं तु तुङ्गाम्भः सोऽपि मानवः ।
ज्ञानाज्ञानकृतैः पापैर्मुक्तो नाकं समश्नुते ॥
य इदं पुण्यमाख्यानं शृणुयादपि मानवः ।
सोऽपि पापविनिर्मुक्तस्तुङ्गास्नानफलं लभेत् ॥

Colophon

युधिष्ठिर उवाच ।

राजाज्ञां शिरसा कृत्वा रामो धर्मभृतां वरः ।
कं देशं समनुप्राप्तः पुण्यं परमपावनम् ॥
तन्मे कथय तत्त्वेन गङ्गासुत नमोऽस्तु ते ।
यस्मात्कीर्तिश्रवात्सद्यो नरः पापैः प्रमुच्यते ॥

भीष्म उवाच ।

शृणु पार्थ प्रवक्ष्यामि श्रोतॄणामघनाशनम् ॥
रामस्य चरितं पुण्यं सर्वमङ्गलदायकम् ॥
सीतामन्वेष्टुकामोऽसौ रामो रघुकुलोत्तमः ।
यं पुण्यदेशं संप्राप्तस्तं ब्रवीमि हि तेऽधुना ॥
मौगलं वेङ्कटाद्रिं च श्रीशैलमथ शाश्वतम् ।
काञ्चीं तु कामदां राजंश्चचार रघुसत्तमः ॥
तत्र तत्र च राजेन्द्र दानं ब्राह्मणतर्पणम् ।
गोभूतिलहिरण्यादि कन्यादानशतानि च ।
दत्त्वा तद्देशजान्विप्रान्स्थापयामास सात्त्विकान् ॥
मौगलं नारसिंहं च गत्वा रामः प्रतापवान् ।
नमस्कृत्वा नारसिंहमस्तौषीत्कमलापतिम् ॥
गोविन्द केशव जनार्दन वासुदेव
विश्वेश विश्व मधुसूदन विश्वरूप ।
श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष
नारायणाच्युत नृसिंह नमो नमस्ते ॥
देवाः समस्ताः खलु योगिमुख्या
गन्धर्वविद्याधरकिंनराश्च ।
यत्पादमूलं सततं नमन्ति
तं नारसिंहं शरणं गतोऽस्मि ॥
वेदान्समस्तान्खलु शास्त्रगर्भान्
विद्याबलं कीर्तिमतीं च लक्ष्मीम् ।
यस्य प्रसादात्पुरुषा लभन्ते
तं नारसिंहं शरणं गतोऽस्मि ॥
ब्रह्मा शिवस्त्वं पुरुषोत्तमश्च
नारायणोऽसौ मरुतां पतिश्च ।
चन्द्रार्कवाय्वग्नियमरुद्गणाश्च
त्वमेव तं त्वां सततं नतोऽस्मि ॥
स्रष्टा च नित्यं जगतामशेषः
त्राता च हन्ता विभुरप्रमेयः ।
एकस्त्वमेव त्रिविधा विभिन्नः
त्वत्त्वां नृसिंहं सततं नतोऽस्मि ॥
इति स्तुत्वा रघुश्रेष्ठः पूजयामास तं हरिम् ।
पुष्पवृष्टिः पपाताशु तस्य देवस्य मूर्धनि ।
साधु साध्विति तं मूयुर्देवा ऋषिगणैः सह ॥
राघवेण कृतं स्तोत्रं पीत्वामृतमनुत्तमम् ।
पठन्ति ये द्विजवरास्तेषां स्वर्गस्तु शाश्वतः ।
इत्युक्त्वा प्रययुः सर्वे देवा ऋषिगणैः सह ॥
रामोऽपि तत्र वै तिष्ठन्मुनिं नत्वाथ गालवम् ।
कृताञ्जलिपुटो राजन्प्रोवाचेदं महामतिः ॥
सर्वज्ञस्त्वं मुनिशार्दूल सर्वं वेत्ति भवान्खलु ।
नारसिंहस्य देवस्य माहात्म्यं वक्तुमर्हसि ॥
यदि ते मयि चेत्प्रीतिरस्ति मे तद्वदस्व ह ।
क्षेत्रस्यास्य द्विजश्रेष्ठ तीर्थस्यास्य च वैभवम् ॥

गालव उवाच ।

आश्चर्यं राघवश्रेष्ठ त्वत्कृतं पूर्वजन्मनि ।
त्वमेव वेत्सि तत्सर्वं न हि विन्दामहे वयम् ।
तथापि शृणु वक्ष्यामि स्वाज्ञया तव सुव्रत ॥

---

6047–6048.

Colophon. — *Sub-parvan* : D1 G1 आश्चर्यपर्वणि शेषधर्मः; G2 M1 G(ed.) शेषधर्मः. — *Adhy. name* : D1 संग्रहः; G1 तुङ्गभद्राकोटितकरमाहात्म्यम्. — *Adhy. no.* : D1 G2. 8 M1 45; G(ed.) 46.

G2 राजा ( for युधिष्ठिर ). — ( L. 6050 ) D1 तदाज्ञां ( for राजाज्ञां ). — ( L. 6052 ) D1 G2 M1 तत्त्वतः ( for तत्त्वेन ). — ( L. 6053 ) D1 तत्कीर्तिश्रवणात्सद्यो ( for ° ). D1 G1 पातकैः ( for पापैः ). — ( L. 6055 ) G2 ( *inf. lin.* ) सर्वपापप्रणाशनम् ( for ° ). — ( L. 6058 ) D1 अहोबलं पन्नगाद्रिं; M1 G(ed.) अहोबि( M1 °ब )लं वेङ्कटाद्रिं ( for ° ) G(ed.) श्रीशैलमथ नेश्वरम् ( for ° ). — ( L. 6060 ) G1 स्नानं ( for दानं ). ° — M1 om. line 6063. — ( L. 6063 ) G2 G(ed.) अहोबि( G2 °ब )लं नारसिंहं ( for ° ). — Before line 6065, D1 ins. श्रीरामः. — ( L. 6072 ) D1 G1 प्रपद्ये ( for गतोऽस्मि ). — ( L. 6074 ) G2 आयुर्दिशां कीर्तिमतीं च लक्ष्मीम्. — After line 6076, D1 ins. :

232** [illegible]
[illegible]
[illegible]
[illegible] ॥

— ( L. 6080 ) G1 M1 [illegible] ( for [illegible] ). — ( L. 6081 ) G1 M1 [illegible] ( for [illegible] ) G(ed.) [illegible]. — ( L. 6083 ) G(ed.) [illegible]. — ( L. 6084 ) D1 M1 [illegible]; G1 [illegible]; G(ed.) [illegible] ( for [illegible] ). — M1 om. ( lacuna ) lines

पुरा योगीश्वरो राम नारसिंहो जगन्मयः ।
हिरण्यनिधनं कृत्वा ह्यत्र प्रत्यक्षतां गतः ॥
देवदेवो जगन्नाथः प्रणतार्तिप्रणाशनः ।
दिक्पालैर्देववृन्दैश्च सदा समेव्यतेऽत्र वै ॥
पदा स्पृशन्ति ये राम भुवमत्र प्रयत्नतः ।
विमुक्ताः सर्वपापेभ्यः प्रयान्ति हरिमन्दिरम् ॥
भवनाशीति विख्याता गङ्गा पापप्रणाशिनी ।
सुप्रसन्ना च लोकानां पापिनां मुक्तिदायिनी ॥
अत्र देवाश्चर्षयश्चशश्वत्सदा तिष्ठन्ति राघव ।
चिन्तयन्तः सदा देवं नारसिंहं जगन्मयम् ॥
अयमेव हरिः साक्षाद्वामनत्वमुपागतः ।
बलिनिग्रहणं कृत्वा दिवं प्रादाद्दिवौजसे ॥
राज्ञां तु दुर्विनीतानां निधनाय सुरोत्तमः ।
जमदग्निसुतो भूत्वा कार्तवीर्यं तथाहनत् ॥
स एव त्वं हि रामोऽभूरिक्ष्वाकूणां शिरोमणिः ।
पौलस्त्यस्य वदन्ति त्वां हन्तारं लोकवैरिणः ॥
अप्रमेयमनालोक्यमचिन्त्यं भक्तवत्सलम् ।
सर्वज्ञं त्वां विदुर्देवाः सप्रत्यत्र महावने ॥
देवान्पश्य रघुश्रेष्ठ त्वदालोकनतत्परान् ।
दिविस्थांस्तुवतस्त्वां तु हन्तारं लोकवैरिणः ॥
त्वं तु वै द्वापरस्यान्ते यदुवंशे कृतोदयः ।
कृष्णो विश्रुतकर्मा त्वं भविष्यसि न संशयः ।
एवं वदन्ति विबुधास्त्वामकं सर्वभूतगम् ॥
त्वामाराध्य चिरं कालमत्र पर्वतमूर्धनि ।
ऋषयो ब्राह्मणाश्चैव त्वत्पादं ते प्रपदिरे ॥
अत्र व्याघ्रा मृगगणाः पशुपक्षिद्रुमादयः ।
व्याधा वनचरा राम तान्वादि सुरपुंगवान् ।
सेवन्ते मुक्तिकामास्ते त्वत्पादकमलं शुभम् ॥
पुरा संचितपुण्यानां सुखदं सूर्यवंशज ।
पापेप्सूनां भयकरं स्थानमस्य विभोर्हरेः ॥

भीष्म उवाच ।

इति श्रुत्वा रघुश्रेष्ठो नाकं तं प्रणम्य च ।
नारसिंहं नमस्कृत्य प्रययौ च श्रियोऽचलम् ॥
धर्मराज त्वमेवाशु गत्वा विगतकल्मषः ।
नारसिंहप्रसादेन सर्वान्कामानवाप्स्यसि ॥
श्रीवल्लशमहो गत्वा पतितोऽपि विमुच्यते ।
त्रिरात्रमुषितानां तु किं पुनः पुण्यवैभवम् ॥
यस्त्वेतच्छृणुयान्नित्यं नारसिंहस्य वैभवम् ।
स मुक्तः सर्वपापेभ्यो ब्रह्मलोकं व्रजेद्ध्रुवम् ॥

युधिष्ठिर उवाच ।

श्रीशैलशिखरे रामो राजपुत्रो महामतिः ।
देवं पिनाकिनं नत्वा ततः किमकरोत्प्रभुः ।
वद देवव्रत त्वं मे भूतनाथस्य वैभवम् ॥

भीष्म उवाच ।

देवदेवो विरूपाक्षो नीलकण्ठो महाद्युतिः ।
श्रीशैलाख्ये गिरिवरे सर्वकालं प्रवर्तते ॥
श्रीशैलेन्द्रं प्रविष्टानां नराणां पापिनामपि ।
नास्ति नास्ति पुनर्जन्म नारदेन प्रभाषितम् ॥
स्थानानि भुवि देवस्य विख्यातानि महीतले ।
कैलासो हिमशैलश्च सुन्दरे जाह्नवीतटे ॥
विश्वेश्वरो विरूपाक्षो महाकालो महामते ।
श्रीशैलश्चैकचूतश्च मार्कण्डेयो महामते ।
एतानि बहुमुख्यानि स्थानानि खरवैरिणः ॥
तत्र तत्र महादेवं प्रसन्नं भक्तवत्सलम् ।
नत्वा नरः पापकृतो विमुक्तो दिवमश्नुते ।
कैलासे श्रीगिरौ देवः प्रसन्नः सन्ततं गतः ॥
तत्र वै देवतानां च मनुष्याणामथात्र च ।
सदा प्रसन्नो देवेशः पार्वतीरमणः प्रभुः ।
गतानामत्र वै मुक्तिं ददाति भुवनेश्वरः ॥
श्रीशैलशिखरे दृष्टे मनुजैः पापकर्मभिः ।
छित्त्वा सर्वाणि पापानि तेषां मुक्तिं ददाति च ॥
एकयामं द्वियामं वा त्रियामं वा वसन्ति ये ।
नास्ति नास्ति पुनर्जन्म साक्षात्कृष्णेन भाषितम् ॥
एकरात्रोषितानां तु पितृमातृकुलानि च ।

6098-6090, — (L. 6095) M1 वन्दस्व मे, G(ed) वन्दभुना (for वदस्व मे) —(L. 6101) G(ed.) हिरण्यकं तु हत्वा (for °) —(L. 6106) G1 G(ed.) गङ्गा सौम्यगुणा शुभा (for °) —(L. 6107) D1 M1 अत्र प्रसन्ना लोका (M1 देवा) नां, G1 अत्र स्थितानां लोकानां (for °) — G(ed) om. lines 6108-6109 —(L. 6111) G1 स बलिनिग्रहं कृत्वा (for °) —(L. 6114) D1 M1 स एव रामाभिरामोऽभूद् (for °) —(L. 6115) G1 हन्ता पुरि च रावणम् (for °) —(L. 6119) D1 दिविस्थानस्तुवतस्त्वां (for °) — D1 om line 6120 —(L. 6120) G1 M1 यदुवंशे कृतोदये (for °) —(L. 6122) D1 त्वामेव सर्वगं मुरा (for °) —(L. 6125) G1 महासत्त्वा, G(ed) मृगेन्द्राश्च (for मृगगणा°) G1 M1 मृगादयः (for द्रुमा°) —(L. 6127) D1 दिव्यं सच्चय देवता (for °) —(L. 6129) D1 G1 M1 पापे प्सूनां (for °प्सूनां) D1 G1 M1 स्थानं दुर्निरीक्षणम् (for °) —(L. 6131) D1 प्रययौ पार्वतीपतिम् (for °) —(L. 6132) D1 तस्मात्त्वमपि राजेन्द्र (for °) — After line 6133, G1 ins.

223** सर्वपापसमोऽपि पतितोऽपि विमुच्यते ।

—(L. 6134) G1 G(ed) अहोबलम् (for श्रीवल्लभम्) D1 अहोबिले पुनीत (for °) —(L. 6136) D1 G1 M1 ध्रुवं (for नित्यं) — After line 6136 D1 ins. an add. colophon mentioning sub-parvan as आनन्दपर्व(?) देवस्य adhy. name as अहोबलमाहात्म्यम् and adhy. no. as 45. —(L. 6143) G1 M1 श्रीशैले च (for °शैलेन्द्रं) —(L. 6149) D1 चैकरथ; चकचूतश्च (for चैक°) —(L. 6149) D1 G(ed.)

सिद्धा बन्धुजनाश्चैव प्राप्नुवन्ति हि सत्पदम् ॥
तत्रागत रघुवर ज्ञात्वा तत्र महर्षय ।
द्रष्टुकामास्तथा जग्मुर्नारायणमरिंदमम् ॥
जामदग्न्यस्तथा रामो भृगुश्च्यवनभार्गवौ ।
सत्यजित्सत्यकीर्तिश्च शतानन्दो दृढव्रत ।
शङ्खो यमश्च सन्मेधा कपर्दी चाथ कङ्कण ॥
एते चान्ये च बहवो मुनय संशितव्रता ।
राम दृष्ट्वा मुदं जग्मुरतुला रघुनन्दनम् ॥
राम सपूज्य तान्सर्वानर्घ्यपाद्यैररिंदम ।
नमस्कृत्य च तानाह प्राञ्जलिर्मुनिपुंगवान् ॥
कुशल वो मुनिगणा धन्यो व पादसेवया ।
श्रीशैलेशो मया दृष्ट पूजितश्च विशेषत ।
अत्र किं करणीय मे तद्वदन्तु महर्षय ॥
तेऽपि राम पुरस्कृत्य जामदग्न्य बहुश्रुतम् ।
चिरजीवी भवेत्युचुर्जामदग्न्यस्ततोऽब्रवत् ॥
रामाभिराम भगवन्हिताय जगतां विभो ।
कृतावतारो भवता लोके खलु सुदुर्लभ ॥
पाहि लोकानृषिगणान्राक्षसाञ्जहि राघव ।
त्वद्दर्शनात्सुतप्त मे तपस्तेषा महात्मनाम् ॥
दातव्यमत्र भवता ब्राह्मणेभ्यो धन बहु ।
अन्नपानीयदानानि कर्तव्यानि महामते ॥
अत्रैव दानात्पितरस्तु सर्वे
तृप्ता दिव यान्ति सुशोभमाना ।
गन्धर्वमुख्यैरुपसेव्यमाना
स्तथा समस्तैर्मुनिवर्यसंघै ॥
गीतानि देवा सतत गृणन्ति
कदा नु शैलेशमह व्रजामि ।
प्रत्येकमित्येवमुमापतिं त
भजन्ति नित्य परिपूर्णचित्ता ॥
कुर्वन्ति दानानि महत्सु सेवा
तीर्थेषु मज्जन्ति शुभ वदन्ति ।
ये चापि पूर्वं कृतिनो महान्त
स्तैरेव वन्द्य सतत गिरीश ॥
सुरेन्द्र पूर्वदिग्भागे स्थित्वा देवगणै सह ।
पूजा करोति यत्नेन मुक्त्यर्थं रघुनन्दन ॥
दक्षिणस्या दिशि यमस्तिष्ठन्पितृगणै सह ।
श्रीशैलेश महाभक्त्या स्तौति प्रीतो रघूत्तम ॥
प्रचेता पश्चिमद्वारे तिष्ठञ्श्रीशैलवासिनम् ।
पाहि मा पार्वतीकान्तेत्येव स्तौति पुन पुन ॥
यक्षराडुत्तरे भागे सदा क्रीडति शंभुना ।
तस्य दिव्या तनु पश्यन्स्तुवन्ह्यव्यपन्स्तुवन् ॥
मध्य तेषा सुराणा तु सिद्धानां साध्यरक्षसाम् ।
कदम्बे पूरिते स्थाने स्थातुमन्यैर्न शक्यते ।
भूलोकस्य तु सेवार्थं दत्त त्रिदिवस किल ॥
श्रुत्वैव राघवश्रेष्ठो जामदग्न्यात्सरूद्वह ।
दत्त्वा दानानि विधिवद्दक्षिणद्वारतो ययौ ॥
श्रीशैल गच्छति पुमान्यो वा को वा नृपोत्तम ।
तस्यैव वंशजा सर्वे मुक्ता एव न सशय ॥
य इद पुण्यमाख्यान नारदेन प्रभाषितम् ।
शृणोति सतत भक्त्या शिवसायुज्यमश्नुते ॥

Colophon

युधिष्ठिर उवाच ।

देवव्रत महाबुद्धे सुरसिन्धुसुत प्रभो ।
श्रीनिवासस्य माहात्म्य वद नो वदतां वर ॥
वैकुण्ठवासी लोकेशो विष्णु सर्वगत प्रभु ।
कथ प्राप्तो वृषगिरिं तन्मे त्व कृपया वद ॥

भीष्म उवाच ।

पुरा वै नारद श्रीमान्ब्रह्मपुत्रो महाद्युति ।
हरिं द्रष्टुमनास्तात वैकुण्ठ समुपागत ॥
तत्र दृष्ट्वा हरिं पार्थ क्षीरोदस्योपकण्ठत ।
आयान्त ऋषयो दृष्ट्वा मुदमापुश्च नारदम् ।
अगस्त्यप्रमुखा सर्वे पाराशर्यपदानुगा ॥
अनुज्ञातो मुनिगणै पाराशर्यो महाद्युति ।
व्यासो वचनमक्लीब नारद प्रत्युवाच ह ॥
कृतकृत्या मुने ब्रह्मस्त्वमेको जगतीतले ।
विष्णुभक्तोऽसि नान्योऽस्ति सदा कीर्तयसे यत ॥
अहो खलु मनुष्याणा मोक्षदो विष्णुरव्यय ।
स त्वया सेवितो नित्य कृतकृत्यो भवानत ॥
स्रष्टा पालयिता हन्ता एक एव जनार्दन ।
स त्वया पूजितो नित्य तस्मात्त्वलु कृती भवान् ॥
योऽनन्त सर्वभूतानां सेतुभूतो जगन्मय ।

सुवि ( for बहु ) —( L 6155 ) G(ed ) नतानाम् ( for ग° ) —( L 6158 ) D1 G2 M1 वसतस्तत्र भूपते ( for ° ) —( L 6161 ) D1 G(ed ) स्निग्धा ( for सिद्धा ) M1 सुस्निग्धा बन्धुजाश्चैव ( for ° ) —( L 6162 ) D1 महत्स्थलम् ( for महर्षय ) —( L 6165 ) D1 M1 वृतव्रत , G2 [उ]त्तमव्रत , G(ed ) च शुभा ( for दृढव्रत ) —( L 6168 ) G2 G(ed ) अतुलां कुरुनन्दन ( for ° ) — Before line 6171, M1 ins श्रीराम° —( L 6172 ) D1 श्रीशैलोऽसौ ( for °लेशो ) —( L 6175 ) D1 M1 स्थिरजीवी , G2 स्थिरवीर ( for चिरजीवी ) D1 ऽवदीत् ( for ऽब्रवत् ) — Before line 6176, D1 ins. जामदग्न्य° —( L 6189 ) G2 चित्तम् ( for °चित्ता ) —( L 6190 ) D1 देवास ( for सेवा ) —( L 6198 ) D1 °वासकम् ( for °वासिनम् ) —( L 6207 ) G2 [अ]पि मानव ( for नृपोत्तम ) —( L 6210 ) सालोक्यम् ( for सायुज्यम् )

COLOPHON — *Sub-parvan* D1 G2 आश्वमेधिकपर्वणि देव°. — *Adhy name* G(ed ) श्रीशैलधर्मो , G2 G(ed ) °धर्मो — *Adhy no* D1 G(ed ) 47 , G2 45 माहात्म्यम् — G2 om. the ref —( L 6211 ) G(ed.) महाभाग ( for

संसारपाशविच्छेदी स त्वया पूजितो हरिः ॥
एते वयं मुनिश्रेष्ठ द्रष्टुकामा जनार्दनम् ।
तन्निवेशितचित्ता हि प्राप्ता परमधार्मिका ॥
ईदृशं वचनं श्रुत्वा व्यासस्य जगतीपते ।
प्रोवाच नारदो धीमान्नागमी वेदविदां वर ॥
कृतकृत्योऽस्मि भद्रं वो यूयं भूतहिते रताः ।
शाश्वैर्धर्मैः सदा लोकान्भक्त्या रक्षितुमिच्छथ ॥
वैकुण्ठलोके संभूता वार्ता परमपावना ।
अश्रावि सा मया सन्तो वक्ष्ये शृण्वन्तु तां शुभाम् ॥
मायावी परमानन्दस्त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणी तीरे रमया सह मोदते ॥
इत्यद्भुतमिदं वाक्यं श्रुत्वा सेन्द्रा मरुद्गणाः ।
तत्र सेवितुमुद्युक्ता गन्ताऽहं च जगद्गुरुम् ॥
किं करिष्यथ विप्रेन्द्रा दर्शनं ह्यत्र दुर्लभम् ।
तस्मात्तत्र गमिष्याम इत्युक्त्वा खं समारुहत् ॥
अगस्त्यप्रमुखाः सर्वे ऋषयश्च तपोधनाः ।
जग्मुस्ते व्योममार्गेण यत्र धर्मगिरौ हरिः ॥
स्वामिपुष्करिणीतीरं गत्वा ते ऋषयः सुराः ।
स्नात्वा पीत्वा शुभं तोयं हरिं द्रष्टुं विचेरतुः ॥
पश्चिमं भागमासाद्य मुनयो विष्णुतत्पराः ।
तत्रापश्यन्महाभूतं मेरुमन्दरसंनिभम् ॥
सहस्रादित्यसंकाशं विद्युच्चञ्चललोचनम् ।
सर्वायुधधरं देवं दृष्ट्वा विस्मयमागताः ॥
दक्षिणां दिशमाजग्मुः स्वामिपुष्करिणीतटात् ।
तत्रासुरान्दानवादीन्राक्षसान्पिशिताशनान् ॥
ध्यायन्तश्च जपन्तश्च नमस्यन्तश्च तान्बहून् ।
दृष्ट्वा विस्मयमापन्नाः पूर्वां दिशमुपाययुः ॥
तत्रासीनं देवपतिं त्रिदशैरुपसेवितम् ।
यक्षकिंनरकिंपुरुषचारणाद्यैरभिष्टुतम् ॥
सिद्धगन्धर्वदेवार्यैर्ऋषिभिश्चाप्सरागणैः ।
स्तूयमानं हरिं साक्षाच्छ्रीनिवासं जगद्गुरुम् ॥
कदा द्रक्ष्यामि तद्रूपं योगिनामपि दुर्लभम् ।
कदा मे जन्मसाफल्यं भविष्यति सुरार्चितम् ॥

देहि मे दर्शनं देव प्रणतार्तिप्रणाशन ।
त्वं गतिः सर्वभूतानां देवानामपि मोक्षदः ।
पाहि पाहि जगन्नाथ भूयो भूयो नमोऽस्तु ते ॥
इति स्तुवन्त देवेशं देवराजं पुरंदरम् ।
वेङ्कटाद्रेः पुरोभागे स्वामिपुष्करिणीतटे ।
देवताभिः समासीनं ध्यायन्तं पुरुषोत्तमम् ॥
तं दृष्ट्वा विस्मिताः सर्वे ह्यगस्त्यप्रमुखा द्विजाः ।
कौबेरीं दिशमाजग्मुर्द्रष्टुकामा जनार्दनम् ॥
तत्रापश्यन्द्विजवरान्सप्तद्वीपनिवासिनः ।
राज्ञो मुनिगणांश्चैव भूसुरान्वेदवादिनः ॥
भूलोकवासिनश्चैव मनुजान्मनुजेश्वर ।
मुदमापुर्महात्मानो मुनयः शुद्धबुद्धयः ॥
स्तुवन्ति नृत्यन्ति नमन्ति केचि-
दानन्दजाश्रूणि सृजन्ति केचित् ।
आप्लुत्य चाप्लुत्य वदन्ति केचि-
द्धरे मुरारे पुरुषोत्तमेति ।
लुण्ठन्ति केचित्परिरम्भयन्ति
तूष्णीं तु तिष्ठन्ति हसन्ति केचित् ॥
ध्यायन्ति केचित्कलशं वहन्ति
पूर्णं मुरारेरभिषेकहेतोः ।
पुष्पाणि सौरभ्ययुतानि गन्धं
कर्पूरकस्तूरिसमन्वन्ति ॥
आदाय सर्वे वृषभाद्रिनाथं
ते मार्गमाणा विचरन्ति तत्र ॥
एवं स्तुवेषु देवेषु ऋषिगन्धर्वकोटिषु ।
पुष्पवृष्टिः पपाताशु पर्वतोपरि सर्वतः ॥
भेरीमृदङ्गपटहैर्निःसाणाद्यैश्च डिण्डिमैः ।
शङ्खकाहळस्वनैः संकुलं समजायत ॥
तस्मिन्नवसरे विष्णुः प्रादुरासीत्सरित्तटे ।
मेरुमन्दरसंकाशैर्जाम्बूनदपरिष्कृतैः ।
नानारत्नचितैर्दिव्यैर्विमानैरुपशोभितः ॥
कोटिसूर्यप्रतीकाशश्चन्द्रकोटिसुशीतलः ।
स्वर्लोकाद्भूमिपर्यन्तं प्रादुरासीच्छ्रियः पतिः ॥

---

°बुद्धे ) — ( L. 6213 ) G(ed) देवेशो ( for लोकेशो ) — ( L. 6221 ) G3 वाचा ( for व्यासो ) — Before line 6222, D1 ins व्यास — G3 om lines 6227 6228. — ( L. 6227 ) M1 सेवितो ( for पूजितो ) — ( L. 6240 ) G(ed) [अ]द्भुत समं ( for °तमिदं ) — ( L. 6241 ) G2 तत्र स्नातुं समुद्युक्ता ( for ° ) — ( L. 6242 ) D1 G1 M1 अत्र दर्शनदुर्लभः, G(ed) अत्र दुर्लभदर्शना ( for ° ) — ( L. 6251 ) D1 G3 मदृष्ट्वा ( G3 दृष्ट्वा त ) विस्मय गता ( for ° ) — For line 6254 G(ed) subst

224** नमस्यतो ध्यायतश्च जपतश्चापि तान्बहून् ॥

— ( L. 6257 ) Hypermetric G(ed) -गन्धर्व ( for किंपुरुष ) — ( L. 6258 ) G(ed.) सिद्धकिंपुरुषाद्यैश्च ( for ° ) — ( L. 6259 ) G(ed) जगत्पतिम् ( for जगद्गुरुम् ) — ( L. 6263 ) G(ed) मोक्षद ( for °द ) — ( L. 6271 ) M1 -पारगान् ( for -वादिनः ) — ( L. 6273 ) G3 मुनय शुभदर्शना ( for ° ). — ( L. 6276 ) G1 उत्फुल्य चोत्फुल्य ( for आप्लुत्य चाप्लुत्य ) G(ed.) नदन्ति ( for व° ) — After line 6276, G(ed) ins :

225** गायन्ति गीतं परितो महान्तः

— After the above, G(ed) reads lines 6303 6322. — ( L. 6282 ) G1 गुणानि ( for -युतानि ) G(ed.) गन्धान् ( for गन्धं ) — After line 6285 G1 G(ed.) ins

226** देवा मनुष्या अपि योगिनश्च

G1 cont

227** गायन्ति गीतां महतो महात्मनः ॥

अश्वमेधसहस्रं त्वं कुरु चित्तविशुद्धये ।
अन्यथा निर्मला बुद्धिर्न भविष्यति पद्मज ॥
एतच्छ्रुत्वा चिन्तयानो ब्रह्मा लोकपितामहः ।
न शक्यं कर्तुमेकोऽपि कथमेतदिहाब्रवीत् ॥
पुनश्चोवाच सा वाणी धातारं व्याकुलेन्द्रियम् ।
मेघगम्भीरया वाचा शृणुष्वेति पितामह ॥
गङ्गाया दक्षिणे भागे योजनानां शतद्वये ।
पञ्चयोजनमात्रेण पूर्वाम्भोधेस्तु पश्चिमे ॥
वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिः स्वयम् ।
वरदः सर्वभूतानामद्यापि परिदृश्यते ॥
कर्तव्यस्तत्र वै यज्ञस्त्वया चित्तविशुद्धये ।
सहस्राणां फलं तेऽस्तु ह्येकेन स्थानवैभवात् ॥
श्रुत्वा तत्प्रीतिसंयुक्तो धाता देवगणैः सह ।
गन्तुं मनो दधे ब्रह्मा यज्ञं कर्तुं च सुव्रत ॥
दिक्पालैर्देवगन्धर्वैर्वसुरुद्रादिभिः सह ।
हयमेधं महायज्ञमकरोदृषिभिः सह ॥
हवींषि भुञ्जमानानां पश्यतां मरुतां प्रभुः ।
प्रादुरासीन्महावेद्यामुत्तरस्यां महाद्युतिः ॥
शङ्खचक्रधरः श्रीमान्नीलजीमूतसंनिभः ।
वेदैरुपनिषद्भिश्च मूर्तिमद्भिः प्रसेवितः ॥
इन्द्रादिलोकपालैश्च ब्रह्मादिभिरनेकशः ।
यक्षविद्याधरगणैः किंनरैश्चारणैरपि ॥
नदीनदसहस्रैश्च गङ्गाद्यैरुपसेवितः ।
सप्तसागरपृथ्वीद्यैः सप्तद्वीपनिवासिभिः ॥
ऋषिदेवगणैर्देवः प्रादुरासीन्महाद्युतिः ।
पीताम्बरधरः श्रीमान्विष्णुश्चञ्चललोचनः ॥
कौस्तुभेन विराजन्तं श्रीवत्साङ्कितवक्षसम् ।
नत्वा पुनः पुनर्ब्रह्मा लोककर्ता जगन्मयः ।
अस्तौषीत्कमलाकान्तमपवर्गफलप्रदम् ॥

ब्रह्मोवाच ।

श्रीपते पुण्डरीकाक्ष सर्वलोकहितंकर ।
पाहि मां कमलाकान्त त्वत्पादकमलं गतम् ॥
वरदं सर्वभूतानामीश्वरं पुरुषोत्तमम् ।
नमामि पुण्डरीकाक्षं गरुडासनमव्ययम् ॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
चतुर्बाहुमुदाराङ्गं नमामि कमलापतिम् ॥
येनेदं भुवनं व्याप्तं देवतिर्यङ्नरादिकम् ।
तं वासुदेवममलं प्रणतोऽस्मि जनार्दनम् ॥
नित्यानन्दाय शुद्धाय सूरायानाथपालिने ।
सर्वज्ञाय नमस्तुभ्यं सर्वभूतान्तरात्मने ॥
यज्ञभोक्त्रे नमस्तुभ्यं यज्ञकर्त्रे सुरोत्तम ।
हविर्मन्त्रस्वरूपाय यजमानस्वरूपिणे ॥
देवतिर्यङ्मनुष्याणां जनयित्रे नमोऽस्तु ते ।
पाहि मां देवदेवेश भूयो भूयो नमोऽस्तु ते ॥

भीष्म उवाच ।

इति स्तुवन्तं देवेशं पद्मयोनिमरिंदमम् ।
प्रसन्नवदनो विष्णुर्ब्रह्माणं प्रत्युवाच ह ॥
प्रीतिमानस्मि भद्रं ते स्तोत्रेणानेन पुत्रक ।
हयमेधेन महता भक्त्या विश्राणनेन च ।
त्रिकालमर्चय त्वं मां कृते ह्यस्मिन्युगोत्तमे ॥
त्रेतायां तु गजेन्द्रेण प्रार्थितो मुक्तिकामिना ।
कृतकृत्येन विदुषा भक्तेन तु महात्मना ॥
द्वापरे देवगुरुणा मुनिशापाच्च भीरुणा ।
भक्त्या परमया चैव पूजितो द्वापरं चिरम् ॥
वर्तयिष्ये मुनिगणैः सेन्द्रैः सुरगणैर्वृतः ।
यक्षकिंनरसंघैश्च गन्धर्वैश्चाप्सरोगणैः ॥
कलौ तु पूजितः पूजाद्रव्यैः शेषेण पूजितः ।
मनुजैः पूजनादिभिश्च भूसुरैश्च विशेषतः ।
स्त्रीशूद्रैः पूजितो नित्यं वत्स्यामि कमलासन ॥
इत्युक्त्वा देवदेवोऽसौ तत्रैवान्तरधीयत ।
विस्मयं परमं जग्मुर्देवाः सर्वे दिवि स्थिताः ॥
हयमेधेन विधिना ब्रह्मा लोकपितामहः ।
इष्ट्वा विष्णुक्रमार्गेण ब्राह्मणान्पर्यपूजयत् ॥
अन्नदक्षिणवस्त्राद्यैर्वृत्तिक्षेत्रगृहादिभिः ।
देवानृषिगणांश्चैव पूजयामास भूसुरान् ॥
तस्मिन्नवसरे देवाश्चक्रुश्च विविधान्मखान् ।
वाजपेयादिभिर्यज्ञैरिष्टकाचयनादिभिः ॥
ऋषयो मनवश्चैव लोकपालाः कुरूद्वह ।

—(L. 6342) G(ed) आस्ते चिन्ताकुलेन्द्रिय (for [b]) —(L. 6348) G1 न शक्यं वक्तुमेकोऽपि (for [a]) G(ed.) सहस्रं कथम् अब्रवीत् (for [b]) —(L. 6352) M1 एक (for पञ्च) —(L. 6357) D1 G1 श्रुत्वा प्रीतिसमायुक्तो (for [a]) G(ed) स देवर्षि (for धाता देव) — After line 6358 G(ed) ins

230** तत काञ्चीं समासाद्य सृष्टिकर्ता तु तत्र वै ।

—(L. 6367) D1 M1 नदीनां शतसाहस्रैर् (for [a]), G1 M1 सेविनम् (for °त), —(L. 6369) G1 देवै (for देव). — G1 om. lines 6378 6380 — After line 6379, G1 ins

231** आनन्दं परमं व्याप्तमवतीर्य नरादिकम् ।

—G1 om line 6380 —(L. 6381) G(ed.) अतुलं (for अमलं) —(L. 6383) G1 M1 सर्वभूतान्तरायिने, G1 °तनिवासिने (for [b]) — G1 om the ref. —(L. 6390) G1 सुव्रत, G1 पद्मज (for पुत्रक) —(L. 6391) D1 भक्तो (for महता) —(L. 6392) G1 कृपो ह्यस्मिन्नगोत्तमे (for [b]) —(L. 6397) D1 मुनिवरैर् (for °गणैर्) D1 G1 M1 देवैः सेन्द्रैर् (G1 सोमम् ) (for [b]) — D1 om (hapl) lines 6398–6399 M1 om line 6398 —(L. 6399) G1 M1 पूजितः पूजनाद्यैः (for [a]) G1 कल्पे (for द्रव्यैः) —(L. 6404) G(ed.) यज्ञेन (for विधिना) —(L. 6405) M1 ब्राह्मणान्परिपूजयन् (for [b]) —(L. 6406) G(ed) दक्षिणान्नसुवस्त्राद्यैर् (for [a]) G(ed.)

वसिष्ठो जमदग्निश्च त्रिक कण्वोऽथ गालव ॥
विश्वामित्रो देवरात कथ काश्यपसभव ।
रामो बृहस्पतिर्व्यासो धौम्यो रोमश एव च ॥
कात्यायनो भरद्वाज पुलस्त्य पुलह क्रतु ।
एते चान्ये च बहवश्चक्रुश्च विविधान्मखान् ॥
काञ्चीभुव प्रविष्टाना नास्ति नास्ति पुनर्भव ।
तस्मात्त्व सेव्यसे विप्रै ससारच्छेदलिप्सुभि ॥
जनने मरण नृणा मरणे जन्मसाधनम् ।
तद्वारा कुरुते सद्य काञ्चीनाथोऽद्य सेवया ॥
अत्रैव वरदस्यास्य पादसेनापरा शुभा ।
वेगवतीति विख्याता शारदा कलिदोपहा ॥
तस्या तु मज्जता नृणा वाविभूतिर्भवद्ध्रुवम् ।
आरोग्य पावन तीर्थं जन्मान्तरमलापहम् ॥
कामाक्षीति च विख्याता सर्वलोकेषु भारती ।
मूक वा शास्त्रकर्तार करोति भुवि विश्रुतम् ॥
त्रिपुरारिर्महादेव पार्वतीसहित प्रभु ।
चूतमूले वसन्नृणा सेव्यते दैवतैर्नृभि ॥
काञ्चीनाथ प्रपन्नाना ससारभयनाशनम् ।
एकाम्रनाथसत्राभिर्विद्यावन्तुविवर्धनम् ॥
सवया देवराजस्य नरा पापरता अपि ।
ब्रह्मलोकं प्रयान्त्येव नारदेन प्रभाषितम् ॥
काञ्चीनाथ स्मरेद्यस्तु नमेद्वा तद्दिश प्रति ।
तत्सालोक्य समायाति नारदेन प्रभाषितम् ॥
यस्त्वेतच्छृणुयान्नित्य काञ्चीनाथस्य वैभवम् ।
स कोटिकुलसयुक्तो ब्रह्मलोके सुखं वसेत् ॥

Colophon

युधिष्ठिर उवाच ।

सिंहाद्रिनाथो देवेश साक्षान्नरहरि स्वयम् ।
कथ तत्र वसत्येष औबले चात्र माधव ॥
वेत्थैतत्तु भवानद्य वसुना प्रवरोऽसि मे ।
कथां कथय तत्त्वज्ञ तत्स्थानस्य च वैभवम् ॥

भीष्म उवाच ।

शृणु पार्थ प्रवक्ष्यामि श्रोतृणामघनाशनम् ।
ससारपाशविच्छेद नारसिंहस्य कीर्तनम् ॥
सिंहाद्रिनाथस्य कथा सर्वमङ्गलदायिनीम् ।
द्विजो वा पतितो वापि श्रुत्वा पापै प्रमुच्यते ॥
स एव भगवान्विष्णुर्यज्ञमूर्ति शिव प्रभु ।
ब्रह्मा रुद्र शची चार्क शचीपतिपुरोहित ॥
देवराजो रवि सूनुर्वरुणो धनपालक ।
स एको बहुधा भूत्वा पालयत्यखिलं जगत् ॥
पुरा दैत्यवध कृत्वा नारसिंहो जगत्पति ।
देवैरभिष्टुतो भीतैर्दिव्य योगमपागमत् ॥
औबलाख्ये गिरिवरे दिव्यरूपी भयकर ।
स वाममकरोद्धीमानेक एव जगन्मय ॥
योगारूढ तमालोक्य नितरामुज्ज्वल हरिम् ।
मरुतो मरुता नाथ तुष्टुवुर्जगतीपतिम् ॥

देवा ऊचु ।

श्रीपते पुण्डरीकाक्ष पुराणपुरुषोत्तम ।
नारसिंह जगद्योन वेदराशे नमोऽस्तु ते ॥
लोकनाथ नमस्तेऽस्तु मायिने जलशायिने ।
सर्वलोकस्य कर्त्रे च पालकाय नमोऽस्तु ते ॥
सहस्रे मान्ते तुभ्य सुयज्ञफलदायिने ।
निर्गुणाय नमस्तुभ्य योगरूपिन्सुरेश्वर ॥
पाहि त्वमागतीनाथ स्वपादकमल भवान् ।
त्व पिता सर्वलोकानामस्माक तु विशेषत ॥
नानामोहसमायुक्तानाधिवासुनिपीडितान् ।
पाहि नश्चिदशाधीश भूयो भूयो नमोऽस्तु ते ॥

भीष्म उवाच ।

नारसिंह स्तुतो देवैरिति नरा पुन पुन ।
प्राह तान्त्रिदशाधीश प्रसन्नो भक्तवत्सल ॥

भगवानुवाच ।

किमर्थं प्रार्थ्यते देवैर्मदाश्रयसमन्वितै ।

---

-समाविभि (for गृहादिभि) —(L. 6410) M1 मानवाद् (for मननरा) —(L. 6412) G2 शुक M1 त्रित, G(ed.) [अ]सित (for त्रिक) —(L. 6413) G2 रैभ्यो (for धौम्यो) —(L. 6416) G1 काञ्चीपुर, M1 °पुर (for °भुवं) G1 काञ्चीभुव प्रतिष्ठाना (for °) D1 महद्भय (for पुनर्भव) —(L. 6420) D1 अत्र वै, G2 मूर्येव (for अत्रैव) M1 अत्र वै वरदा ह्यस्य (for °) —(L. 6422) G1 2 विजृम्भते (for भवेद्ध्रुवम्) —(L. 6424) G1 2 कमलाक्षीति विख्याता (for °) —(L. 6427) G2 आम्रमूले (for चूत°) G(ed.) दाता (for नृणा) —(L. 6428) G2 भव (for भय) —(L. 6429) G(ed) विवर्धन (for °र्धनम्) —(L. 6430) G1 देवस्य (for राजस्य) —(L. 6432) G(ed.) नमेद् (for स्मरेद्) G(ed.) स्तौति (for नमेद्) —(L. 6435) D1 चिरं, G(ed) सुखी (for सुखं)

Colophon —*Sub-parvan* D1 G1 मार्कण्डेयपर्वणि शेषधर्मा, G2 M1 G(ed) शेषधर्मा —*Adhy name* D1 G1 काञ्चीमाहात्म्यम्, G(ed) हस्तिगिरिमाहात्म्यम् —*Adhy no* D1 G(ed) 49 G1 40, G2 M1 49

(L. 6438) G(ed) वेत्सि तत्तु महानाथ (for °) G(ed) मवान् (for ऽसि मे) —(L. 6439) तस्य स्थानस्य वैभवम् (for °) —(L. 6441) G1 पाप (for पापै) —G2 om lines 6444 6451 —(L. 6445) पिनाक् (for शची) —(L. 6447) D1 [अ]निल वह्नी; G2 M1 [अ]भिर्न महीम् (for [अ]खिलं जगत्) —(L. 6450) D1 महोग्रम् भैरवाकारे (for °) —(L. 6457) D2 M1 सर्वे सुकृतमप्रार (for °) —M1 om lines 6459b–6461a D1 om lines 6461–

मया व करणीयं किमिति तान्प्रत्युवाच ह ॥
देवा ऊचु ।
योगमूर्ति विरूप्यैव दिव्यभोगसमन्वित ।
अस्मान्वै पातुमिच्छामो ह्यनिश परमेश्वर ॥
भगवानुवाच ।
सिंहाद्रिरिति विख्यात पुरस्तात्पर्वतोत्तम ।
तत्र वत्स्यामि जगता हिताय त्रिदशेश्वरा ॥
ऋषिविप्रगणै सार्धं युष्माभि सह पुत्रका ।
अत्राश्रयसमायुक्तो वर्ते तत्र महागिरौ ॥
अत्र योगेश्वरो नित्यं तत्र भोगसमन्वित ।
पालयिष्ये तथा लोकांस्त्रिदशाननुजानपि ।
भवन्तस्तत्र गच्छन्तु सदा भोगेप्सवोऽमला ॥
इत्युक्ता हरिणा देवा विमानशतशोभितम् ।
सिंहाद्रिं प्रययु शीघ्र बहुजन्तुनिषेवितम् ॥
तत्र स्थित्वा जगन्नाथ चिरं देवं जनार्दनम् ।
नापश्यंस्त्रिदशा सर्वे योगिध्येयमरिंदमम् ॥
एकविंशे युगेऽतीते तपोभिर्बहुविस्तरै ।
नारसिंहमदृष्ट्वैव दु खिता देवसंतति ॥
सिंहरूपी स भगवान्विचचार नगोत्तमे ।
सहस्रादित्यसकाशो विद्युज्ज्वललोचन ॥
तप्तहाटककेशान्तो विद्युद्दामतनुच्छद ।
दीप्तहाटकजिह्वाग्रो रक्तलाङ्गूलशोभित ॥
विचित्रमणिपादैश्च दन्तपङ्क्तिमरीचिभि ।
भासयन्सर्वककुभो दिव्यसिंहश्चचार ह ॥
कम्पमाना सुरेन्द्रास्ते किमेतदिति शङ्किता ।
तत्र तत्र निलीयन्ते गिरिगह्वरकोटरे ॥
अथ तस्मिन्नन्तरे दिव्ययोगिगणामला ।
शङ्खचक्रधरा वन्द्या स्तूयमाना महर्षिभि ॥
पद्माक्षसूत्रवलया प्रलम्बिवनमालिका ।
दिव्यायुधधरा वीरा दिव्यकुण्डलशोभिता ॥
तप्तहाटकवर्णैश्च रत्नकेयूरशोभिता ।
केयूरमकुटैर्दिव्यैर्नूपुरै कनकाङ्गदै ॥
रशनाभिर्विचित्राभिर्दिव्यरत्नमयै शुभै ।
शोभमाना मुनिवरा योगीन्द्रा पर्वतोपमा ॥
सनत्कुमारो भगवान्सनकश्च सनातन ।
सनत्सुजात शान्तात्मा महायोगी सनन्दन ॥
नारद पर्वतश्चैव कुमुदो लोकपालक ।
जयो विजयशेषाद्या कुम्भयोनिमुखा द्विजा ॥
अणिमादिगुणोपेता योगीन्द्रा सचतुर्मुखा ।
एते चान्ये च बहवो वैकुण्ठपुरवासिन ॥
विमानकोटिसाहस्रैर्जाम्बूनदपरिष्कृतै ।
कोटिसूर्यप्रतीकाशास्तं देशमुपजग्मतु ॥
सिंहरूपधरं देवं हरिं दृष्ट्वा मुनीश्वरा ।
दिव्यै पुष्पै प्रकीर्याथ प्रणेमुर्देववल्लभम् ॥
ध्यायन्त प्रमदायुक्ता सुखासीना सुरोत्तमा ।
प्रसीदेति जगन्नाथमुपतस्थुर्महर्षय ॥
अथान्तरिक्षे जगतामधीश
सुपर्णमारुह्य सुपर्णकेतु ।
तस्मौ गिरौ देवगणै स्तुतोऽसौ
सिंहाद्रिनाथो नरसिंहमूर्ति ॥
मायामृगोऽसौ मनुजेन्द्रसूनो
सिंहो महानाविरभूत्किलाग्रे ।
स एव देवो जगता विनेता
जगद्गुरुर्दिव्यमृगेन्द्रमूर्ति ॥
तत्राविरासीद्गिरिवर्यपृष्ठे
विमानवर्ये बहुमेरुरूप ।
सम्मध्यवर्ती हरिरव्ययात्मा
ग्रस्तान्सुरान्पाति गिरौ प्रलीनान् ॥
देवैरनेकै परिपूजितोऽसौ
चिर वसानीति गिरौ नगेन्द्रे ।

---

6462 — (L. 6462) $G_2$ नानाशस्त्रनिपीडिता (for $^b$) — (L 6463) $D_1$ पाहि नस्त्रिदशान्धीमन् (for $^a$) — $D_1$ $G_2$ $M_1$ om the ref — (L 6467) $M_1$ वा (for व) — After line 6469, G(ed) ins
232** पालयस्व तथा लोकांस्त्रिदशाननुजानपि ।
— (L 6472) $M_1$ गणा सर्वे (for °गणै सार्धं) $G_2$ युष्माकं हितकाम्यया (for $^b$) — (L 6473) G(ed) समायुक्ते (for °युक्तो) $D_1$ वर्ते तस्मिन्, $G_2$ वर्तेमहि, $M_1$ वर्तयेय (for वर्ते तत्र) — (L 6476) G(ed) भोगेच्छवो (for °प्सवो) — (L 6477) $D_1$ $M_1$ शोभित (for °तम्) — For line 6477, $G_1$ subst
233** इत्युक्त्वा सर्वदेवाना देवो विश्वात्मक प्रभु ।
— (L 6478) $D_1$ $M_1$ बहुजन्तु( $M_1$ °रत्नो )पशोभितम्, $G_2$ °——— (for $^b$) — (L 6483) $G_1$ °शोभिता (for ... ते देव ... भगवान् (for $^a$) $G_1$ $M_1$ चचार च (for विचचार) — (L. 6485) $G_2$ विभूषित (for तनुच्छद) — (L. 6486) $D_1$ $G_1$ त( $G_1$ दी )प्तपावकजिह्वाग्रो (for $^a$) G(ed) शोभन (for शोभित) — (L 6489) $G_2$ सुरेन्द्राश्च; $M_1$ सुरा सर्वे (for सुरेन्द्रास्ते) — (L 6490) $D_1$ विलीयन्ते, G(ed.) निलीनास्ते (for °यन्ते) $D_1$ गिरे शिखरकोटरे (for $^b$) — (L. 6493) $M_1$ प्रलम्बिहरिमालिका (for $^b$) — $D_1$ om line 6495 — (L. 6496) G(ed) उज्ज्वलैर् (for केयूर-) — (L. 6497) $D_1$ $G_2$ $M_1$ रत्नचित्रै (for °मयै) — (L 6498) $G_2$ पर्वतोपमे (for °पमा) — (L. 6499) $D_1$ सनन्दन ; $G_1$ 2 $M_1$ सनन्दश्च (for °कश्च) — (L 6500) $D_1$ $G_2$ महामति, $G_1$ $M_1$ बृहस्पति (for सनन्दन) — (L. 6502) G(ed) दौवौ च (for शेषाद्या) $M_1$ जयेशविजयेशाद्या (for $^a$) G(ed) कुम्भयोनिर्बृहस्पति (for $^b$) — (L 6506) G(ed) तं देशं जग्मुरञ्जसा (for $^b$) — (L 6509) G(ed.) च मुदा (for प्रमदा-) — (L. 6515) $G_1$ 2 मयोऽसौ, $M_1$ मृगेन्द्रो (for मृगोऽसौ)

दिव्यैश्च भोगैरुपसेव्यमानो
निवेशयामास मुनीन्द्रवर्यान् ॥
दिव्यभोगसमायुक्तो दिव्यगन्धर्वकोटिभि ।
आराध्यमानो नृपते तत्रास्ते मुनिरव्यय ॥
त नत्वा गरुडारूढ देवदेवमरिंदमम् ।
ध्यात्वा च त्रिदिव याति नर पापवृतोऽपि च ॥
तस्य देवस्य पुरत सदा देवैरभिष्टुत ।
मरुत्वान्स्तौति देवेश मुक्त्यर्थं पाण्डुनन्दन ॥
सूर्यात्मज प्रचेताश्च धनदो यक्षजातिभि ।
स्वां स्वा दिशमधिष्ठाय सेवन्ते त विदूरत ॥
विश्वसृग्वासदेवश्च नारसिंह जगद्गुरुम् ।
सिंहाद्रिनाथ चक्राते सेवां जगति शोभनाम् ॥
देवै समस्तैरुपसेव्यमान
नत्वा नरा यान्ति दिवं सुरेशम् ।
पापानि कृत्वा पितृभक्तिहीना
सदा दुराचाररताश्च सर्वे ॥
श्रुत्वा कथा तस्य हरेरनीश
सिंहाद्रिनाथस्य शुभप्रदा च ।
दिव प्रयान्त्येव नरा सुशीला
पुराणमूर्तेः पुरुषोत्तमस्य ॥
तस्मात्त्वं प्रार्थयस्वेह सिंहाद्रेरीशमव्ययम् ।
अथ वा गच्छ धर्मात्मन्देवदेव प्रपूजय ।
अचिरात्प्राप्स्यसे स्थान श्रिय चैवोज्ज्वला स्थिराम् ॥
यस्त्वेतच्छृणुयान्नित्य यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचित्सोऽश्नुवीत च मानव ॥

Colophon

जनमेजय उवाच ।

एव प्रबोधितस्तेन धर्मपुत्रो महामति ।
कृष्णेन लोकनाथेन किमपृच्छत्पुनर्द्विज ॥
व्यासप्रसादात्तत्सर्वं भवान्वेत्ति न सशय ।
श्रोतुकामस्य मे ब्रह्मन्वैशंपायन कीर्तय ॥

वैशंपायन उवाच ।

काम्यके पर्णशालायामुपविष्ट कुशासने ।
उपदेष्टु महद्धर्ममागत विष्णुवल्लभम् ॥
ईश्वर सर्वलोकाना कृष्ण कमललोचनम् ॥
कृताञ्जलिपुटा सर्वे पाण्डवा धर्मतत्परा ।
नमस्कृत्य जगन्नाथ पप्रच्छुर्धर्मसंहिताम् ॥
यादवेन्द्र जगन्नाथ पाण्डूना हितकृद्धरे ।
ब्रह्मलोकप्रद धर्मं शाश्वत लोकविश्रुतम् ॥
सर्वभाग्यकर पुण्यमायुरारोग्यवर्धनम् ।
कथयस्व जगन्नाथ पाण्डूना हितकृद्धरे ॥

भगवानुवाच ।

शृणुष्व धर्मं भूपाल विचित्र शाश्वत महत् ।
प्रख्यात त्रिषु लोकेषु द्विजाना स्थापन महत् ॥
सर्वभाग्यकर पुंसा बहुपुत्रप्रद शुभम् ।
अनाथ वा सनाथ वा ब्रह्मपुत्रमरिंदम ।
कारयेद्योपनयनं स मुक्तो ब्रह्म चाश्नुते ॥
विवाह मौञ्जिबन्ध च कारयेद्यो नरोत्तम ।
स मुक्त सर्वपापेभ्यो सर्वैश्वर्य लभेन्नृप ।
अपुत्री च सुपुत्री स्यात्सुपुत्री सपदं भवेत् ॥

युधिष्ठिर उवाच ।

अपुत्रिणस्तु बहवो नरा पुण्यकृतोऽपि च ।
अभवन्पापिनो मर्त्या बहुपुत्रा कथ हरे ॥
एतन्मे सशय देव छेत्तुमर्हसि सुव्रत ।
त्वद्वचो देवदेवेश सत्य परमपावनम् ॥

भगवानुवाच ।

मौञ्जीबन्धनमुद्वाहं कृत येनान्यजन्मनि ।
स नर पुण्यवाँल्लोके भविष्यति न सशय ॥
दानेन धनवान्दानात्पुत्रवान्मौञ्जिबन्धनात् ।
उद्वाहाच्छुभवृत्त स्याद्ब्रवीमि द्विजन्मन ॥
अत्रैवोदाहरन्तीममितिहास पुरातनम् ।
पुत्रद भरतश्रेष्ठ चारित्र सोमतेजस ॥

—(L 6516) D1 G1 2 शिल्पाग्रे (for कि°) —(L. 6524) D1 तपाग्रे (for नगेन्द्रे) —(L 6530) G(ed) नरा पापकृता अपि (for ³) —(L. 6536) G1 चक्रुस्ते, G(ed.) त्वनिशं (for चक्राते) G(ed) सेवते स्म शुभप्रदम् (for ³) —(L. 6543) M1 व्रजन्ति (for प्रयान्ति) —(L 6546) G2 अथ वाहोबलेशं वा (for °) —(L 6549) G2 पठेत्रेह (for सोऽश्नु°)

Colophon —*Sub-parvan* D1 आश्चर्यपर्वणि शेषधर्मा G1 2 M1 G(ed) शेषधर्मा —*Adhy name* D1 G(ed) सिंहाद्रिमाहात्म्यम् G2 सिंहाद्रिनाथमाहात्म्यम् —*Adhy no* D1 G(ed) 50, G1 2 49

G(ed) reads lines 6540 6546 after the colophon (preceded by line 3342) —(L 6553) G2 कृष्णमेतत्प्रकीर्तय (for ³) —(L. 6554) G(ed.) उपविष्टं सुखासने (for ⁴) —(L 6557) G(ed.) धर्मात्म (for °तत्परा) —D1 om lines 6559-6561 G2 om 6559-6560 —(L. 6561) G1 बहुपुत्रप्रदं शुभम् (for ³) —(L. 6563) D1 यादवेन्द्र (for प्रख्यात) G(ed) पाण्डूनां हितकृत्तम (for ⁴) —D1 om (hapl) line 6564 —(L 6565) G2 M1 भाग्यप्रदं (for °कर) —(L. 6566) D1 विप्रात्मजम्, G1 शूद्रात्मजम् (for ब्रह्मपुत्रम्) —(L. 6567) D1 G(ed) G(ed) य कारयन्नुपनय (for °) —(L. 6570) D1 G(ed) अपुत्रश्च सुपुत्र स्यात् (for °) —(L. 6571) G(ed.) कृता अपि (for कृतोऽपि च) —M1 om. line 6572. —(L. 6573) D1 G1 M1 [अ] स्व (for सुव्रत) —(L 6575) G(ed) मौञ्जी- M1 तद्वरस्व च देवेन (for °) —(L. 6577) D1 G1 धर्मवान् (for बन्ध तथुद्वाहं (for °) —(L. 6578) G1 द्विज धन°) D1 पुत्री तु (for पुत्रवान्)

सोमकान्त पुरा राजा सोमवंशे महामति ।
*सदा दानपरो नित्य यज्ञकर्मसु निश्चित ॥*
बन्धुप्रियो महातेजा गुणवान्धर्मतत्पर ।
आतिथेय सदा विष्णो परिचर्यापरो नृप ॥
सप्तद्वीपवतीं पृथ्वीं प्रशशास महीपति ।
धर्मेण पालिता सर्वा प्रजास्तेन महात्मना ॥
वाजपेयशत तेन ह्यश्वमेधशत तथा ।
कृतं तेनैव महता देवास्तृप्तास्तथाभवन् ॥
एकदा चिन्तयामास प्रासादे देवसनिभ ।
बहुकालो ह्यतीतो मे पुत्रो नैवाभवन्व्रत ॥
अपुत्रिणा मया लोक परोऽपि च तथा न हि ।
पितृसततिविच्छेदमभून्म पापकर्मिण ।
अद्यप्रभृति ते सर्वे किं करिष्यन्ति पूर्वजा ॥
मया कृतानि धर्माणि बहूनि विविधानि च ।
*तेषां प्रत्यक्षता दृष्टा न मया किं कृत पुरा ॥*
कमद्य शरण गत्वा किं नु पृच्छामि धर्मिणम् ।
कालक्षेपो न कर्तव्यो जरया चावृता तनु ॥
इति सचिन्त्य राजेन्द्र सोमकान्ति प्रतापवान् ।
त्रिविष्टपं ययौ विद्वान्दीप्यमान स्वतेजसा ॥
सुधर्मामण्डप देव पुरदरमरिंदमम् ।
ददर्श देवताभिश्च सेव्यमानमनेकधा ॥
स्वात्मजेन जयन्तेन साधु दृष्ट्वा विशां पतिम् ।
इत एहीति राजेन्द्र स वज्री समभाषत ॥
दत्वा चार्धासन राज्ञे ह्यकाले भवदागम ।
*किमर्थमागमो राजश्रेष्ठ किं करवाणि ते ।*
तद्ब्रूहि साम्प्रत धीर करिष्ये वचन तव ॥
एव पृष्टस्तु भूपाल शक्रेण तु महात्मना ।
धर्मविस्कथयामास स्वमागमनकारणम् ॥
अपुत्रिणो मे देवेश पुत्रं त्व दातुमर्हसि ।
नापुत्रस्य च लोकोऽस्ति त्वया वै गदित पुरा ।
तस्मात्त्वां प्रार्थयाम्यद्य कामद सर्वदेहिनाम् ॥

इन्द्र उवाच ।

ममापि च ह्यपुत्रस्य ब्रह्मा लोकपितामह ।
जयन्त दत्तवान्पूर्वं प्रयत्नेन नृपोत्तम ॥
तत्सकाश व्रज त्व हि स वै दास्यति पुत्रकम् ।
काङ्क्षन्ति च दिक्पालास्ते सार्धं नु त्वया सह ।
गच्छामि ब्रह्मणो लोकमद्य त्व यातुमर्हसि ॥

भगवानुवाच ।

दिक्पालै सह राजेन्द्र राज्ञा तेन महात्मना ।
मरुत्वानाययौ शीघ्र ब्रह्मणा ह्यविशङ्कया ॥
नमस्कृत्याब्रवीद्राजन्ब्रह्माण प्रपितामहम् ।
राजाय सार्वभौमश्च देवकार्यरत सदा ।
धर्मविद्धर्मनिरतो ह्यपुत्री च इमे सुरा ॥
सर्वेषां पुत्रसपत्तिं प्रयच्छ भुवनेश्वर ।
अस्ति चेत्तव कल्याण स्पृहा देवेषु भूमिप ॥

ब्रह्मोवाच ।

ब्रह्मप्रतिष्ठां कुरुत ततो वैवाहिकं शुभम् ।
राजा दिक्पतय सर्वे कुर्वन्तु मम चाज्ञया ।
तेन पुण्यप्रभावेन पुत्रप्राप्तिर्भवेद् ध्रुवम् ॥
अहमेव शुभ कर्म धर्मार्था धर्ममुत्तमम् ।
कृत्वा वै सर्वलोकानां सृष्टिकर्ता भवामि च ॥
इत्युक्त्वान्तर्दधे देवो ब्रह्मा लोकपितामह ।
राजा च देवता सर्वा स्व स्व स्थान ययुस्तदा ॥
कृत्वा वै द्विजपुत्राणां मौञ्जीबन्धनिवेशनम् ।
*राजा पुत्रमवाप्स्यत वै पितृणा मुक्तयेऽनघ ॥*
ब्रह्मप्रतिष्ठामकरोत्काले पुण्यतमे नृप ।
उद्वाहमङ्गलैर्दिव्यै कारयामास सर्वदा ॥
धर्मव्रतो महानासीत्सुतो वै देवसनिभ ।
तेनैव पितरो मुक्तिमगमन्पुण्यकर्मण ॥
तस्मात्त्व भूभृतां श्रेष्ठ पुत्रसततिपालने ।
पितृणां मुक्तये तात कुरु वै ब्रह्मवर्धनम् ॥

---

म्मतः, $M_1$ न संशय (for द्विजन्मन) — (L. 6579) $G_1$ $M_1$ [व]दाहरिष्यामि (for °रन्तीमम्) — (L. 6580) $G_1$ ₃ चारित्रं सोमजोद्भवम् (for °) — (L. 6581) $G_1$ ₃ सोमवंशसमुद्भव (for °) — (L. 6582) $D_1$ G(ed) निश्चित (for निश्चित) — (L. 6585) $D_1$ $G_1$ प्रशशास महायु( $G_1$ °म )ति (for °) — (L. 6589) G(ed) प्रभया (for प्रासादे) — (L. 6591) $D_1$ अपुत्रिणस्त्वयं लोक, $D_1$ G(ed.) °णामय लोक (for °) — (L. 6594) $D_1$ धर्मांश्च, $G_1$ सर्वाणि, $M_1$ कर्माणि (for ध°) — (L. 6597) G(ed.) व्याहता (for व्यावृता) — (L. 6600) $D_1$ सुमण्डपे देवदेव (for °) $G_1$ G(ed) दृश्यमान ($G_2$ देवराज) पुरंदरम् (for °) — (L. 6602) $D_1$ $M_1$ G(ed) पार्श्वे (for साधु) $G_1$, ₃ $M_1$ G(ed) दृष्ट्वा (for दृष्ट्वा) — (L. 6603) $D_1$ $M_1$ वज्रा प्रत्यभाषत, $G_1$ वज्री नृपम्°, $G_2$ वज्री नृपम्° (for °) — (L. 6607) $G_2$ वचनम् (for पृष्टस्) — (L. 6608) $G_1$ स्वर्गागमनकारणम् (for °). — (L. 6612) $G_1$ ₃ $M_1$ ब्रह्म (for च हि) — $G_2$ om lines 6615 6617 — (L. 6621) $G_2$ ह्यपुत्रश्च $M_1$ अपुत्रश्च (for ह्यपुत्री) — (L. 6622) G(ed) सर्वेषां त्वं देवेष्वेव (for °) — (L. 6623) G(ed) नित्यश (for भूमिप) — (L. 6627) G(ed) च शुभ (for एव शुभ) $G_2$ G(ed) धर्मिणा (for धर्मार्था) — (L. 6630) $G_1$ $M_1$ सर्वे (for सर्वा) $G_2$ समाययु (for ययुस्तदा) G(ed) स्वं स्वं धाम प्रपेदिरे (for °) — (L. 6631) $G_2$ मौञ्जीबन्धनमुत्तमम् (for °) — (L. 6632) $G_1$ समाप्नोति (for अवाप्स्यत वै) $G_2$ राजा च पुत्रकामोऽसौ (for °) — (L. 6634) $D_1$ $M_1$ G(ed.) उद्वाहमङ्गल द्रव्यै (for °) $D_1$ $M_1$ स कारयति सर्वेण, $G_2$ कुर्वतस्तस्य भूपते (for °) — (L. 6636) $D_1$ $G_1$ $M_1$ °कर्मणा (for °ण) — (L. 6639) $D_1$ सुधर्मेत्व, $M_1$ °मे च (for °र्थे च) — (L. 6641) $D_1$ °लोक

आयुष्कर सुधर्म्यं च प्रजावृद्धिकर शुभम् ।
यशस्य लोकविख्यात सर्वलोकेषु पूजितम् ॥
पुण्यलोकप्रद पार्थ विवाहोपनयन परम् ।
मम लोकप्रद धर्मं सर्वमङ्गलदायकम् ॥
य शृणोति सदा भक्त्या प्रात काले नृपोत्तम ।
पुत्रप्राप्तिर्भवत्तस्य सत्य सत्य मयोदितम् ॥
स्त्रीसनिधौ निशाया तु पठेत्प्राप्नोति पुत्रकम् ।
आरोग्य बलवृद्धिं च कान्तिं च निरुपद्रवाम् ॥

Colophon

द्रौपद्युवाच ।

गङ्गासुत नमस्तेऽस्तु कुरुवृद्ध महामते ।
केनोपायेन मे तात सर्वसपद्भविष्यति ॥
स्त्रीणा तु किं व्रत प्रोक्त सर्वसपत्कर परम् ।
विख्यात त्रिषु लोके तन्मे ब्रूहि पितामह ॥
पाञ्चाल्या वचन श्रुत्वा यज्ञपत्नीजनै सह ।
भीष्मो वेदविदा श्रेष्ठो द्रौपदीं वाक्यमब्रवीत् ॥
वक्ष्ये परमकल्याणि सर्वसपत्करं शुभम् ।
आदौ भगवता प्रोक्त नारदाय महात्मने ।
नारदो ब्रह्मपुत्रस्तु ममावोचच्छुभ व्रतम् ॥
चातुर्मास्यव्रत पुण्य सर्वमङ्गलकारणम् ।
अपवर्गप्रद नृणा सर्वेषामघनाशनम् ।
स्त्रीणा पतिव्रताना तु सर्वमङ्गलद शुभम् ॥
श्रावणे मासि शुद्धे तु दशम्या तु शुभे दिने ।
स्वगृह लेपयेद्भक्त्या कृष्णे निर्विष्टचेतसा ॥
स्नात्वालकारयेद्देह गन्धपुष्पाक्षतादिभि ।
पतिसेवापरा भूत्वा नत्वा नारायण प्रभुम् ॥
नत्वा पतिव्रता सम्यक्पति परमपावनम् ।
प्रार्थयेत्परया भक्त्या करिष्ये त्वत्प्रसादत ॥
दशम्यामेकभुक्ता तु पादसेवा करोमि ते ।
यथा प्रीणाति भगवास्तथानुज्ञा ददस्व ह ॥
प्रार्थयेत्पुण्डरीकाक्ष प्रसीदेति तत परम् ।
प्रसन्नो भव देवेश सर्वज्ञ त्वा नमाम्यहम् ॥
त्वत्प्रसादात्तु भगव करिष्ये व्रतमुत्तमम् ।
अविघ्न कुरु मे नाथ सर्वलोकनमस्कृत ।
कृपया तव देवेश करिष्ये व्रतमुत्तमम् ॥
नमस्त पुण्डरीकाक्ष नमस्त गरुडध्वज ।
नमस्त कमलाकान्त भूयो भूयो नमोऽस्तु ते ॥
इद मन्त्र समुच्चार्य प्रार्थयेत्कमलापतिम् ।
त्वत्प्रसादात्कृत सम्यक्सफल भवति ध्रुवम् ॥
एव गृहार्चन सम्यक्प्रार्थयित्वा पुन पुन ।
पतेरनुज्ञया रात्रौ भद्रदीप प्रकल्पयत् ॥
कृत्वैकभुक्त पूर्वेद्युरन्यद्युरपि सुव्रते ।
कर्तव्य यद्धरे सम्यक् तत्प्रवक्ष्य शृणुष्व ह ॥
एकादश्या समुत्थाय स्नात्वा च प्रार्थयत्पतिम् ।
कृतस्वस्तिकविन्यासा गृहदेवस्य सनिधौ ॥
एकादशीव्रत कर्तुमनुज्ञा दातुमर्हसि ।
त्वत्प्रसादादह कर्तुं यतिष्ये नाथ सप्रति ॥
त्व मे हरिर्गुरुर्बन्धुरपवर्गप्रदो विभु ।
त्वया सरक्षिता नित्य त्वत्पादकमल गता ।
भोक्ता मे शिक्षिता च त्व त्वदन्यो न गतिर्मम ॥
रात्रौ जागरण कृत्वा उपोष्यैकादशीदिनम् ।
द्वादश्या प्रातरुत्थाय स्नान कुर्वीत वाग्यत ॥
भक्तिमान्यजमानस्तु विष्णुसूक्तादिमन्त्रकै ।
स्नापयेत्परया भक्त्या गन्धोदककुशादकै ॥
पुरुषसूक्तविधिना गायत्र्या वा सुरेश्वरम् ।
अष्टाक्षरविधानेन अथ वा द्वादशाक्षरे ॥
पूजयेद्देवदेवश घण्टानादसमन्वितम् ।
क्षत्रिय सर्ववाद्यैश्च शङ्खदुन्दुभिकाहलै ॥
एवं प्रपूजयेद्देवमपवर्गप्रद प्रभुम् ।
नामत्रयैर्महामन्त्रैर्विप्रकुर्वीत वन्दनम् ।
स्पर्शने नाधिकारोऽस्ति स्त्रीशूद्राणां विशेषत ॥
एव कृत्वा हरे पूजां बन्धुमान्भक्तिमान्गृही ।
पौरुषैस्तु महामन्त्रै सनिधौ पायस हुनेत् ॥
परमान्न हरे प्रीत्यै द्वादश्या हेमपात्रत ।

---

प्रदो ( for °प्रद ) D1 विवाहोपनयौ शुभौ, G2 °ह मोक्षिव धनम् ( for °) 

Colophon — *Sub-parvan* D1 G1 आश्चर्यपर्वणि शेष धर्मा G2 G(ed) शेषधर्मा, M1 आश्चर्यपर्वणि हरिवंशे शेष धर्मा — *Adhy name* G1 महाप्रतिष्ठापनम्; G(ed) महाव्रतिप्रशसा — *Adhy no* D1 51; G1 : M1 50

D1 G2 युधिष्ठिर ( for द्रौपदी ) — ( L. 6647 ) G2 M1 पितामह ( for महामते ) — ( L 6649 ) G1 सर्वत्र सपत्करं तं ( for ° ) — After line 6650 D1 ins

234** तेषा पत्नी त्वेतदर्थं द्रौपदी प्रणयान्विता ।
कौतूहलात्पृष्टवती महापुण्यप्रद शुभम् ॥

— Before line 6651, D1 M1 ins वैशंपायन उवाच — ( L. 6653, G1 M1 ins भीष्म उवाच — ( L 6656 ) G1 : °दाय कम् ( for °कारणम् ) — ( L. 6659 ) G(ed) आषाढे ( for श्रावणे ) — ( L. 6762 ) D1 शुभम्; G1 G(ed) विभुम्, M1 परम् ( for प्रभुम् ) — ( L. 6670 ) D1 G2 देव ( for नाथ ) — ( L. 6676 ) G(ed) लोकेश्वर ( for गृहार्चन ) — ( L. 6679 ) D1 भवेत् ( for हरे ) — ( L. 6680 ) G2 स्नुषा; G(ed) नत्वा ( for स्नात्वा ) — ( L. 6686 ) D1 G1 M1 भोक्ता मां शिक्षकर्ता च ( G1 °म° कर्ता; M1 °कर्ता च ); G2 बोद्धा शिक्षाकरस्त्वं हि ( for ° ) — After line 6686 G(ed) ins

235** इति संप्राप्ते भर्तार सर्वानुक्रमशस्त्व च ।

— G2 om lines 6689–6691 — ( L. 6694 ) D1 G2 °कोणकै, — ( L. 6695 ) D1 G2 M1 देवं M1 निस्वने ( for °काहलै )

यद्यद्व्रतादिकं कर्म हरिमनिधिमाग्रत ।
सफल याति राजेन्द्र सर्वान्कामानवाप्स्यसि ॥
पुण्याहं वाचयित्वाथ विप्रैर्बन्धुजनै सह ।
शान्ति पौरुषसूक्तानि पठेद्देव प्रणम्य च ॥
औपासनादिकान्कृत्वा ब्राह्मणानभिवादयेत् ।
पादप्रक्षालन कृत्वा भोजयेत्परमाव्रत ॥
हरेर्नैवेद्यशेष तु स्वय भुञ्जीत वाग्यत ॥
तदन्ते यजमानस्य वल्लभा मङ्गळव्रता ।
प्रणम्य विप्रान्स्वपतिं कृत्वा पादविशोधनम् ।
तीर्थभूतं पय पीत्वा स्वय भुञ्जीत बन्धुभि ॥
एव कृते व्रते सम्यक् दपतिभ्यां हरि स्वयम् ।
प्रीतिं गच्छति पाञ्चालि कर्मणा फलदो विभु ॥
य य कामयते काम तं त प्राप्नोति निश्चितम् ।
कृपया लोकनाथस्य व्रतेनानेन सुव्रते ।
एकादशीव्रत कुर्याच्चातुर्मास्य विशेषत ।
शुद्धश्रावणमारभ्य कार्त्तिकान्त समर्चयेत् ॥
एवं कृते विशेषेण पुत्रपौत्रादिबन्धुभि ।
स्त्रीभि परिजनै सार्धं यत्काम्यं तत्प्रपद्यते ॥
सुरलोकप्रदा ज्ञेया जीवपुत्रप्रदायिनी ।
अपवर्गप्रदा ज्ञेया सर्वपापप्रणाशिनी ।
आरोग्यदायिनी ज्ञेया सर्वभाग्यकरी शुभे ॥

द्रौपद्युवाच ।

भगवन्सर्वधर्मज्ञ सर्वलोकेश्वरस्य हि ।
भक्तप्रियो विशेषेण रक्षिता मम सुव्रत ॥
सवाह्य शिरसा भक्त्या भव राज्ञा शुभप्रद ।
करिष्ये पतिभि सार्धं धर्मव्रतपरायणै ॥
श्रुतं मया विशेषेण चातुर्मास्यस्य वैभवम् ।
उद्यापन तु कार्त्तिक्यां वद सप्रति मेऽनघ ॥

भीष्म उवाच ।

व्रतानामपि सर्वेषामुद्यापनविधिं बुधा ।
वदन्ति च व्रतस्यास्य नैवेद्यापनकर्म च ॥
नित्या ह्येकादशी पुण्या सर्वभाग्यप्रवर्धनी ।
उपवासव्रतमिद नियमव वदन्ति हि ॥
यथा तु गुळपिण्डस्य रसभेदो न विद्यते ।
एकादश्युपवासस्य तथा सर्वस्य चानघे ॥
शृणु पाञ्चालि वक्ष्यामि चातुर्मास्यस्य वैभवम् ।
फलातिशयहेतोस्तु कारणं कलिनाशनम् ॥
एकादश्या शुक्लपक्षे श्रावणस्य सुरोत्तम ।
स्वमायया पवित्राद्र्या निद्रया वर्तते विभु ॥
तथा योगेन महता विग्रहेण सुशोभन ।
प्रसन्नमूर्तिर्भगवान्कार्त्तिक्या भवति प्रभु ॥
तस्य प्रसन्नदिवसमुत्थानाख्यं विदुर्बुधा ।
उत्थिते देवदेवेशे शेषपर्यङ्कशायिनि ।
पूजयेत्त प्रयत्नेन पूजाभिस्तत्पद व्रजेत् ॥
योगोत्थितत्वात्स विभुर्जगद्योनिर्जगन्मय ।
चराचरेषु लोकेषु ह्युत्थानद्वादशी स्मृता ॥
द्वादश्यां तु हरिं भक्त्या पूजां कुर्वन्ति ये नरा ।
तेषा मुक्तिर्भवेत्सम्यग्देवदेवस्य चेक्षणात् ॥
एकादशीं तथा सर्वामुपोष्य विधिवद्धरे ।
पूजा कृत्वा प्रयत्नेन ह्युत्थानान्त समर्चयेत् ॥
उत्थाने विधिना पूजा य करोति विशेषवित्
स मुक्त सर्वपापेभ्यो हरिसालोक्यतां व्रजेत् ॥

द्रौपद्युवाच ।

कीदृशी पूजना प्रोक्ता देवदेवस्य शार्ङ्गिण ।
तन्मे कथय तत्त्वज्ञ सर्वलोकेषु पूजित ॥

भीष्म उवाच ।

शृणु भद्रे प्रवक्ष्यामि नारदाय महात्मने ।
हरि प्रोवाच जलधौ क्षीराख्ये सस्तुतो विभु ॥
व्रतानामपि सर्वेषां मुख्यमेकादशीव्रतम् ।
मयि सुप्ते भक्तजना कुर्वन्ति मयि तत्परा ॥
तस्मात्पुण्यतम प्रोक्त चातुर्मास्यव्रतं परम् ।
शेषा भक्तिकरी प्रोक्ता चातुर्मासी तु मुक्तिदा ॥
भक्तिं विना ते मुक्तिश्च कथमद्य भविष्यति ।
भक्त्या मुक्तिप्रद कर्म साधयेद्बुद्धिमान्नर ॥
तस्मादेकादशी पुण्या त्वया सेव्या मुनीश्वर ।
भक्त्या परमया शान्त्या चातुर्मास्ये विशेषत ॥
इत्युक्त्वा भगवाञ्छ्रुत नारद मुनिसत्तमम् ।
तिरोऽभूत्तत्र विश्वात्मा नारदो विस्मय गत ॥
तस्मात्सर्वप्रयत्नेन पूज्या नारायणात्मिका ।
उत्थानद्वादशी ज्ञेया सर्वपापप्रणाशिनी ॥
सुप्तोत्थितो हरि साक्षाद्व्रतेन परितोषित ।
व्रतेन सर्वकामान्वै सप्रयच्छति शोभने ॥

प्रपूजयेद्भक्त्या (for °) D1 M1 शुभम् (for प्रभुम्) — (L. 6699) M1 सन्निधौ ज्ञुद्दयात्पुन (for °) — (L. 6700) G1 विशेषेण (for हरे प्री ये) D1 G3 M1 परमान्नैर्हरे प्रीतिर् (for °) D1 G3 M1 द्वादश्यां होममाव्रत (for °) — (L 6701) G3 यद्यद्व्रतानि कर्माणि, M1 क्रियद्व्रतानि किं कर्म (for °) — (L. 6709) G1 भक्त्या (for विप्रान्) — (L 6713) D1 M1 कर्ता (for कर्म) — (L 6714) G1 कृपया वासुदेवस्य (for °) — (L 6716) G(ed) आषाढशुद्धमारभ्य (for °) — G3 पाञ्चाली (for द्रौपदी) — (L 6722) M1 सर्वलोकेश्वर सखा (for °) — (L. 6724) G1 भवदाज्ञां सुख (M1 शुभ) प्रदाम् (for °) — (L 6730) G(ed) सर्वभोग्यविवर्धनी (for °) — G(ed) om. lines 6735 6736 — (L. 6737) M1 प्रीयते (for वर्तते) — (L 6743) G(ed) योगोत्थितो हि स विभु (for °) — (L 6747) D1 एकादशी सदा सेव्या (for °) — (L 6748) G3 G(ed) ह्युत्थान स समर्चये (G3 °माचरे) त् (for °) — (L. 6750) G1 हरिसालोक्यमश्नुते (for °) — G1 3 M1 पाञ्चाली (for द्रौपदी) — (L 6751) G(ed) पूजा तु कीदृशी प्रोक्ता (for °). — (L. 6756) G(ed)

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
तपश्च सफलं चासीद्युष्माकं प्रियदर्शनात् ॥

अरुन्धत्युवाच ।

किमर्थं तप्यते वत्से त्वया पेशलगात्रया ।
त्वया वक्तु रहस्यं चेद्वद संप्रति नान्यथा ॥
सख्या निवेदयामास तच्छ्रुत्वा शंकरं प्रति ।
सलज्जा तरुणी कामं सा वक्तुं न शशाक ह ॥

अरुन्धत्युवाच ।

भद्रे विदितमेवाद्य त्वद्वृत्तमतिशोभने ।
व्रतेन तोषयस्वेह क्षीराब्धितनयां शुभाम् ॥

उमोवाच ।

किं व्रतं तद्विधानं मे कथयस्व नमोऽस्तु ते ।
करिष्ये वचनादद्य मातस्तव पतिव्रते ॥

अरुन्धत्युवाच ।

प्रोषिते गौतमभयाद्देवराजे शची तदा ।
व्रतेन दुःखिता जीवो विशोकामकरोत्तदा ॥
तद्व्रतं संप्रवक्ष्यामि कृतमेतन्मयाधुना ।
व्रतेनानेन सुभगे तवेष्टार्था भविष्यति ॥
पुरंदरवियोगार्तां शचीं चारुविलोचनाम् ।
जीवो वचनमक्लीबमुवाच वदतां वरः ।

बृहस्पतिरुवाच ।

राशिं कर्कटकं भानौ गते परमपावने ।
भृगुवारे महापुण्ये स्नात्वा नद्यां शुचिस्मिते ॥
सैकतं पूर्णकुम्भं च तज्जलात्परिगृह्य च ।
धौतवस्त्रसमायुक्ता वटस्याश्वत्थपल्लवान् ॥
आदाय स्वगृहं रम्ये सैकते तु समर्पयेत् ।
तत्सैकतं समादाय त्रीन्पिण्डानथ कारयेत् ॥
वटाश्वत्थैस्तु तानर्च्य तत्पार्श्वे पूर्णकुम्भकम् ।
सुवर्णपुष्पगन्धाद्यैर्वस्त्रतण्डुलराशिभिः ।
हरिद्रालवणाभ्यां च पूगताम्बूलकर्पूरैः ॥
उपस्थितं समभ्यर्च्य लक्ष्मीनारायणात्मकम् ।
माभूम्यां सह तं विष्णुं सनकादिनिषेवितम् ॥
स देवमर्चयेद्विद्वांस्तत्तन्मन्त्रैस्तु शार्ङ्गिणम् ।
मोदकान्गुळसंपूर्णान्मुद्गैश्च परिपूरितान् ।
नैवेद्यमर्पयेद्विद्वानेकविंशतिसंख्यया ॥

विप्राय वेदविदुषे वायनं तु समर्पयेत् ।
माभूम्यां सहितो विष्णुः श्रीमांश्च लोकनायकः ।
मोदकानां प्रदानेन वाञ्छितार्थप्रदो भवेत् ॥
विप्राय वायनं दत्त्वा मन्त्रेणानेन सुव्रत ।
एकविंशतिभिर्वापि सप्तभिर्वा प्रकल्पयेत् ॥
एवं संपूज्य विधिवत्कथां श्रुत्वा सुशोभनाम् ।
भुञ्जीयाद्बन्धुभिः सार्धं स्वयं भुञ्जीत मोदकान् ॥
दक्षिणां गुरवे दद्यात्सवस्त्रफलतण्डुलाम् ।
आशिषं तु सतः प्राप्य गृहं नीत्वा प्रपूजयेत् ।
एवं कृते विधानेन सद्यः सिद्धिर्भविष्यति ॥
पुत्रपौत्रांस्तथा विन्देत्पतिं विन्देत्पतिव्रता ।
राजा च राज्यलाभं च दरिद्रो धनसंपदम् ॥
दीर्घमङ्गलमायुष्यमारोग्यं चापि भामिनि ।
भवेद्व्रतेन कीर्तिश्च सर्वसंपच्च शाश्वती ।
यं यं कामयते कामं तं तमेति न संशयः ॥
स्त्रीणां व्रतमिदं मुख्यं पतिपुत्रविवर्धनम् ।
तस्मात्पतिव्रते त्वं तु कुरु व्रतमनुत्तमम् ॥
आचार्यस्य वचः श्रुत्वा शची कमललोचना ।
तथाकरोद्व्रतमिदं ब्राह्मणान्परिपूज्य च ॥
पतिं लेभे विशालाक्षि सहस्राक्षमरिंदमम् ।
कृपया वासुदेवस्य लक्ष्म्याश्चापि नगात्मजे ॥
अरुन्धत्या वचः श्रुत्वा गौरी कुटिलकुन्तला ।
अकरोत्प्रीतिसंयुक्ता लक्ष्मीनारायणात्मकम् ॥
व्रतं कृत्वा विधानेन व्रताना पतिमव्ययम् ।
गौरी लेभे महादेवं पतिं परमपावनम् ॥

भीष्म उवाच ।

कार्कटे तु भृगोर्वारे व्रतेऽस्मिंस्तु मया कृते ।
अन्धकारिः प्रसन्नोऽभूत्पार्वत्यास्तु तपोव्रतैः ॥
अष्टमूर्तिधरो भूत्वा कपर्दी वाक्यमब्रवीत् ।
परितुष्टोऽस्मि भद्रं ते पवित्रे मेनकात्मजे ।
तव दास्यं गतोऽहं वै तपसा च व्रतेन च ॥
देवता च व्रतस्यास्य क्षीराब्धितनया शुभा ।
अथ देवो हरिः साक्षात्सर्वलोकेश्वरो विभुः ॥
अद्यप्रभृति लोकानां फलदा शुभदा रमा ।
राज्यदा भोगदा चैव पतिदा धनदा शुभा ॥
हरिं लक्ष्मीं विना नान्या व्रतदानफलप्रदा ।

(for ⁵) —(L. 6836) D1 जातं (for चासीद्) —(L. 6837) G3 बाले, M1 भद्रे (for वत्से) —(L. 6838) G3 न शक्यं (for रहस्यं) —(L. 6840) G3 कामा (for कामं) — G3 om lines 6841 6844 — D1 पार्वती (for उमा) —(L. 6854) G1 G(ed) वटाश्वत्थस्तु (G1 °स्य )पल्लवान् (for ⁵) —(L. 6859) G(ed.) चन्द्रकैः (for कर्पूरैः) —(L. 6862) D1 G3 तत्तन्मन्त्रैश्च चेतसा (for ⁵) —(L. 6865) M1 पायसं (for वायनं) —(L. 6868) M1 [उ]पायनं (for वा°) G1 G(ed) विप्राय दद्याच्छुचये (for °) —(L. 6871) G1 G(ed.) ब्राह्मणान्भोजयित्वाथ (for °) — After line 6872 G1 G(ed.) ins

236** दक्षिणां तु यथाशक्ति दद्याद्विप्रेभ्य एव च ।

—(L. 6875) G1 पुत्रं विन्देद्विशालाक्षी (for °) —(L. 6877) D1 G3 दीर्घमायुष्यमारोग्यं (for °) G3 मङ्गलं चापि भामिनी (for ⁵) —(L. 6879) G3 तं तं प्राप्नोत्यसंशयम् (for ⁵) —(L. 6880) D1 G1 3 M1 बन्धु (for पुत्र-) — G3 om line 6886 —(L. 6886) D1 गौरी कमललोचना (for ⁵) —(L. 6890) D1 G1 3 M1 विधिना सोमया कृते

न पश्यामीह लोकेऽस्मिंस्तस्मात्पूज्या त्वया शुभे ॥

भीष्म उवाच ।

एवं दत्त्वा वरं तस्याः पार्वत्याः परमेश्वरः ।
उद्वाह्य विधिना गौरीं तया सार्धं मुमोद ह ॥
पाञ्चालराजतनये त्वमेव कुरु शोभने ।
पुनराज्यधनादीनां सपत्नश्च भवेद्ध्रुवम् ॥
रुक्मिणी कृष्णमुद्दिश्य कृत्वा व्रतमनुत्तमम् ।
यादवेन्द्रं पतिं लेभे सत्यकन्या चेदिभूपतिम् ॥
सर्वास्ताः कृष्णपत्न्यश्च सर्वा यादवयोषितः ।
प्रद्युम्नप्रमुखान्पुत्रांल्लेभिरे लोकविश्रुतान् ॥
दमयन्ती पतिं लेभे राज्यभ्रष्टं नलं विभुम् ।
*हरिश्चन्द्रः स्वकं राज्यं लभे चन्द्रवतीं शुभाम् ॥*
पाञ्चालि पश्य लोकेषु यत्ते मनसि रोचते ।
अचिरात्प्राप्स्यसे श्रेयः सत्यं नारदभाषितम् ॥
भर्त्रा विरहिता नारी भ्रष्टराज्यश्च यो नृपः ।
व्रतं कृत्वा विधानेन शाश्वतं सुखमश्नुते ॥
व्रताचरणकाले तु शृणुयाद्यो हि मानवः ।
तस्यैव सर्वश्रेयांसि भविष्यन्ति न संशयः ॥

Colophon

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शिवरात्रिव्रतं तात ब्रूहि मे कुरुपुंगव ।
समस्तं सर्वलोकानां पवित्रं पावनं शुभम् ॥
कैर्नृपैर्द्विजमुख्यैश्च ऋषिभिर्देवतागणैः ।
कृतं व्रतमिदं पुण्यं पवित्रं पापनाशनम् ।
वद विश्रुतधर्मज्ञ नमः सुरनदीसुत ॥
त्वं हि लोकगुरुर्भूत्य इति मे निश्चिता मतिः ।
तस्मात्त्वा प्रार्थयाम्यद्य पातु धर्मामृतं प्रभो ॥
त्वत्तोऽद्य श्रोतुमिच्छामि देवदेवस्य चाज्ञया ।
धर्मोपदेशव्याजेन पाह्यस्मान्भवपीडितान् ॥

वैशंपायन उवाच ।

इत्युक्तो धर्मराजेन कुरुवृद्धः पितामहः ।
धर्मसूनुमथामन्त्र्य सस्मितं वाक्यमब्रवीत् ॥

भीष्म उवाच ।

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ।
त्वं वेत्ता सर्वधर्माणां मां तथा परिपृच्छसि ॥
ऐश्वरं व्रतमुद्दिश्य कीर्तितं तेन मां प्रति ।
तदहं देवदेवेशो वेत्ति नान्यो महीतले ॥
*पुरा भगवता प्रोक्तं विष्णुना प्रभविष्णुना ।*
नारदाय ब्रह्मविदे तस्मात्तु मया श्रुतम् ॥
भागीरथ्यास्तटे राजन्ब्रह्मर्षिगणसेविते ।
स्नातुमिच्छन्महानद्यां ब्रह्मपुत्रो युधिष्ठिर ।
पर्यटंस्तु शुभाँल्लोकानिह क्षेत्रमगात्प्रभुः ॥
तीरवीतं व्योमवीथ्यां दृष्ट्वा दिनकरप्रभम् ।
ऋषयो देवताः सर्वे तं देशं जग्मुरञ्जसा ।
विश्वामित्रो भरद्वाजो जमदग्निश्च मन्त्रवित् ।
कण्वो बृहस्पतिर्व्यासः सोमदत्तः सहस्रवित् ॥
रामो वेदविदां श्रेष्ठः सत्यशीलश्च काश्यपः ।
सुमन्तुर्जैमिनिश्चैव पुलस्त्यः पुलहः क्रतुः ॥
गौतमोऽथ शतानन्दो ह्यापस्तम्बश्च गालवः ।
संवर्तो रोमशश्चैव सत्यकीर्तिस्तथा भृगुः ॥
एते चान्ये च बहवो मुनयः संशितव्रताः ।
दिक्पाला मरुतश्चैव द्वादशार्का मरुद्गणाः ।
यक्षकिंनरगन्धर्वास्ते देशं प्रादुरव्ययाः ॥
तत्र देवानृषीन्सर्वाश्रमस्थांश्च नारदम् ।
आर्यं धर्मं समुद्दिश्य पर्यपृच्छमहं प्रभो ।
अनुज्ञातस्तथर्षिगणैर्मां देवाः साधु चाब्रुवन् ॥
महत्सत्रमथागम्य वयमत्र समागताः ।
तदिदं दैवयोगेन नदीज परिपृच्छसि ॥
इति तेषूपविष्टेषु प्रीतिं कृत्वा महत्सु च ।
नारदो भगवानत्र मां चैव प्रत्यभाषत ॥

नारद उवाच ।

*साधु प्रज्ञावतां श्रेष्ठ मतिस्ते मत्सरवर्जिता ।*
नीलकण्ठस्य देवस्य व्रतं परमपावनम् ॥
आदौ भगवता प्रोक्तं देवदेवेन चक्रिणा ।

---

(G2 2 °ता ) ( for ⁶ ) — ( L. 6903 ) G(ed) पाञ्चालतनये तस्मात् ( for ᵃ ) — ( L. 6904 ) G2 संपदस्ते, M6 °श्चि ( for °श्च ) — ( L. 6910 ) D1 लेभे चन्द्रवती शुभा ( for ᵇ )

COLOPHON — *Sub-parvan* D1 आश्चर्यपर्वणि गेयधर्मा, G1 2 M1 G(ed) शेषधर्मा — *Adhy name* D1 कर्कोटक-भागवव्रतम्, G1 कर्कोटकव्रतम्, G2 कर्कोटभृगुनारदव्रतम्, G(ed) लक्ष्मीनारायणव्रतमाहात्म्यकथनम् — *Adhy no* D1 53, G1 2 M1 G(ed) 53

( L. 6917 ) G(ed) नमस्तेऽस्तु ( for महाप्राज्ञ ) — ( L. 6921 ) G1 महाव्रत ( for व्रतमिदं ) G(ed) इदं ( for पवित्रं ) — ( L. 6926 ) G(ed) न्यून ( for पीडितान् ) — ( L. 6930 ) D1 M1 तथापि मम पृच्छसि, G1 तथा मामपि पृ° ( for ᵇ ) — ( L. 6931 ) G1 आश्चर्यं ( for ऐश्वरं ) — ( L. 6933 ) G1, 2 M1 विष्णुना सर्वजिष्णुना ( for ᵇ ) — ( L. 6937 ) D1 G1 सज्जनस्य, M1 पूजनार्थं ( for पर्यटंस्तु ) — G2 om lines 6938–6940 — ( L. 6938 ) D1 M1 चरन्तं व्योमतः काश्यां ( M1 °श्यपि ), G1 समहं व्योमजलधो ( for ᵃ ) D1 दिव्यां दिनकर प्रभुम् ( for ᵇ ) — ( L. 6939 ) G1 M1 तं देशं प्रति ( M1 °श्मपि ) जग्मतु ( for ᵇ ) — ( L. 6943 ) D1 सुम न्तुर्देवनिधन, G1 °न्तुर्वै वेदनिधि ( for ᵃ ) D1 G1 M1 काश्यप ( for पुलह क्र ) — ( L. 6948 ) D1 तं देशं जग्मुरञ्जसा, G2 M1 तं देशमुपजग्मिरे ( M1 °ग्मतु ) ( for ᵇ ) — ( L. 6949 ) G1 2 ऋषिगणान् ( for ऋषी सवान् ) — ( L. 6951 ) G1 G(ed) मनुजानां ( for °तम् ) — ( L. 6956 ) G1 मतिर्मे विमलोज्ज्वला ( for ᵇ ) — ( L. 6960 ) D1 M1 शुभदं ( for शुभम् ) — After line 6960, D1 ins.

पावन त्रिपु लोकेषु विश्रुत पाण्डुनन्दन ॥
सुलभं धर्मबुद्धीनां पापिनामप्रकाशकम् ।
सर्वपापक्षयकरमायुरारोग्यदायकम् ॥
शिवस्य नीलकण्ठस्य शिवरात्रिव्रत चरन् ।
मातृत पितृतश्चैव द्विकोटिकुलसयुत ।
शिवलोकमवाप्नोति नारदेन प्रभाषितम् ॥
सद्गात्कामात्तथा स्नेहाद्भयाद्वा यो हि मानव ।
शिवरात्रिव्रत कृत्वा शिवेन सह मोदते ॥
पुत्रमित्रकलत्राणि धनानि कुरुनन्दन ।
दासीदासाश्च पशव शकटा धान्यसचया ॥
एतान्सर्वांस्तथा चान्याननुभूय नराधिप ।
स पश्चाद्द्विजो लोके सर्वमङ्गलसयुत ।
गन्धर्वैः स्तूयमानस्तु शिवलोके सुखी भवेत् ॥
शिवरात्रिप्रभावेन राजश्रेष्ठ सुखी भवेत् ॥
दण्डाद्राजभयात्सद्वारोग्यादद्वसकटात् ।
शिवरात्रिव्रते राजन्निराहारो हि मुक्तिभाक् ॥
रात्रौ जागरण कृत्वा शिव सपूज्य भक्तित ।
गन्धर्वै स्तूयमानस्तु शिवलोक स गच्छति ॥
चण्डीशस्य व्रत कृत्वा चण्डालोऽपि नराधिप ।
भक्त्या परमया युक्तो यानारूढो दिव व्रजेत् ॥
स्त्रीशूद्रादिजनैरन्यैर्नीचैरपि नृपोत्तम ।
कृत यैस्तु महाराज तैरिय जगती धृता ॥
विद्यमाने व्रते चास्मिन्सर्वकामफलप्रदे ।
गच्छन्ति निरय मूढा मर्त्या ह्येतन्महाद्भुतम् ॥
शिवरात्रिव्रतपरा शिवकीर्तनतत्परा ।
शिवलोकाधिपा प्रोक्ता पूज्यमाना मरुद्गणा ॥
शिवं गच्छति भूपाल यो नर कर्तुमिच्छति ।
शिवरात्रिव्रतमिद स गच्छेद्रक्षण पदम् ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकै ।
व्रतेनानेन राजेन्द्र मुच्यते नात्र सशय ॥
यस्त्वेतद्व्रतमाश्चर्यं कुरुते भक्तिसयुत ।
तद्धाम तेन पूतं हि तस्माद्व्रतमनुत्तमम् ॥
यत्रैव वर्तते राजस्तत्तीर्थं तत्तपोवनम् ।
तत्रैव धामिन सर्वे यान्ति सारूप्यतां शिवे ।
अस्मिञ्जन्मनि कौन्तेय व्रत परमपावनम् ।
एकं वा क्रियते येन जन्म तत्पावन भवेत् ॥
राजसूयसहस्रेण वाजपेयशतेन च ।
यत्फल प्राप्यते सद्भिर्व्रतेनानेन तद्भवेत् ॥
क्ष्माप्रदक्षिणे यत्तु सर्वतीर्थनिषेवणे ।
पुण्यक्षेत्राभिगमने कन्यादाने च यत्फलम् ।
ब्रह्माण्डकोटिदाने च शिवरात्रिव्रतेन तत् ॥
युधिष्ठिर उवाच ।
केन मार्गेण गाङ्गेय पूजनीयो महेश्वर ।
तद्व्रतानुष्ठानदान च ब्रूहि मे निम्नगासुत ॥
भीष्म उवाच ।
नारदेन यथा प्रोक्त तद्ब्रवीमि तवानघ ॥
प्रात काले समुत्थाय स्नात्वा वै वाग्यत शुचि ।
पुष्पाणि च विचित्राणि फलानि रसवन्ति च ।
आदाय मतिमान्मौनी जितक्रोधो जितेन्द्रिय ।
गृहं कृत्वा तु कौन्तेय कारयेच्छुभमण्डलम् ।
पञ्चकुम्भसमायुक्त नानापुष्पैरलङ्कृतम् ॥
इन्द्रादिलोकपालांश्च पूर्वादिषु च वाहयेत् ।
कुम्भेषु तेषु कौन्तेय पूजयेच्च यतो व्रती ॥
मध्यमे पूर्णकुम्भे तु देवदेव पिनाकिनम् ।
आवाह्य रुद्रसूक्तेन रुद्रं त गिरिजापतिम् ॥
अभिमन्त्र्य च तन्मन्त्रैर्वामदेवैरथापि वा ।
तेषु मन्त्रेष्वशक्तश्चेत्तत्र पञ्चाक्षरं परम् ॥
पञ्चाक्षरमहामन्त्रविद्यया धर्मनन्दन ।
य पूजयेन्महादेव स रुद्रपदमश्नुते ॥
तत्कुम्भतोयैर्भूतेशमभिषिच्य पिनाकिनम् ।
यस्मिन्मन्त्र सदा निष्ठस्तेनैव स्नापनं वरम् ॥
गन्धपुष्पैर्धूपदीपैर्वस्त्रैर्विविधभूषणै ।
बिल्वपत्रैर्महादेवमर्चयेच्च यतो व्रती ॥
नैवेद्य परमान्नैश्च पक्वभक्ष्यैश्च पायसै ।
दधिक्षीरैर्नालिकेरैर्नैवेद्य तु समर्पयेत् ॥
कर्पूरचूर्णसयुक्त पूगीफलसमन्वितम् ।

237** इदृश व्रतमुख्यं ते प्रवक्ष्यामि समासत ॥
शिवरात्रिव्रतमिद पवित्र पापनाशनम् ।
सर्वभाग्यप्रदं पुण्य सर्वलोकप्रसन्नयकम् (?) ॥
— (L 6961) M1 -वर्धनम् (for दायकम्) — (L 6964) M1 स्वर्ग (for शिव) — (L 6965) G(ed) लोभाद्वापि च मानव (for b) — (L 6968) G1 दासीदासा पशश्चैव शकटा-धान्यसचयात् — After line 6969 G1 ins
238** भक्त्या परमया युक्तो यानारूढो दिव व्रजेत् ।
— (L 6971) M1 ब्रह्म (for शिव) D1 मदीयते, G1 सुखी वसेत्, G2 सुखं वसेत् (for सुखी भवेत्) — G1 M1 om (hapl) line 6972 — (L 6973) G2 द्रोहाग्नेरसंकटात्, G(ed) लोभाद्रोगभयाच्च य (for b) — (L — (L 6976) M1 स्वर्ग (for शिव) — (L 6980) D1 ध्रुवम्, G1. 2 धुना (for धृता) — (L 6982) D1 ह्येतद्धि महन्मुनम् (for b) G2 om (hapl.) line 6983 — (L 6990) G(ed) तद्धामस्तेन पूतो हि (for a) — (L 6991) M1 तीर्थं तत्र तपोधन (for b) — D1 om (hapl) lines 6992 6993 — (L 6992) [illegible]
M1 -दानेन (for -दाने च) — (L 7000) G1 M1 मत्र [illegible] मार्गेण) — (L 7001) D1 व्रतानुष्ठानदानेन, M1 पूजानुष्ठानमानं च (for a) — (L 7006) D1 om (hapl.) lines 7006b 7009a G2 मण्डपम् (for °लम्) — (L 7008) D1 G2 -पालेश्च (for पालांश्चै) — (L 7009) G1 कुम्भतोयेषु राजेन्द्र (for a) — (L 7012) D1 वामदेवेन चापि वा (for

ताम्बूलमर्पयेद्धीमान्देवदेवस्य धर्मज ॥
मृत्युंजयमहामन्त्रैः परमान्नं हुनेद्व्रती ।
अष्टोत्तरसहस्रं तु तदर्धमथ वानघ ।
पादहीनं न कर्तव्यमक्षयं फलमिच्छता ॥
आज्यहोमं तथा कुर्यात्तिलहोमसहस्रकम् ।
प्रायश्चित्ताहुतीर्हुत्वा चरुतन्त्रं समापयेत् ॥
पुण्याहं ब्राह्मणैः सार्धं वाचयेत्प्रयतो व्रती ।
रुद्रसूक्तं जपेद्धीमान्होमादावन्ते युधिष्ठिर ।
अथ वा वामदेवं वा शान्तिसूक्तं तु घोषयेत् ॥
हाटकेन तु रौप्येण वाससा रत्नकुण्डलैः ।
आचार्यं पूजयेद्विद्वान्गोदानेन विशेषतः ॥
ब्राह्मणेभ्यो व्रती दद्याद्दक्षिणां तु विशेषतः ।
प्रदक्षिणनमस्कारैराशीर्भिः कृतमङ्गलः ॥
उपविश्यासने धीमानेतन्माहात्म्यमुत्तमम् ।
शृण्वन्पठन्वाचयंश्च वाग्यतः शृणुयाद्व्रती ॥
पुराणधर्मशास्त्रैश्च रात्रिशेषं समापयेत् ।
नृत्तगीतादिवाद्यैश्च तथा मङ्गलवाचकैः ॥
भेरीमृदङ्गपटहैर्निःसाणाद्यैश्च डिण्डिमैः ।
रात्रौ जागरणं कुर्याद्यावच्चन्द्रोदयावधि ॥
तत्पुरुषेण मन्त्रेण चन्द्रायार्घ्यं प्रदापयेत् ।
क्षीरोदार्णवसंभूतजटामण्डलवर्तिने ॥
गृहाणेमार्घ्यं मया दत्तं चन्द्रचूडामणे प्रभो ।
इति मन्त्रेण मतिमान्दत्त्वा चार्घ्यं पिनाकिने ।
नीलग्रीवेण मन्त्रेण रुद्रायार्घ्यं निवेदयेत् ॥
एवं कुर्याद्व्रती विद्वान्वैधं प्रतियामके ।
पारणादौ प्रकुर्वीत होमं निद्रान्पिनाकिने ।
होमान्ते बन्धुभिः सार्धं स्वयं भुञ्जीत वाग्यतः ॥
एवं कृत्वा विधानेन शिवरात्रिव्रतं शुभम् ।
शिवलोकमवाप्नोति नारदेन प्रभाषितम् ॥
य इदं कारयेन्नित्यं सर्वभाग्यकरं शुभम् ।
सर्वान्कामानवाप्यैव शिवलोकं स गच्छति ॥
यस्त्वेतच्छृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचिदिह लोके परत्र च ॥
वेदवादी भवेद्विप्रो राजा वा विजयी भवेत् ।
धर्मार्थकाममोक्षार्थी नरो यो भक्तिसंयुतः ।
यद्यदिच्छति धर्मात्मा तत्तदेति न संशयः ॥

युधिष्ठिर उवाच ।

कैः कृतं व्रतमेतद्धि के निन्दन्ति महत्फलम् ।
तन्मे कथय तत्त्वज्ञ कृपा मयि तवास्ति चेत् ॥

भीष्म उवाच ।

पुरा सुधांशुर्धर्मात्मा सर्वानन्दकरः प्रभुः ।
रूपलावण्यपूर्णोऽसौ कामी रूपमदोद्धतः ।
सौन्दर्यशेवधिं तारां गुरोर्भार्यामथाहरत् ॥
तच्छ्रुत्वा देवराजस्य पुरोधास्तपतां वरः ।
तमभ्रवीत्तथागत्य शीलं ते रूपमीदृशम् ।
आभिजात्यं भार्यमीयात्तस्मादेवं तु मा कृथाः ॥
तथेति मतिजग्राह ताराणामधिपो बली ।
पुनः कामयते कामी तज्ज्ञात्वा बृहतां पतिः ।
शापं ददौ महातेजाः क्षयीति नितरां भव ॥
तद्दोषपरिहारार्थं कावेरीसरितस्तटे ।
तपसा तोषयामास शंकरं लोकशंकरम् ॥
सुधांशोस्तपसा तुष्टः पार्वतीनायकः प्रभुः ।
प्रीतोऽस्मीति तमालिङ्ग्य शिवरात्रिव्रतं कुरु ।
इत्यब्रवीत्त्रिनेत्रोऽपि तत्रैवान्तरधीयत ॥
शिवाज्ञया तु तत्कृत्वा शिवमार्गेरतो गतः ।
शिरसा धारितस्तेन सद्यापि न मोदते ॥
इक्ष्वाकुकुलज श्रीमांस्त्रिशङ्कुर्नाम भूपतिः ।
कृत्वा व्रतमिदं राजन्सद्यापि दिवि वर्तते ॥
उत्तानपादपुत्रस्तु कृतेदं व्रतमीदृशम् ।
आरुह्य स्थानमितरभयो ध्रुवलोकमवाप्तवान् ॥
त्रिशङ्कुतनयो धीमान्हरिश्चन्द्रो महामतिः ।
वीरबाहुकभूयस्यैः प्राप्तवान्तु शिवागमात् ॥
श्मशाननिलयो राजञ्शिवरात्रिदिने शुभे ।
उपवासमत्तवरो ध्यात्वा कृतस्त्वमिदम् ॥
धारपुण्येन तमस्यर्थं रात्रौ जागरतत्परः ।
महाविष्णुमहेशानां कृपया च दिवं गतः ॥
पुण्यश्लोको नलो राजा कलिना तु प्रपीडितः ।
व्रतं कृत्वा शिवस्याशु प्राप्तवान्स्वपुरं नृप ॥
पञ्चपाण्ड्य प्रिया भार्या कृत्वा व्रतमनुत्तमम् ।
इति पुण्यमवाप्नोति सुरलोकस्य गुरवे ॥

---

*) —(L 7017) G1 M1 निद्रा (for निषद्य). —(L. 7020) D1 -पाकैश् (for -सकैश्). —(L. 7034) युधिष्ठिर। G(ed) यथाविधि (for विशेषतः). D1 दक्षिणा भक्तिसंयुता (for *). —(L. 7036) G1 त-माहात्म्यमनुत्तमम् (for *). —(L. 7037) D1 G1 नृप ; M1 यतः (for व्रती) — D1 om. lines 7040-7055. —(L. 7043) G(ed) शिवमरणभूषण (for *) — After line 7047, G(ed) ins :

239** गृहाणार्घ्यं मया दत्तं ...... ।
...... दयानिधे ॥

—(L 7045) G(ed) ...... (for ......). —G1 M1 om. (hapl.) lines 7046-7048. —(L. 7047) G(ed) -बालकम् (for *). — After line 7050, G1 M1 ins :

240** ...... ।

—(L. 7061) D1 G1 ...... (for *). —(L. 7063) D1 G1 ......, M1 ...... (for ......). D1 om. lines 7064-7074. —(L. 7066) G1 ...... [illegible] ...... M1 ...... (for ......). —(L. ......) D1 G1 ...... (for ......). —(L. 7090) G1 -...... (for ......).

गौतमस्तु महातेजा धर्मिष्ठस्तपतां वरः ।
कृत्वैवाहल्यया सार्धं शतानन्दमवाप्तवान् ॥

युधिष्ठिर उवाच ।

जमदग्निस्तथा चात्रि कृतवीर्यस्तु राघव ।
हरिं पुत्रत्वमापन्ना एते व्रतपरायणा ॥
शक्रो यम प्रचेताश्च धनदो दिशिवल्लभ ।
शिवरात्रिव्रत कृत्वा ककुभामधिपाभवन् ॥
ऋषयो राजशार्दूल मुनयो ब्रह्मवित्तमा ।
राजानो वैश्यमुख्याश्च शूद्राश्चान्ये नराधमा ।
शिवरात्रप्रभावेन शिवसारूप्यता गता ॥
शिवरात्रिव्रतमिद कृत यदि सुखप्रदम् ।
मृडानीपतिमीशान व्रतेनानेन तोषयेत् ।
स मुक्त सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
भक्त्या कृते व्रते चासिन्शिवरात्रौ महामते ।
विद्याधरध्रुवयोर्वित्त लभते नात्र सशय ॥
मार्जारमूषिकौ राजन्पुरेशानस्य सनिधौ ।
फलक्षीरादिहरणाच्चिहतौ तौ दिव गतौ ॥
चोरो वै धनलाभाय जाग्रद्वै शिवसनिधौ ।
निषूदितो राजभटै शिवलोकमवाप्तवान् ॥
गर्दभौ देवपूजार्थं गोधूमगुडधूपकान् ।
वाहयित्वा पुरा श्रान्तौ वणिजा सह धर्मज ॥
शिवरात्रिदिने रात्रौ सनिधौ निधनं गतौ ।
सदा शिवगणै सार्धं पूजितौ तौ दिव गतौ ॥
शिवरात्रिदिने राजन्माहात्म्य य शृणोति च ।
पितृमातृकुलैर्युक्तो रुद्रलोक स गच्छति ॥

Colophon

वैशपायन उवाच ।

बोधयित्वा तु पाञ्चालीं याज्ञसेनीं पतिव्रताम् । [7115]
स्थितं भीष्म महाभाग धर्मराजोऽब्रवीदिदम् ॥

युधिष्ठिर उवाच ।

गङ्गासुत नमस्तेऽस्तु पाण्डूना हितकृत्तम ।
श्रोतव्यमस्ति किंचिन्मे सर्वधर्मात्मक विभो ॥
सर्वेषामपि मासाना वत्सरेषु च यद्व्रतम् ।
हरे प्रियकर यच्च तन्मे त्व कृपया वद ॥

भीष्म उवाच ।

चातुर्मास्यव्रतं पुण्य श्रुत किं नु त्वयानघ ॥

वैशंपायन उवाच ।

बोधयित्वा तु पाञ्चालीं यज्ञपात्रीसमन्विताम् ।
प्रोक्त मया तु पाञ्चाल्या सर्वमङ्गलकारणम् ॥

युधिष्ठिर उवाच ।

पर्णशालासमीपे तु श्रुतमेतन्मयानघ ।
प्रसन्नममवत्तस्मान्मानसं मे नदीसुत ॥

वैशंपायन उवाच ।

सुखी भवेति तं चोक्त्वा भीष्मस्तु वदतां वर ।
आददे वचन धीमान्धर्मगर्भं यशस्करम् ॥
मासव्रत प्रवक्ष्यामि कार्त्तिक्यादिषु शोभनम् ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
आश्वयुक्कृष्णपक्षस्य चतुर्दश्या जनार्दनम् ।
ब्राह्म मुहूर्ते चोत्थाय स्मरेत्सत्त्वात्मक विभुम् ॥
तैलाभ्यङ्ग प्रकुर्वीत बन्धुभि सह धर्मज ।
अरुणोदयवेलायां कुर्यात्तात्कालिकीं क्रियाम् ॥
गायत्र्यादिजप कृत्वा सर्व वै स्नानपूर्वकम् ।

M1 -सभूत ( for विभवो ) —( L. 7082 ) D1 M1 पुत्रत्वं ( for भूयश्च ) —( L 7084 ) D1 G1 2 ध्यात्वा देव त्रियम्बकम् ( for ᵇ ) —( L 7094 ) G1 परेण हि, G(ed ) बलेन हि ( for -परायणा ) — ( L 7095 ) M1 वल्लभा ( for °भ ) G(ed ) धनश्च महातपा ( for ᵈ ) —( L 7096 ) G(ed ) प्रभवो ( for अधिपा ) D1 ककुभामधिपोऽभवत् ( for ᵇ ) —( L 7098 ) G1 नराधिपा , G(ed ) जनाधमा ( for न° ) — After line 7100 G(ed ) ins

241** अखण्डैश्वर्यमीशानो ददात्येव न सशय ।

—( L. 7103 ) G2 M1 शिवरात्रिमहामते ( for ᵇ ) —( L. 7107 ) D1 M1 जाग्रतो G1 2 जाग्रते ( for °द्वै ) G(ed ) देव ( for शिव ) —( L. 7109 ) D1 M1 धूपादि ( for गोधूम ) G1 2 सूपादिगुडगोधुमान् ( for ᵇ ) —( L. 7110 ) G2 परिश्रान्तौ ( for पुरा श्रान्तौ ) —( L 7112 ) G1 त्रिदिव ( for तौ दिव ) —( L 7113 ) G2 व्रते ( for दिने ) M1 रात्रौ ( for राजन् )

COLOPHON — *Sub-parvan* D1 G1 आश्चर्यपर्वणि शेषधर्मा , G2 M1 G(ed.) शेषधर्मा — *Adhy name* D1 G1 शिवरात्रिमाहात्म्यकथनम् , G2 शिवरात्रिमहिमानुवर्णनम् , G(ed) शिवरात्रिव्रतमाहात्म्यम् — *Adhy no* D1 54 , G1 2 M1 G(ed ) 53

( L. 7115 ) D1 G1 1 M1 यज्ञपत्नीं ( D1 M1 °त्नी ) समन्विताम् ( for ᵇ ) —( L 7116 ) D1 G1 2 M1 स्थिते मुहूर्ते विश्रा( G1 M1 °तं विश्र )न्य ( for ᵃ ) D1 G1 भीष्म धर्मसुतोऽब्रवीत् , G2 M1 भीष्म धर्म्य ( M1 भीष्म धर्मो ) वचोऽब्रवीत् ( for ᵇ ) — G1 M1 om the ref —( L 7118 ) D1 M1 -धर्मकर ( for धर्मात्मक ) G1 वच ( for विभो ) —( L 7119 ) G(ed ) मध्ये वरिष्ठ महाव्रतम् ( for ᵇ ) —( L. 7120 ) G(ed ) भवेद्धरिप्रीतिकर ( for ᵃ ) —( L 7121 ) G2 मया ( for त्वया ) — G2 om. lines 7123 7128 —( L 7123 ) M1 -कारकम् ( for °णम् ) —( L. 7125 ) G1 M1 तात ( for तस्मात् ) — Before line 7128 G1 M1 ins भीष्म उवाच —( L. 7128 ) G1 M1 कार्त्तिक्यादि शुभेक्षणे ( for ᵇ ) —( L. 7131 ) G1 स्मरेद्देवकिनन्दनम् , M1 °देवं जनार्दनम् ( for ᵈ ) —( L. 7133 ) D1 G1 M1 -काले तु ( for -वेलायां ) M1 कुर्यात्तात्कालिका क्रिया ( for ᵇ ) —( L 7134 ) G2 सम्यग् ( for सर्वं ) —( L.

स्नानधूपादिनैवेद्यैः पूजयेत्प्रयतो हरिम् ॥
भक्ष्यभोज्यादिनैवेद्यैः प्रीणयति केशवम् ।
तिलतैलप्रदीपैश्च सोऽश्वमेधफलं भवेत् ॥
कार्त्तिक्यां दीपदानं तु यः करोति हरेर्गृहे ।
स मुक्तः सर्वपापेभ्यो विष्णुसालोक्यमाप्नुयात् ॥
चतुर्दश्यां तु हरिणा कृष्णेन जगतीपते ।
नरको निहतो नूनमसुरो लोककण्टकः ॥
महीसुतेन तेनासौ प्रार्थितो यदुपुंगवः ।
दत्तवानभयोऽनन्तो वरं परमपावनम् ॥
विचिन्त्य सहसा राजन्नरको लोककण्टकः ।
सर्वलोकोपकारार्थं त्वया वाचमुवाच ह ॥
हे कृष्ण कमलाकान्त शङ्खचक्रगदाधर ।
महता दिव्यरूपेण मुक्तोऽहं भवता यतः ॥
ममास्मिन्मुक्तिदिवसे योऽभ्यङ्गस्नानतत्परः ।
यजति त्वां प्रयत्नेन तस्य नाकं ददस्व ह ॥
इमां चतुर्दशीं नाथ नरकाख्यां वदन्ति ये ।
पुत्रपौत्रादिसंयुक्ता जीविष्यन्ति कलौ युगे ॥
इत्युक्त्वा नरको धीमान्ववन्दे तं हरिं विभुम् ।
भविष्यति यथा प्रीतिस्तथा ते तमुवाच ह ॥
तस्माद्राजन्दिने तस्मिन्भक्ष्यभोज्यादिविस्तरैः ।
नैवेद्यैः पूजयेद्विष्णुं स भवेन्मुक्तपातकः ॥
अभ्यङ्गस्नानकृत्तस्मिन्ब्राह्मणानां कुरूद्वह ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
भूसुरान्भोजयेद्यस्तु चतुर्दश्यां शुभे दिने ।
तस्य विष्णुः प्रसन्नात्मा ददाति स्वपदं विभुः ॥
एकस्मिन्भोजिते विप्रे तद्दिने शुभदे नृप ।
वाजपेयफलं विद्धि साक्षात्कृष्णेन भाषितम् ॥
कार्त्तिक्यां नृप दर्शायां दीपदानपरो हरेः ।
एकं वा पञ्च चत्वारि तस्य पापं निहन्त्यति ॥
यः कुर्याद्दीपदानं तु हरेरेकं दिने दिने ।
मासमेकं स्वकैर्विष्णुलोकं व्रजेद्ध्रुवम् ॥
विशेषं तत्र वक्ष्यामि कार्त्तिक्यां राजसत्तम ।
पौर्णमासीति विख्याता हरेः प्रियकरा तिथिः ॥
दीपदानं वृषोत्सर्गमन्नदानं करोति यः ।
सर्वान्वंश्यान्समुद्धृत्य स विष्णुपदमश्नुते ॥
निगृह्य च बलिं दैत्यं तेन संप्रार्थितो विभुः ।
माददात्तस्मै वरं देवो मा भैषीरित्युवाच तम् ॥

बलिरुवाच ।

देवदेव जगन्नाथ प्रणतार्तिविनाशन ।
त्वद्भक्तिः शाश्वती मेऽस्तु पाताले निरयेऽपि वा ॥
कार्त्तिक्यां पौर्णमास्यां तु माघमासे सुरोत्तम ।
मेदिनीमिन्द्र कृपया त्वत्पूजां कर्तुमुत्सहे ॥
ममागमनकाले तु यो गेहं पूजयेत्सुधीः ।
संनिधौ तव दीपेन स वै मुक्तिं गमिष्यति ॥
या स्त्री पतिव्रता लोके गृहं दीपेन पूरयेत् ।
दीपं प्रदक्षिणं कुर्यात्सा भवेद्वै सुमङ्गला ॥
इत्युक्तो दैत्यराजेन देवदेवो जनार्दनः ।
तथेत्युक्त्वा तिरोभूतः सोऽपि पातालमभ्यगात् ॥
तस्मात्तं पूजयेद्विद्वान्हरिणा दत्तवैभवम् ।
हरिसायुज्यमाप्नोति हरिं संपूज्य भक्तितः ॥
कार्त्तिक्यां दीपदानेन ज्ञानवृद्धिर्भविष्यति ।
ज्ञानान्मोक्षमवाप्नोति तस्मात्तं पूजयेत्सुधीः ॥
य इदं पुण्यमाख्यानं कार्त्तिक्यां शृणुयान्नरः ।
सन्निमार्गेऽन्यतो लोकान्देवगन्धर्वसेवितान् ॥
अथ ऊर्ध्वं प्रवक्ष्यामि धनुर्मासे राजसत्तम ।
मार्तण्डे नृपशार्दूल पूजां वक्ष्ये हरेः शुभाम् ॥
धनुर्मासं गते भानौ प्रातरुत्थाय यो द्विजः ।
हरेः पूजां प्रकुर्वाणो लभते हरिमन्दिरम् ॥
धनुर्मासे हरेः प्रीतिं शुद्धार्थं शुद्धसंयुतम् ।
योऽर्पयेदाशु भक्त्या वै स विष्णुपदमश्नुते ॥
पुरा देवासुरे युद्धे सुरैः संप्रार्थितो हरिः ।
सुरार्थं प्रभाते शुद्धार्थं दैत्यानष्टानपन्दरे ॥
तदाप्रभृति लोकेऽस्मिन्विष्णुभक्ता जनार्दनम् ।
धनुर्मासे विशेषेण पूजां कुर्वन्ति मानवाः ॥
निशीथे कार्त्तिके मासि हरेर्नीराजनाद्यकम् ।
प्रभाते तु धनुर्मासे च कुर्यान्न तु सुनिश्चयः ॥

पुष्ये मासे च राजेन्द्र स्नानध्यानजपादिभि ।
दीपनैवेद्यपूजाभिर्नरो याति सुरालयम् ॥
माघस्नानं प्रशसन्ति तथा भूसुरतर्पणम् ।
नैवेद्यं दीपपुष्पाद्यैर्विष्णो कुर्वीत भक्तिमान् ॥
मेषसंक्रान्तिकाले तु य कुर्याद्द्विजभोजनम् ।
हरे पूजा च राजेन्द्र स विष्णुपदमश्नुते ॥
चैत्रे मासि सिते पक्षे विष्णुपूजापरायण ।
यो विप्र सतत भक्त्या पूजयच्च स मुक्तिभाक् ॥
वैशाखे च सिते पक्षे तृतीयाख्ये शुभे दिने ।
ब्राह्मणान्भोजयद्भक्त्या विष्णुलोक व्रजेद्ध्रुवम् ॥
वैशाख्या पौर्णमास्या तु शुद्धपानीयमुत्तमम् ।
दध्योदन नालिकेर हरेर्लोकप्रद शुभम् ॥
गुडोदन दधिद्रव्य छत्रचन्दनपादुका ।
ये प्रयच्छन्ति विप्रेभ्यो विष्णुलोक प्रयान्ति ते ॥
य इद धर्मचरित शृणोति सतत नर ।
सर्वपापविशुद्धात्मा याति विष्णो पद शुभम् ॥

Colophon

युधिष्ठिर उवाच ।

ज्येष्ठमासे तु यद्धर्मं वारयोग नदीसुत ।
श्रोतुमिच्छामि तत्त्वेन नात परतर हि मे ॥

भीष्म उवाच ।

ज्येष्ठमासे पौर्णमास्या गोपूजा कुरुते तु य ।
गोधनानि च सिध्यन्ति प्रापयन्ति दिवं हि तत् ॥
पूर्वमभ्यर्चिता गावो गापैः कृष्णप्रचोदितै ।
ददु पुण्यफल तेषा यत ते त्रिदिव गता ॥
गोषु ब्राह्मणमुख्येषु भक्तिमान्यो भवेत्पुमान् ।
प्रयाति हरिसालोक्य पुनरावृत्तिवर्जितम् ॥
योगनक्षत्रवारेषु यद्वृत्त तन्निबोध मे ॥
योगेषु च व्यतीपातो नक्षत्रं विष्णुदैवतम् ।
वारेषु भानुवारोऽसौ सोमवारो बहुप्रद ॥
तानि वक्ष्ये सुमुख्यानि व्रतानि व्रतिनां वर ।
व्यतीपातो महायोग सोमसूर्यसुत प्रभु ।
पापघ्नो रोगहारी च बहुभाग्यप्रदो नृणाम् ॥
व्यतीपाते पुण्ययोगे सुस्नात कृतपूजक ।
ब्राह्मणान्वरयद्भक्त्या त्रीन्वाथ चतुरोऽपि वा ॥
श्रोत्रियान्हरिभक्तांश्च विष्णुपूजारतान्सदा ।
पायस कारयद्भक्त्या सूक्ष्मगोधूमतण्डुलै ॥
मिश्रित शुद्धपयसा गवां चैवाज्यसमितम् ।
श्वेतशर्करया सम्यक्सिधित जलवर्जितम् ॥
कदुष्ण तु समानीय हरेर्नैवेद्यमर्पयेत् ।
गोधूमपरमान्नैश्च हरेर्नैवद्यमर्पयेत् ।
नैवद्यशेषं तत्सर्वं ब्राह्मणान्भोजयेद्व्रती ॥
ततस्तान्गन्धपुष्पाद्यैरलङ्कृत्य समाहित ।
दद्याद्विशेषतस्तेषा सताम्बूला तु दक्षिणाम् ॥
यस्त्वेव कुरुते दानप्रतिवर्ष तु भक्तित ।
स मुक्त सर्वदारिद्र्यात्सौभाग्य सुखमश्नुते ॥
भोगार्थी भोगमाप्नोति स्वर्गार्थी स्वर्गमश्नुते ।
परमान्नस्य दानेन सोऽक्षय सुखमश्नुते ॥
प्रत्यक्षमत्रलोकेऽस्मिन्दातॄणा तु सुखप्रदम् ।
मन्त्रयुक्तेन दानेन भोक्तॄणा तु दरिद्रता ॥
तस्मात्त्वमपि राजेन्द्र व्यतीपातव्रत कुरु ।

---

M1 प्रीतिर् G(ed) प्री-ये (for प्रीति) — G1 M1 om. lines 7193 7195 — (L 7198) D1 G3 पूजने (for °नम्) — (L. 7200) D1 तैषमासे (for पुष्ये मासे) G(ed) स्नान ध्यान (for माघस्नान) D1 om lines 7201-7203 — (L. 7203) D1 नैवेद्यधूप पाद्यैर् (for °) D1 G3 विष्णो कुर्यात्स मुक्तिभाक् (for [b]) — (L 7207) D1 M1 यो (M1 स) विप्र, G3 गोविन्द (for यो विप्र) D1 G1 M1 करोति स च मुक्तिभाक्, G3 विष्णुलोक मजकुतम् (for [b]) — G3 om lines 7208-7209 — (L 7210) G1 वैशाखे शुक्लपक्षे तु, M1 °खे शुद्ध पौर्णिम्या (for °) — (L 7211) G3 M1 शुद्धम् (for शुभम्) — (L. 7212) G(ed) गुडोदके च दध्यन्न (for °) D1 छत्र च नवपादुका (for °) — (L. 7213) D1 G1 प्रयान्त्यपि (G1 °मी); M1 व्रजन्त्यमी (for प्रयान्ति ते) — (L. 7214) G(ed) य इम पुण्यमाख्यान (for °) M1 नृप (for नर) — (L 7215) D1 पर पदम् (for पद शुभम्)

Colophon — *Sub parvan* D1 G1 आश्चर्यपर्वणि शेष धर्मा, G3 M1 G(ed) शेषधर्मा — *Adhy name* G(ed) कार्तिकमाहात्म्य कथनम् — *Adhy no* D1 55 G1 3 M1 G(ed) 54

(L 7216) G(ed) ज्येष्ठ (for शेष) D1 यद्धर्मो, G(ed) यो धर्म (for यद्धर्म) G(ed) कुतो नयति वै न्विम् (for [b]) — For line 7217, G(ed) subst.

243** नमहं श्रोतुमिच्छामि कृपया वद सुव्रत ।

— (L. 7219) D1 गोस्नानानि (for गोध°) — For line 7219 G(ed.) subst

244** गोस्नानफलमिद्धि स्यात्सा प्रापयानि वै द्विजम् ॥

— (L 7220) अर्चयन्ति च गोकुलं, G1 3 M1 अर्चन्ति गोकुले (M1 °ले) गोपा (for °) D1 G1 3 M1 गोपीनाथेन चोदिता (for [b]) — (L 7221) D1 G1 3 M1 वैकुण्ठम् (D1 °ठं तु) वन गता (for [b]) — (L 7222) D1 G1 3 कुरुते; M1 करोति च (for भवेत्पुमान्) — For line 7224 G(ed.) subst

245** तत्र योगान्कि सर्वं निबोध भरतर्षभ ।

— (L 7225) G(ed) योगो प्राप्तो (for योगेषु च) G3 M1 नक्षत्रे (for °त्र) — (L 7226) G(ed) सोमो तौ (for °वारोऽसौ) G(ed) सर्वाभीष्टफलप्रदौ (for [b]) — G(ed) om lines 7227-7229 — (L. 7230) G(ed) सुस्नात प्रयत शुचि (for [b]) — D1 G1 3 M1 om lines 7231 7236 — (L 7238) G(ed.) तान्विप्रान् (for ब्राह्मणान्) M1 सुधी

अनेन ते भवेत्सर्वमत्र कार्या विचारणा ॥
यस्त्वेकवत्सरमपि ज्येष्ठे त्वेवं करोति य ।
सोऽपि लब्ध्वा परां कीर्तिमक्षयं सुखमश्नुते ॥
पुण्ये श्रवणनक्षत्रे ह्युपवासपरास्तु ये ।
ते यान्ति हरिसालोक्यं सत्यं नारदभाषितम् ॥
पुत्रदं कामदं विद्धि मोक्षदं भरतर्षभ ।
सततं कुर्वतां भक्त्या श्रवणं हरितोषणम् ॥
एकादशीव्रत यद्वद्द्वादश्यां पूजनं हरे ।
तथा कुर्वीत मतिमान्श्रवणान्तमनुत्तमम् ॥
पुण्ये श्रवणनक्षत्रे द्वादशी यदि संभवेत् ।
तत्रोपवासं कुर्वीत कोटियज्ञफलं लभेत् ॥
एकादशी यथा प्रोक्ता हरिविप्रप्रपूजने ।
तथा च विष्णुनक्षत्रव्रतं कुर्वीत बुद्धिमान् ॥
अब्दत्रयं षडब्दं वा ह्येकाब्दमथ वापि वा ।
श्रवणव्रतं प्रकुर्वाणो विष्णुसायुज्यमाप्नुयात् ॥
श्रवणव्रतस्य माहात्म्यमेकादश्यास्तथा नृप ।
न पश्यामि च शास्त्रेषु कुरु तस्मात्कुरूद्वह ॥
भानुवारे द्विभुक्तं तु ये कुर्वन्ति नराधमा ।
आब्रह्मकल्पपर्यन्तं वसन्ति क्षारकर्दमे ॥
एकभुक्तं तु मतिमान्कुर्याद्रविवासरे ।
स भुक्त सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
संक्रान्तौ रविवारे च व्यतीपाते च पर्वसु ।
नरकं याति राजेन्द्र निशिभुक्पापकर्मकृत् ॥
आदित्यस्योदयात्पूर्वं तद्वारे स्नाति यो नर. ।
तत्पूर्वसप्तवारेषु कृतं पापं विनश्यति ॥
सर्वव्याधिहरं पुण्यमायुरारोग्यवर्धनम् ।
भानुवारे व्रतमिदं तथा ब्राह्मणभोजनम् ॥
भानुवारे प्रसन्नात्मा हरि सर्वगत प्रभु ।
व्रतानां फलदो नित्यं तस्मात्तं पूजयेत्सुधी ॥
अथ वै संप्रवक्ष्यामि सोमवारव्रतं शुभम् ।
एकभुक्तेन नक्तेन शिव प्रीतो भवेद्ध्रुवम् ॥
उपवासेन राजेन्द्र स्वपदं संप्रयच्छति ।
पुनाति सकलान्वंश्यानुपवासपरो नर ॥
उमाकान्तं प्रतिष्ठाप्य स्थण्डिले शुभदर्शने ।
रुद्रसूक्तेन मन्त्रेण ह्यभिषेकं प्रकल्पयेत् ॥
अथ वा वामदेव्याद्यैर्मन्त्रैरभ्यर्चयेच्छिवम् ।
गायत्र्यादिमहामन्त्रैस्तं प्रयत्नेन पूजयेत् ॥
उपवासव्रतपर स सायाह्नुण्यवारिषु ।
करवीरादिकै पुष्पै सम्यग्देवं प्रपूजयेत् ॥
नृत्तगीतादिवादित्रै शङ्खदुन्दुभिनिस्वनै ।
पुराणश्रवणैर्दीपै पूजयेत्तं प्रयत्नत ॥
वस्त्रमण्डनमुक्ताभि पूजनाभि सुरेश्वरम् ।
भक्तिमान्पूजयेद्राजन्विसर्जयेत् न कारयेत् ॥
अशक्तश्चो ह्येकभुक्तेन नक्तेन दिवि पूजनम् ।
उपवासात्तु सायुज्यं लभते नात्र संशय ॥
देवभूतपर्वं साम्राज्येनानेन शोभिते ।
यं यं कामयते कामं त तमाप्नोति निश्चितम् ॥
व्रतानामपि सर्वेषां दानानां तपसां तथा ।

(for व्रती). — D1 G1 2 M1 om lines 7239-7241. — (L. 7243) G(ed) अन्ते विष्णो पदं व्रजेत् (for [d]). — G(ed) om. line 7246 — (L. 7247) G2 व्यतीपाते; G(ed.) शुचावेतद् (for व्यतीपात-) — G3 om. lines 7241-7250. — After line 7248, D1 G1 M1 ins :

246** त्रीणि पञ्च तु सप्ताष्टौ समा कुर्वीत यो नर ।

D1 M1 cont. :

247** व्यतीपातव्रतमिदं तेऽक्षय्यं सुखमाप्नुयु ।
[ M1 सोऽक्षय्यं व्रतमश्नुते (for [d]) ]

— After line 7255, G1 ins :

248** श्रवणव्रतमेतद्धि कुरुते भक्तिमान्नर ।

— (L. 7256) G(ed) द्वादशि महाभाग (for [c]). D1 M1 श्रवण व्रतमुत्तमम्; G(ed.) श्रवणर्क्षेऽनघात्मज (for [d]) — (L. 7257) G3 M1 पुण्यश्रवणनक्षत्रे (for [c]). — (L. 7259) G1 -प्रपूजने (for °ने) — (L. 7261) G1 [ए]कान्दम् (for [ए]का- ब्दम्). — For line 7264, G(ed) subst. :

249** व्रतमेतत्र न पश्यामि कार्यदमनुत्तमम् ॥

— (L. 7270) G1 दिवा भुक्तिं राजेन्द्र (for [c]). G(ed.) निशि भोक्ता न संशय (for [d]). — (L. 7272) D1 G1 M1 सर्वोद्दिष्टो (D1 °ष्टे°) वारे; G1 पूर्वेद्युश्च वारेषु (for [c]). D1 G1 2 M1 पातकं (G2 °तकं) तत्क्षणाद्धन्ति (for [d]). — (L. 7273) D1 आयुरैश्वर्यवर्धनम् (for [b]). — (L. 7274) M1 भानुव्रतमिदं महत् (for [c]) G(ed) सर्वकामविनिश्चितम् (for [d]). — (L. 7276) D1 G1 M1 विशेषं (for नित्यं). D1 व्रतम्; M1 व्रती (for सुधी) G2 तस्मात्तं परिपूजयेत् (for [d]). — (L. 7277) D1 G1 M1 अत पर (for अथ वै स-). — (L. 7278) M1 राजेन्द्र (for नक्तेन). G(ed) लभते फलं महत् (for [c]). M1 सोम (for शिव). — (L. 7279) D1 G1 स्वर्गं (for स्वपदं). — For line 7279, G(ed) subst. :

250** तथोपोष्य शिवा तस्मै दिव्यलोकप्रदायक ।

— (L. 7280) D1 वंशान् (for वंश्यान्). G1 नरो (for नर). — D1 om. (hapl.) lines 7283-7284 — (L. 7283) G1 M1 तत्स्थाने विन्यसेत् (for [d]). — (L. 7288) G1 पुराणश्रवणे दीपैश्च (for [c]). — (L. 7289) D1 सर्वनाभि; G(ed.) पूजयित्वा (for पूजनाभि). — (L. 7290) G1 भक्त्या च (for भक्तिमान्). G(ed) विसृजेत् (for राजन्). — (L. 7291) D1 अशक्तो वै; M1 नक्तं च (for नक्तेन). G(ed) नक्तं दिवा पूजयेच्च शिव (for [d]). — (L. 7293) G1 भूलोके (for भू°). G1 2 तस्य (for °ते). — After line 7294, D1 ins :



२ हरिवंश

कृष्णे भक्तिर्यदि भवेत्तत्सर्वं सफलं भवेत् ॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
श्रीकृष्ण विष्णो नृहरे मुरारे
प्रद्युम्न संकर्षण वासुदेव ।
अनानिरुद्धामलविश्वरूप
त्वं पाहि नः सर्वभयादजस्रम् ।

Colophon.

जनमेजय उवाच ।

कस्य नामानि पुण्यानि कीर्तनीयानि नित्यशः ।
दैवतानां च सर्वेषां कस्य भक्तो विशिष्यते ॥
कस्यायुधानि धार्याणि कथं नित्यं प्रपूज्यते ।
नृणां भवति कैवल्यं कस्य नामप्रकीर्तनात् ॥

वैशंपायन उवाच ।

अमुमर्थं पुरस्कृत्य सपृष्टो धर्मसूनुना ।
भीष्मो भागवतश्रेष्ठश्चिरं ध्यात्वा जगौ वचः ॥

भीष्म उवाच ।

कैलासशिखरे रम्ये देवी देवं महेश्वरम् ।
प्रणम्य शिरसा शंभुं पार्वती वाक्यमब्रवीत् ॥

पार्वत्युवाच ।

सर्वज्ञस्त्वं जगत्साक्षिश्चराचरगुरुः पिता ।
सर्वलोकेश्वरः साक्षात्सृष्टिस्थित्यन्तकारणम् ॥
वैष्णवानां च माहात्म्यं श्रोतुमिच्छामि शंकर ।
प्राकृतानां च हेयत्वं यथार्थं वद शंकर ॥

ईश्वर उवाच ।

साधु साधु महादेवि साध्वीनां च हितैषिणि ।
वैष्णवानां च माहात्म्यं तव वक्ष्यामि सुमते ॥
शङ्खचक्राङ्कितान्भक्तान्यः पूजयति मानवः ।
स साक्षाद्विष्णुसामीप्यं लभते नात्र संशयः ॥
विष्णुचक्राङ्कितं विप्रं यो भूमावभिवादयेत् ।
ललाटे सत्पांसूनां संख्या यावति यावती ।
तावत्समाः स भूपाल ब्रह्मलोके महीयते ॥
सगोत्रं यद्यपि श्राद्धे चक्राङ्कितभुजं वदत् ।
स साक्षाद्विष्णुसायुज्यं द्विजः प्राप्नोत्यसंशयः ॥
शङ्खचक्राङ्कितं विप्रं दृष्ट्वा यो ह्लादितो भवेत् ।
स पुण्यलोकमाप्नोति ऐहिकं सुखमश्नुते ॥
चक्राङ्कितानां नामानि यो वदेद्भक्तिमान्नरः ।
सर्वपापविनिर्मुक्तः स याति परमं पदम् ॥
चक्राङ्किताय विप्राय यो भक्त्यान्नं ददाति च ।
अब्दसंख्यानि वर्षाणि ब्रह्मलोके महीयते ॥
विष्णुभक्ताय विप्राय चक्रचिह्नाय मानवः ।
गोचर्ममात्रं यो दद्याद्भूमिं स्यात्स तु राज्यभाक् ॥
विषुवायनसंक्रान्तिपूपरागे तथा रवेः ।
चक्राङ्किताय विप्राय दानान्मोक्षमवाप्नुयात् ॥
विष्णुचक्राङ्कितं विप्रं गन्धपुष्पादिभिर्नरः ।
पूजयित्वा महादेवि विष्णुलोकमवाप्नुयात् ॥
विष्णुचक्राङ्कितं विप्रं विष्णुमूर्तिमिव स्मरेत् ।
सोऽपि विष्णुमयो भूत्वा वैष्णवीं गतिमाप्नुयात् ॥
अभितप्तेन चक्रेण बाहुमूले तु लाञ्छिताः ।
दहन्ति सर्वपापानि तूलराशीनिवाग्नयः ॥
यस्मिंश्चक्राङ्किता विप्रा वसन्ति नरपुंगवाः ।
तद्देशवासिनः सर्वे वैष्णवत्वं भजन्ति वै ॥
विष्णुचक्राङ्कितो विद्वान्यस्मिन्देशे वसेत्सुखम् ।
स देशो मत्प्रियः पुण्यो वैष्णवानामतिप्रियः ॥
विष्णुभक्तिरता मुख्याः शङ्खचक्राङ्किता द्विजाः ।

---

251** य इदं पुण्यमाख्यानं शृणोति यदि भक्तिमान् ।
तस्य विष्णुः प्रसन्नात्मा सर्वान्कामान्प्रयच्छति ॥
— M1 om lines 7297–7298. — After line 7298 G3 ins

252** इति पुंसां हितं विष्णोर्भक्तिश्च नवलक्षणा ।
— (L. 7301) G(ed.) -विश्वमूर्ते (for °रूप)

Colophon — Sub-parvan D1 आश्चर्यपर्वणि शेषधर्मा° G1, 2 M1 G(ed.) °शेषधर्मा — Adhy. name G1 चारमंत्रम्, G(ed.) भागवतनामिमाहात्म्यम् — Adhy. no D1 56, G1, 2 M1 G(ed.) 55

G3 om. lines 7303–7401 — (L. 7304) G1 देवतानां च सर्वासां (for °) — (L. 7308) D1 G1 M1 शुभां (for वचः) — (L. 7310) D1 G1 M1 देवी देवेशं (for रम्ये देवी देवं) — D1 महेश्वरः (for ईश्वरः) — (L. 7318) D1 मृत्स्नाप्नोति नियतः (for °) — D1 om. lines 7319–7325 — For lines 7319–7321 G1 M1 subst.

253** ललाटे पांसुसंख्यानि ब्रह्मलोके महीयते ॥

विष्णुचक्राङ्कितान्दृष्ट्वा यो मुत्थाय कृताञ्जलिः ।
स स्वकं कुलमुद्धृत्य ब्रह्मलोके महीयते ॥
चक्राङ्कितभुजा यस्मिन्पङ्क्तिमध्ये तु भुञ्जते ।
सा पङ्क्तिः स्वर्गलोके च देवपङ्क्तिषु पूज्यते ॥
अष्टके मासि पित्रोश्च चक्राङ्कितभुजं वरेत् ।
दीत्वा कुलमुद्धृत्य ब्रह्मलोके महीयते ॥
[(L. 6) M1 अष्टके मासिके पित्रोः (for °)]

— For line 7325, G1 M1 subst.

254** परमानन्दमाप्नोति किं पुनस्त्वैहिकं फलम् ।
— (L. 7328) D1 यो भक्त्या (for विप्राय) D2 स्वभार्यं ददाति च (for °) — For line 7331 D1 M1 G1 subst.:

255** गोचर्ममात्रभूमिं तु दत्त्वा राज्यमवाप्नुयात् ।
— (L. 7332) D1 G1 M1 अयने विषुसंक्रान्त्या (for °) — (L. 7333) D1 M1 विदुषे (for विप्राय) — G1 om. lines 7334–7351. D1 om. lines 7336–7337 — (L. 7339) D1 M1 ईश्वरेण समर्पिते (for °) — (L. 7341)

क्रीडार्थमपि यद्भूयु स धर्मः परमो मत ॥
यस्मिन्देशे कृतस्नाना वैष्णवाश्चक्रलाञ्छिता ।
तस्मिंस्स्नात्वं प्रकुर्वीत विष्णुलोकमवाप्नुयात् ॥
यस्तु पापप्रसक्तोऽपि विष्णुभक्तस्य भक्तित ।
पादप्रक्षालनं कुर्यात्तदात्मशुद्धिरेव स ॥
चक्राङ्किताय महते विष्णुभक्ताय धीमते ।
भिक्षामात्रप्रदानेन वैष्णवीं गतिमाप्नुयात् ॥
विष्णुभक्ताय विप्राय महादेवि महात्मने ।
माषमात्रप्रदानेन मुक्तिं यान्ति हि मानवा ॥
सर्वभूतदयायुक्त वैष्णव द्वेष्टि यो नर ।
स चण्डालो महादेवि रौरव नरक व्रजेत् ॥
ब्रह्महत्या सुरापान स्तेय गुर्वङ्गनागम ।
चक्राङ्कितस्य निन्दा च पञ्चैते स्वतिपातका ॥
य पुत्र पितर द्वेष्टि त विद्यादन्यरेतसम् ।
विष्णुभक्त तु यो द्वेष्टि त विद्यादन्यरेतसम् ॥
किं तस्य बहुभि शास्त्रै किं तस्य बहुभि श्रुतै ।
विष्णुभक्तिविहीनस्य तपसा किं प्रयोजनम् ॥
तीर्थस्नानफल नास्ति महादानफल तथा ।
अवैष्णवस्य विप्रस्य सर्वं शाधाद्विनश्यति ॥
यथा दारुमयो हस्ती यथा चर्ममयो मृग ।
अवैष्णवस्तथा विप्रस्तथा व्यर्थो भविष्यति ॥
रूपलावण्यसयुक्ता महाकुलोद्भवा द्विजा ।
अवैष्णवा न शोभन्ते निर्गन्धा इव किंशुका ॥
शरीरशोषण व्यर्थं कृच्छ्रचान्द्रायणादिभि ।
विष्णुपादाम्बुजध्यानहीनस्य पुरुषस्य तु ॥
विद्याविनयसपन्नो विशालकुलसभव ।
विष्णुभक्तिविहीनो यश्चण्डालसदृशो भवेत् ॥
यस्मिन्देशे दुरात्मान प्राकृता पापकारिण ।
वसन्त्यज्ञानिनो मूढास्त देश परिवर्जयेत् ॥
शिखा यज्ञोपवीत च चक्रचिह्न च कुण्डले ।
ऊर्ध्वपुण्ड्राणि वस्त्राणि दण्ड चैव कमण्डलुम् ॥
एतानि धारयेद्विप्र शुक्लदन्तो दृढव्रत ।
सात्त्विक भावमास्थाय स्थिरचित्तो भवेत्सदा ॥
सम शत्रौ च मित्रे च तथा मानावमानयो ।
शीतोष्णसुखदु खेषु सम सङ्गविवर्जित ॥
अनपेक्ष शुचिर्दक्ष उदासीनो गतव्यथ ।
सर्वारम्भपरित्यागी विष्णुभक्तो विधीयते ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षते ।
तुल्यनिन्दास्तुतिर्मौनी सतुष्टो येनकेनचित् ।
अनिकेत स्थिरमतिर्विष्णुभक्तो विधीयते ॥
शङ्खचक्रधर देव पीताम्बरधर हरिम् ।
सर्वग मनसा ध्यायन्य स वैष्णव उच्यते ॥
वैष्णव पुण्यकर्मा च लोकाना हितकामद ।
तस्मात्सर्वेषु कालेषु पालयन्त्यखिल जगत् ॥
नित्य पवित्र पूतात्मा वैष्णव पापनाशन ।
शुद्धस्वरूपी भवति सदा मत्स्मरणाद्वरे ॥
हृत्पद्मकर्णिकामध्ये वैष्णवस्य महात्मने ।
चिदानन्दमयो विष्णु प्रसन्नो भवति ध्रुवम् ॥
वैष्णवस्य तु विप्रस्य विष्णु सर्वगतो विभु ।
चिदानन्दमयो देवि सानिध्य कुरुते स्वयम् ॥
नित्य सर्वगत स्थाणुरचलोऽय सनातन ।
अरूपी बहुरूपी च चित्स्वरूपी प्रकाशते ॥
भक्तियोगेन पापानि दह्यन्ते वैष्णवोत्तमै ।
शातकुम्भस्य मालिन्यमग्निना दह्यते यथा ॥
श्रवण कीर्तन विष्णो स्मरण पादसेवनम् ।
अर्चन वन्दन दास्य सख्यमात्मनिवेदनम् ।

M1 तद्देशोत्पन्नवस्तूनि ( for ᵃ ) and लभन्ति ( for भजन्ति ) D1
—( L. 7344 ) D1 M1 श्रुता विप्रा ( for रता गुरया ) D1
—( L. 7345 ) D1 क्रीडार्थमाचरन्त्यद्वै ( for
नरा ( for द्विजा ) —( L. 7347 ) D1 विष्णुलोकजिगीषया ( for ᵇ ) D1
ᵃ ) —( L 7349 ) D1 M1 बाह्ये शुद्धि
सन्निधौ ( for भक्तित ) —( L 7349 ) D1 om lines
( M1 ह्यात्मशक्ति ) करोति च ( for ᵇ ) — D1 om lines
7350–7351 —( L 7352 ) M1 ह्यात्मशुद्धि करोति च ( for
ᵇ ) — G1 om lines 7356–7358 —( L 7359 ) D1
M1 चक्राङ्कित ( for विष्णुभक्त ) —( L. 7363 ) D1 G1 तपसा
किं प्रयोजनम् ( for ᵇ ) — G1 om line 7365 —( L
7369 ) D1 रहितस्य नरस्य च ( for ᵃ ) — After line 7372,
D1 M1 ins

256** अवैष्णवो दुराचार पापानामाकर खल ।
पापाचारी दुरात्मा स ससार्ग परिवर्जयेत् ॥
अवैष्णवस्य ससर्गो दौर्भाग्यं करोति च ।
तस्मात्प्राकृतससर्गं वर्जयेद्ब्राह्मणोत्तम ॥

— G1 om. lines 7373–7375 — After line 7378, D1
ins

257** पश्येज्जगदिद सर्वं विष्णुबुद्ध्या न चान्यथा ।

— M1 om lines 7382–7384 — After line 7386, G1
ins

258** तीर्थस्नानफल नास्ति महादानफल तथा ।

— G1 om lines 7387 7392 —( L 7387 ) D1 M1 भूतभूत पवि
-त्कारक ( for -कामद ) —( L 7389 ) D1 गृध्र ( for शुद्ध- ) D1
ह्यात्मा ( for ᵃ ) —( L 7390 ) D1 लोके सकीर्य केशवम्, M1
M1 सुख्यात्मा ( for भवति ) D1 लोके सकीर्य केशवम्, M1
लोकश कीर्त्य केशवम् ( for ᵇ ) —( L 7393 ) D1 M1 प्रत्यहं
कुरुते मया ( for ᵇ ) — After line 7394, D1 G1 M1 ins .

259** अनर्घ्यकुम्भस्य दीपरूपो यथानघे ।
प्राकृतानि शरीराणि प्रकाशयति सर्वग ॥
[ ( L 1 ) G1 वत्सस्य ( for कुम्भस्य ) ]

—( L 7396 ) D1 विश्वरूपी ( for चित्स्व ᵃ ). M1 प्रजायते ( for
प्रकाशते ) —( L. 7397 ) D1 G1 M1 दहत वैष्णवोत्तम ( for
ᵇ ) —( L. 7398 ) D1 M1 दोषोऽयम् ( for मालिन्यम् ),

इति पुंसां हिता विष्णोर्भक्तिश्च नवलक्षणा ॥

युधिष्ठिर उवाच ।

श्रुतं सर्वमशेषेण नदीसुत पितामह ।
इदानीं श्रोतुमिच्छामि भगवद्भक्तलक्षणम् ॥

भीष्म उवाच ।

विष्णुपूजासु निरता विष्णुनामपरायणाः ।
विष्णुभक्तेषु निरतास्ते वै भागवतोत्तमाः ॥
तत्कथाश्रवणे सक्ताः सत्कर्मसु सदोद्यताः ।
साधुसेवां प्रकुर्वाणास्ते वै भागवतोत्तमाः ॥
मानावमाने समतामतिर्येषां सदा भवत् ।
शत्रौ मित्रे तथा चेष्टे ते वै भागवतोत्तमाः ॥
मातापित्रोर्गुरौ ये तु महार्चनपरायणाः ।
यतिसेवापरा ये च त वै भागवतोत्तमाः ॥
वैश्वानरे तथा भानौ गायत्र्यां वैष्णवे तथा ।
येषामष्टाक्षरे भक्तिस्ते वै भागवतोत्तमाः ॥
दाने जपे तथा विष्णौ तथा श्रोत्रियभोजने ।
पूजने समतिर्येषां ते वै भागवतोत्तमाः ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमाः ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सततं भक्तिस्ते वै भागवतोत्तमाः ॥
सत्कथाश्रवणे सक्ताः सत्कर्मसु सदा रताः ।
साधुसेवां प्रकुर्वाणास्ते वै भागवतोत्तमाः ॥
एकादशीव्रतपरा माघस्नानरतास्तु ये ।
प्रातःस्नानरता ये च ते वै भागवतोत्तमाः ॥
पुराणपाठका ये च पुराणश्रवणे रताः ।
सद्धक्तरि प्रिया ये च ते वै भागवतोत्तमाः ॥
आत्मवत्सर्वभूतानि ये पश्यन्ति नरोत्तमाः ।
मानेऽवमाने च समा मतिर्येषां सुशोभना ॥
शत्रौ मित्रे तथा द्वेष्ये ते वै भागवतोत्तमाः ।
अदाम्भिका गतासूयास्ते वै भागवतोत्तमाः ॥
स्नाने जपे तथा होमे तथा श्रोत्रियभोजने ।
पूजने सन्मतिर्येषां ते वै भागवतोत्तमाः ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमाः ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सततं भक्तिस्ते वै भागवतोत्तमाः ॥
वेदाध्ययनसंपन्नाः सदा शास्त्रविशारदाः ।
पञ्चयज्ञपरा नित्यं ते वै भागवतोत्तमाः ॥
विशुद्धज्ञानसंपन्ना निर्मलाः कर्मभिः शुभैः ।
एकादशीव्रतपरास्ते वै भागवतोत्तमाः ॥
प्रातःस्नाने मतिर्येषां गायत्र्यां च तथा रवौ ।
अग्नौ विप्रे तथा देवे ते वै भागवतोत्तमाः ॥
दुःखिता परदुःखेभ्यः प्रहृष्टाः परसंपदा ।
दयावन्तो हि भूतेषु ते वै भागवतोत्तमाः ॥
चराचरात्मकं विश्वं विष्णुमायाविनिर्मितम् ।
विष्णुरूपेण पश्यन्ति ते वै भागवतोत्तमाः ॥
देवद्विजगुरुप्राज्ञान्पितॄंश्च दिने दिने ।
अर्चयन्ति सदा भक्त्या ते वै भागवतोत्तमाः ॥
यतीनां सद्गृहीनानां व्रतिनां ब्रह्मवादिनाम् ।
शुचीनामविपन्नानां विषयेषु निरन्तरम् ।
नारायणे जगद्धाम्नि सदा सम्यक्मानसाः ।
सत्कर्मनिरताः शान्तास्त्यागाशापरिवर्जिनः ।
तत्कथाश्रवणे सक्ता वेदान्तनिरताश्च ये ।
विद्यादानरता ये च शास्त्रेषु निरताश्च ये ।
पौरुषेण च सूक्तेन विष्ण्वर्चनपरायणाः ।
सालग्रामार्चनपराः सदा संकल्पवर्जिताः ।
रविसूक्तपरा ये च ते वै भागवतोत्तमाः ॥
संमार्जनरता ये वै विष्णुवेश्मनि नित्यशः ।
दीपदानरताश्चैव ते वै भागवतोत्तमाः ॥
रुद्रं रुद्राभिषेकेण प्रीणयन्ति च ये द्विजाः ।
प्रयान्ति हरिसामीप्यं विष्णुभक्ता भवन्ति च ॥

—(L. 7401) M1 हितं (for हिता) M1 भक्तिश्चैवनवलक्षणम् (for °) —(L. 7405) G(ed.) विष्णुभक्तेषु य भक्ता (for °) —G(ed.) om. (hapl.) lines 7406–7407 —(L. 7406) G3 सत्कथा (for त°) M1 भक्ता (for सक्ता) D1 G1 M1 सत्कर्मसु (for स°) —D1 om. (hapl.) lines 7408–7409 —(L. 7408) M1 सुशोभना (for सदा भवेत्) —(L. 7409) M1 द्वेषे (for चेष्टे) M1 य पश्यन्ति नरोत्तमा (for °) —(L. 7410) D1 पित्रोश्चैव (for मातापित्रोः) G1 गृहार्चायां (for महार्चन) —(L. 7412) D1 गायत्र्यां वैष्णवे स्तुतौ, G1 °त्र्यां वैष्णवस्तुतौ (for °) —G3 om. lines 7413–7424 —After line 7424, D1 ins.

260** वैश्वदेवरता ये च बलिकर्मरताश्च ये ।
ये चातिथिप्रियकरास्ते वै भागवतोत्तमाः ॥
तुलसीरोपणपरा वन्दने पूजनेऽनिशम् ।
पालने सेवने सत्कारे वै भागवतोत्तमाः ॥

—G3 om. lines 7427–7428 —(L. 7429) M1 ते पश्यन्ति नरोत्तमा (for °) —G(ed.) om. lines 7430–7437 —(L. 7430) D1 दाने (for स्नाने) D1 G1 विष्णौ (for होमे) —(L. 7440) G(ed.) महेश्वरे (for प्रातःस्नाने) G3 M1 रतिर् (for मतिर्) —(L. 7446) G3 वृद्धान्गुरूंस्तथा प्राज्ञान् (for °) D1 तथातिथीन् (for दिने दिने) —(L. 7448) G1 2 यतीनां (G3 °तिनां) सगृहीतानां (for °) —(L. 7449) G1 शुचीनां विष्णुभक्तानां (for °) —(L. 7450) G3 सदा भक्तियुता नराः (for °) —(L. 7453) G1 2 सदा (for विद्या) D1 G3 M1 ते वै भागवतोत्तमाः (for °) —(L. 7454) G3 वाहणेन (for पौरुषेण) —G3 om. lines 7455–7458 —(L. 7455) D1 G1 M1 ते वै भागवतोत्तमाः (for °) —After line 7455, D1 G1 M1 ins.

